Approved by the Directors of Public Instruction, Madras, Bihar and Mysore.

श्रीशिवः शरणम्

September, 1953 [ प्रथमा संख्या

अ

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## Next Month.

As'oka Inscription. Rasamañjarī.
Rabindranath's Short story.



*Office* : 81, Shyambazar Street, Calcutta—4
Annual Subscription : Rupees Three only.
This number—Annas Eight
Foreign—Rupees Four

# मञ्जूषाया नियमावली

मञ्जूषाया वार्षिकं मूल्यं रूपकत्रितयम्। अ
वर्षारम्भः। ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम्।
२। प्रतिसौरमासं दशमदिने (आङ्लमासस्य चतु
8I, Shyambazar Street, Calcutta 4 इत्यतो मञ्जूषा प्रक.

## काव्यालङ्कारसूत्रवृत्तिः ( वामनविरचिता ५।१ )

अभिनवविमदविस्तृतटीकोपेता — Rs. 2/-

Convocation Address in Ancient India — -12-

**Popular Etymology**— Re. 1/-

**শব্দকথা**— ২\

ইহাতে সরল ও সরসভাবে বাঙ্গালা ভাষায় চলতি ভুলগুলির আলোচনা করা হইয়াছে, সংস্কৃত ব্যাকরণের দিক্ দিয়া, বাঙ্গালা ভাষার দিক্ দিয়া, ভাষাতত্ত্বের দিক দিয়া, বঙ্গদর্শন প্রভৃতি হইতে ভূরি ভূরি উদাহরণ উদ্ধৃত করিয়া শব্দ ও শব্দসৃষ্টির শুদ্ধি ও অশুদ্ধি বিবেচিত হইয়াছে। ওত-প্রোতশব্দে বিসর্গ আছে কি না, যদি থাকে প্রথম 'ত'র পরে আছে, না দ্বিতীয় 'ত'র পর আছে, না উভয় 'ত'র পরে আছে. 'সঠিক' শব্দ ঠিক কি না, 'ব্যবহারিক' ব্যবহারযোগ্য কি না, আবশ্যক ও আবশ্যকতায় প্রভেদ কি, প্রভৃতি আলোচিত হইয়াছে। "সোনার পাথরবাটি" প্রবন্ধে সংস্কৃত, বাঙ্গালা, ইংরাজী প্রভৃতি নানা ভাষার সোনার পাথর বাটী জাতীয় শব্দগুলি সন্নিবিষ্ট হইয়াছে। ক্রিয়াবিশেষণ প্রবন্ধে বাঙ্গালা, ইংরাজী ও ফরাসী ক্রিয়ার বিশেষণগুলির মূল অর্থ বিবেচিত হইয়াছে; "সন্ধির কথায়" সন্ধির বৈজ্ঞানিক ব্যাখ্যা ও বাঙ্গালা ইংরাজী লাটিন প্রভৃতি ভাষার সন্ধি প্রদর্শিত হইয়াছে; সন্ধি, ষত্ব ও ণত্ব সম্বন্ধীয় নিয়মগুলি সরলভাবে বোঝান হইয়াছে ও বাঙ্গালা উপন্যাসাদি হইতে শত শত দৃষ্টান্ত সন্নিবিষ্ট হইয়াছে।

**ঊষার আলো**—ছোট ছোট হাসির গল্পের সমষ্টি— ৷৹

**নক্ষত্রমালা**—ধর্মবিষয়ক শ্লোক, সরল ব্যাখ্যা ও অনুবাদ ।৹

**Several complete sets of Vols. IV, V, VI and VII (450 pp. each) of the Manjusha are still available for Rs. 6/8/- per volume and only a few sets of Vols. I-III are available at Rs. 5/12/- for the lot.**

**श्रीविश्वनाथ-चट्टोपाध्यायः।**

८१ श्यामबाजार ष्ट्रीट्, कलिकाता ४

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दवतम् ॥

अष्टम-वर्षे

# मञ्जूषा

प्रथमा संख्या

## आभाणकादि

Greek. Ho sophos en autōi peripherei tēn ousian.

The wise man carries his possessions within him.

प्राज्ञस्तावत् स्वस्मिन्नेव सर्वं स्वं सम्भरति ।

Latin. Omnia mecum porta mea.

I carry all my possessions with me.

ज्ञानिनस्तावदात्मारामाः । प्रज्ञैव तेषां सर्वस्वम् । अत एव न किमपि तेषां बाह्यैर्विभवैः प्रयोजनम् । अत एव मिथिलाया ज्वलनवार्त्तामुपलभ्य राजर्षिणा जनकेनोक्तम्—मिथिलायां प्रनष्टायां न मे नश्यति किञ्चनेति । अत एव नौव्यसते विपन्नः Simonides-महोदयः अहो, मय्येव तिष्ठति सर्वस्वं मदीयम् इत्युक्त्वा नावस्तटमुत्पतितवान् । तस्य सहचरा द्रव्यादिरक्षणव्याकुला द्रव्यभारेण सीदन्तः समुद्रे स्खलिताः पञ्चत्वमापन्नाः ।

प्रथमतस्तावद् खीस्तजन्मनः पूर्वं षष्ठे शतके ग्रीसभिजनेन Bias-महोदयेनैतदुक्तम् । स खलु ग्रीसीयानां सप्तमनीषिणामन्यतम एवासीत् । ततश्च व्यतीतेषु सुबहुषु वर्षेषु Fanny Bias-समाख्यया गायिकया स्वीयं वदनकमलं शरीरयष्टिं च निर्दिश्योक्तम्, मदीयः पूर्वज इवाहमपि सर्वस्वं मयैव साकं वहामि । इति ।

Greek. To me kakōs phronein theou megiston dōrou.

To think no folly is Heaven's best gift.

इदं तावद्देवस्य महिष्ठं दानं यन्मौर्ख्यंस्यामननम् ।

महत्तमोऽयं प्रसादो देवस्य यज्जनो मनसा मौर्ख्यं न मनुते ।

The fly sat upon the axletree of the chariot wheel and said, What a dust do I raise?

अक्षधुरि सुखासीना मक्षिकैकावदत् पुरा ।
उत्थाप्यते मया मार्गे पांशुराशिरहो कियान् ॥

रथयात्रा लोकारण्य महा धुमधाम—
भक्तेरा लुटाये पथे करिछे प्रणाम ।
पथ भावे 'आमि देव', रथ भावे 'आमि',
मूर्त्ति भावे 'आमि देव', हासे अन्तर्यामी ।

रवीन्द्रनाथ ठाकुर ।

रथयात्रा प्रवृत्ताद्य डम्बरेण महीयसा ।
जनाश्च लुठिता मार्गे प्रणमन्ति सभक्तिकम् ॥
अहं देव इति वर्त्म मन्यते च तथा रथः ।
तथैव मन्यते मूर्त्तिः स्वयं देवश्च कक्खति ॥

---

## नाणकोत्कीर्णा लिपयः

१। पन्तलेवस्य ताम्रमुद्रासु लेखाः (१६०—१५५ खृः पूः)

*Basileo:s Pantaleontos.*

ततश्चापरपृष्ठे ब्राह्मया लिप्या—रजने पतलवस (राज्ञः पन्तलेवस्य)।

*Basileo:s*—genitive singular of *basileus* king. Etymology uncertain. *Pantaleontos*—gen. s. of *Pantaleon*, सर्वसिंहः, सर्वदमनः

२। एवुक्रतिदस्य राज्ञः (१७५-१५५ खृः पूः)

*Basileo:s megalou Eukratidou.*

अपरपृष्ठे—रजस महतकस एउक्रतिदस (राज्ञः महतः एवुक्रतिदस्य)।

*Megalou*—gen. s. of *megas* great. *Eukratidou*—gen. s. of *Eukratides*, son of Eukratos well-tempered, temperate, mild.

# हुविष्कस्य[1] शिलालेखः

सिद्धम् । संवत्सरे अष्टाविंशे गुर्पिये[2] (Gorpiaios समाख्ये मासे) दिवसे प्रथमे इयं पण्यशाला प्राचीनीकेन सरुकमाणपुत्रेण खरासलेर-पतिना वकनपतिना अक्षयनीविः[3] दत्ता । ततः वृद्धितः मासानुमासं शुद्धस्य चतुर्दश्यां पुण्यशालायां ब्राह्मणशतं परिवेष्टव्यम् । दिवसे दिवसे च पुण्यशालाया द्वारमूले धार्यं खाद्यसक्तूनाम् आढकाः[4] त्रयः, लवणप्रस्थ एकः, शुक्तप्रस्थ[5] एकः, हारितकलापकघटकाः त्रयः, मल्लकाः पञ्च । एतत् अनाथानां कृते दातव्यं बुभुक्षितानां पिपासितानाम् । यत् अत्र पुण्यं तत् देवपुत्रस्य षाहेः[6] हुविष्कस्य । येषां च देवपुत्रः प्रियः तेषामपि पुण्यं भवतु । सर्वस्याश्च पृथिव्याः पुण्यं भवतु । अक्षयनीविः दत्ता,......श्रेण्यां [7] पुराणशतानि सार्धपञ्च समिताकरश्रेण्यां च पुराणशतानि सार्धपञ्च ।

---

[1] कुशनसम्राट् हुविष्कः प्रायेण खृस्तीये द्वितीये शतके भारतस्य कञ्चन भागं शशासेत्यैतिहासिकाः ।

[2] गुर्पिये —ho Gorpiaios (mēn) मासीदनीयमासविशेषस्य संज्ञा गुर्पिय इति । प्रायेणास्माकं भाद्रपदः ।

[3] अक्षयनीविः—यद् धनं कथमपि प्रत्यादातुं न शक्यते, यस्य च मूलं सर्वथा परिरक्षितव्यं वृद्धिरेवोपयोक्तव्या । Permanent endowment.

[4] आढकः—"षट्पञ्चाशदधिकद्विशतमुष्टिः । व्यवहारे षोडशसेरो विंशतिसेरो वा । वैद्यकमतेऽष्टशरावपरिमाणम् ।" प्रस्थः—आढकचतुर्थांशः ।

[5] मृन्मयादिशुचौ भाण्डे सगुडं क्षुद्रकाञ्जिकम् । धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते ॥

[6] षाहेः—राज्ञः, Persian *Shah* king, ruler, Skt. *kṣi* to rule. Skt. *kṣatram* rule.

[7] पुराणः—कार्षापणपर्यायः ३२ रत्तिकासम्मितः रजतमुद्राविशेषः ।

## पाठ-विमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

कथासरित्सागरे ७१-तमे तरङ्गे दृश्यते—

भ्रमंश्च तत्र केनापि पुंसा मार्गगतेन सः ।
अपश्यता मार्गवशादंसेनांसेऽभ्यहन्यत ॥
ततः सोऽभ्यभवत् क्रुद्धो युद्धायाह्वयति स्म तम् ।
स चाहतः पुमान् प्रौढस्तत्कालोचितमभ्यधात् ॥
किं ताम्यस्यविचार्यैव विचारयसि चेत्ततः ।
वाच्यो निशापतिर्येन निशैषा न प्रकाशिता ॥
धाता वा येन पूर्णोऽस्य नाधिकारोऽत्र निर्मितः ।
येन वैराणि जायन्ते तमसीदृश्यकारणात् ॥ इति ।

अत्र आह्वयतीति पदमशुद्धम्, स्पर्धायामाङः [१।३।३१] इति सूत्रणात्मनेपदविधानात् । अतः "ततः सोऽप्यभवत् क्रुद्धो युद्धायाह्वयते च तम्" इति पठनीयमिति प्रतिभाति ।

---

## विचित्रो विपाकः

धनिकधुरीणः । वैद्यराज, भृशमस्वस्थशरीरा मे दुहिता । यथा सा शीघ्रं रोगमुक्ता स्यात् तथा विधीयताम् ।

भिषक्श्रेष्ठः । (रोगिणीं निरीक्ष्य) भद्रमुख, arthritic psoriasis समाख्येन चिरस्थायिना प्रदाहिना चर्मरोगेण समाक्रान्ता भवतो दुहिता ।

धनिकः । कदा नु सा निरामया स्यात् ?

भिषक् । रोगमुक्तेः सम्भावना प्रायेण नास्त्येव । अचिरादेवासावत्यन्तायैव चलनशक्तिरहिता शय्याश्रयिणी भविष्यति । (निष्क्रान्तः)

धनिकः । अहो, न खलु सुकुमारीं कन्यकां निरानन्दां व्याधिक्षीणां द्रष्टुं पारयामि । दक्षिणं बाहुमपि मे दद्यां यदि सा रोगमुक्ता भवेत् ।

ततश्च कन्यायाश्चक्रास्यन्द्याः (wheeled chair) प्रवेशाय धूमशकटस्य पश्चाद्भागे द्वाराणि योजितानि। एकदा च पत्न्या दुहित्रा च साकं धूमशकटेनावकाशं यापयन् धनिकोऽसौ धूमशकटे समाहतः सशब्दं निपतितः, तस्य च दक्षिणो बाहुः स्कन्धाद् विच्छिन्नः। क्षतरोहणाच्च पूर्वमेव दुहिता तस्योल्लाघतामापन्ना। दैवैराकर्णितं तस्य करुणं प्रार्थनमिति प्रतिभाति।

---

## महाभाष्यरत्नमञ्जूषा

व्यक्तवाचां समुच्चारणे॥ १।३।४८

[ व्यक्तवाचां समुच्चारणम् सहोच्चारणम्। तत्र वर्तमानाद् वदतेरात्मनेपदं भवति। काशिका। ]

व्यक्तवाचामिति किमर्थम् ?

वरतनु संप्रवदन्ति कुकुटाः।

व्यक्तवाचामित्युच्यमानेऽप्यत्र प्राप्नोति। एतेऽपि हि व्यक्तवाचः। आतश्च व्यक्तवाचः—कुक्कुटेनोदिते उच्यते कुक्कुटो [1]वदतीति।

एवं तर्हि व्यक्तवाचामित्युच्यते सर्व एव हि व्यक्तवाचस्तत्र प्रकर्षगतिर्विज्ञास्यते—साधीयो ये व्यक्तवाच इति। के च साधीयः[2] ? येषां वाच्यकारादयो वर्णा व्यज्यन्ते। न चैतेषां वाच्यकारादयो वर्णा व्यज्यन्ते। आतश्च व्यज्यन्ते, एवं ह्याहुः कुक्कुटाः—कुक्कुडिति। नैवं त आहुः। अनुकरणमेतत् तेषाम्।

अथवा नैवं विज्ञायते व्यक्ता वाग् येषां त इमे व्यक्तवाच इति। कथं तर्हि ? व्यक्ता वाचि वर्णा येषां त इमे व्यक्तवाच इति।

[ अत्रत्यायां पदमञ्जर्यां भाषायां सङ्करस्य सुमनोहरमुदाहरणमुपलभ्यते। तथाहि हरदत्तनोक्तम्—यद्यपि कुक्कुटादिरुतमपि स्वरूपेण

---

[1] अत्र वदतीत्यौपचारिकं वेदितव्यम्। तुरीयं वाचो मनुष्या वदन्तीति श्रुतेर्मनुष्या एव व्यक्तवाचः।

[2] व्यक्तवाचः इति शेषः।

व्यक्तम्—अस्येदं रूपमस्येदमिति, मनुष्यवाक् तु व्यक्ततरा भवति वर्णात्मकत्वाद् अर्थावगतिहेतुत्वाच्च। अतस्त एव गृह्यन्ते। शुकशारिकादीनां तु पुरुषप्रयत्नवशेन क्वाचित्कं व्यक्तवाक्त्वं न स्वाभाविकमिति न तेषां ग्रहणम्। इति।

अत्रेदमवधेयम्। यद्यपीत्यस्यानन्तरं तथापीत्यपेक्ष्यते, अत एव यद्यपीति पदं वा निष्कासनीयं तुस्थाने वा तथापीति पठनीयम्।]

---

## वर्तन्त एव बहवः

"अहो नीचाशयत्वमस्य नरस्य! अहं तावद् विपदि पतितः पञ्चरूप्यकमात्रं ऋणरूपेण प्रार्थितवान्, स कथमपि दातुं न सम्मतोऽभवत्। ईदृशः पाषण्डो जगत्यपरो विद्यते वा?"

"बहवः खलु विद्यन्ते। दृश्यतां तावद्, अहमेव तथाविधोऽपरो भवतः पुरत एव तिष्ठामि।"

## सर्वोर्णा

भद्र आपणिक, त्वया तावदुक्तमिदं प्रावरणं सर्वोर्णमयमिति। मया पुनरेतस्याभ्यन्तरे पत्रखण्डमुपलब्धम्, तत्र सर्वकार्पासमिति विलिखितं वर्तते। किमत्र रहस्यम्? परमार्थत इदं सर्वथोर्णामयं वा कार्पासं वा?

आर्य, सर्वथोर्णमयमेवैतत्। केवलं कीटानां निवारणार्थं सर्वकार्पासम् इति तत्र विलिखितम्। कीटाः प्रायेणोर्णामयान्येव वस्त्राणि दशन्ति, कार्पासेषु तेषां विशेषतः प्रीति र्नास्तीति।

## धूर्ततरः

धरणीधरोऽतीव धूर्त इति पल्ल्यां प्रसिद्धिरासीत्। एकदासौ व्यवहाराजीवस्य सकाशं गतः। तञ्चापृच्छत्, "बालकेनैकेनोपलखण्डं निक्षिप्य मम वातायनं भग्नम्। किमत्र प्रतिविधानम्?" इति।

व्यवहाराजीवेनोक्तम्, तस्य पित्रा वातायनस्य संस्कारार्थं मुद्राः प्रदेया इति।

"तर्हि त्वमेव तावद् रूप्यकचतुष्टयं मे प्रयच्छ, तवैव पुत्रेण वातायनस्य विकृतिर्विहितेति।"

"एवं ननु ? सरलोऽयं मार्गः। ममोपदेशस्य मूल्यं दश रूपकाः। ततो रूप्यकचतुष्टयं गृहीत्वा शिष्टं रूप्यकषट्कं मे प्रदीयताम्।"

## सावधानतायाः परा काष्ठा

प्रियनाथेन प्रभोः समीपमागत्योक्तम्—आर्य, यस्यां पेटिकायामत्यावश्यकानि पत्राणि संरक्ष्यन्ते तस्याः कुञ्चिका नष्टेति।

द्वितीयापि कुञ्चिका मया ते दत्ता। कच्चित् सापि हारिता त्वया।

नहि नहि, आर्य। जानाम्येव कुत्र सा वर्तते।

तर्हि तयैवोद्घाट्यतां पेटिका।

मर्षयतु मर्षयतु, आर्य। यथा सा द्वितीया कुञ्चिका न नश्येत् तथा सा पेटिकायामेव रक्षिता।

---

## सायणभाष्य-पाठविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

सायणभाष्ये लिपिकरप्रमादादन्तरान्तरा पदानां स्थानविपर्यासः परिदृश्यते। तथाहि—

दिव्या अङ्गारा इरिणे न्युप्ताः।
शीताः सन्तो हृदयं निर्दहन्ति॥

[ ऋ० सं० १०।३४।९ ] इत्यर्धर्चस्य भाष्ये दृश्यते—

"दिव्या दिवि भवा अपक्वता अङ्गारा अङ्गारसदृशा अक्षा इरिणे इन्धनरहिते आस्फारे न्युप्ताः शीताः शीतस्पर्शाः सन्तोऽपि हृदयं कितवानामन्तःकरणं निर्दहन्ति पराजयजनितसन्तापेन भस्मीकुर्वन्ति इति।

टिप्पण्याम् MaxMüller-महोदयेन विलिखितम्—अपक्वताः A. CA. $B_4$. $C_2$. $B_1$. अपा क्षताः CB. म-ग्रन्थे यद् दृष्टं पुण्यपत्तन-ग्रन्थेऽत्र तदेव मुद्रितम्, पाठान्तरं पुनरवज्ञयैवोपहृतम्।

अत्रेदमवधेयम्। भाष्ये "दिवि भवा" इत्येतस्मादनन्तरम् अपकृताः इति हस्तलिखितेषु पुस्तकेषु वर्तते, क्वचिच्च अपा क्षताः इति वर्तते। अङ्गारा इत्यस्याकारे परेऽपि शब्दयोरनयोर्विसर्जनीयस्य लोपो न विहित इत्यपि विशेषतो दृष्टिमाकर्षति। न्युप्ता इति मूलस्थस्य कठिनशब्दस्य प्रतिशब्दोऽपि भाष्ये नोपलभ्यते। हस्तलिखितद्राविडलिपिमयपुस्तकेषु पवयोर्विशेषोऽध्यवसातु दुष्कर इति न खल्वेतन्न विदितं लिपिकुशलानाम्। इकारश्च (ि) त्वरया विलिखितोऽस्पष्टोपरिभागो वा आकाररूपं (ा) परिगृह्णाति। अत एव यत् साम्प्रतम् अपकृताः इति वा अपा क्षता इति वा दृश्यते तन्मूलतः अवक्षिप्ताः इत्येव। तच्च 'न्युप्ताः'-शब्दस्य प्रतिशब्दत्वेन प्रयुक्तं भाष्यकृद्भिः, तस्य चानन्तरं शीता इति पदस्य शकारस्य सद्भावाद् विसर्गस्य लोपो न विहितः। १०।२७।१७-भाष्ये 'न्युप्ताः'-शब्दस्य प्रतिशब्दो दृश्यते निक्षिप्ताः इति, अस्य च सूक्तस्य [ १०।३४ ] पञ्चममन्त्रभाष्ये दृश्यते न्युप्ताः कितवैरवक्षिप्ताः इति। अत एव "दिव्या दिवि भवा अङ्गारा अङ्गारसदृशा अक्षा इरिणे इन्धनरहिते आस्फारे न्युप्ता अवक्षिप्ताः शीताः" इति पठनीयमिति प्रतिभाति।

---

## मुग्धपथिककथा

कश्चिन्मुग्धोऽध्वगस्तीर्त्वा कृच्छ्रात्तृष्णातुरोऽटवीम्।
नदीं प्राप्यापि न पपौ वीक्षाञ्चक्रे परं जलम्॥
तृषितोऽपि पिबस्यम्भः किं नेत्युक्तोऽत्र केनचित्।
इयत् कथं पिबामीति मन्दबुद्धिरुवाच तम्॥
किं दण्डयति राजा त्वां सर्वं पीतं न चेत् त्वया।
इति तेनोपहसितोऽप्यम्बु मुग्धः स नापिबत्॥
एवं न शक्नुवन्तीह यद् यत् कर्तुमशेषतः।
यथाशक्ति न तस्यांशमपि कुर्वन्त्यबुधाः॥

A certain foolish traveller, tormented by thirst, having with difficulty got through a wood, reached a river; however he did not drink of it, but kept looking at the water. Some one said to him, "Why do you not drink water though you are thirsty?" But the blockhead answered, "How can I drink so much water as this?" The other person ridiculed him saying, "What! Will the king punish you if you do not drink it all up?" But still the foolish man did not drink the water. Thus fools do not perform all that they can of what they cannot do in its entirety.

---

## नामरहस्यम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

कस्य वा न सुविदितं सत्यभामेति नाम भारतवर्षीयस्य? सा खलु भगवतः श्रीकृष्णस्य पत्न्येवासीत्। कदाचित् सा सत्येति कदाचिच्च भामेति च व्यपदिश्यते स्म। अत एव महाभाष्ये दृश्यते— "अथवा पूर्वपदलोपोऽत्र द्रष्टव्यः। अत्यन्तसिद्धः सिद्ध इति। तद् यथा देवदत्तो दत्तः सत्यभामा भामेति।" "अथवा दृश्यन्ते हि वाक्येषु वाक्यैकदेशान् प्रयुञ्जानाः पदेषु च पदैकदेशान्। वाक्येषु ताव-द्वाक्यैकदेशान्। प्रविश पिण्डीम्, प्रविश तर्पणम्। पदेषु पदैकदेशान्। देवदत्तो दत्तः, सत्यभामा भामेति।" इति च।

इदानीं सत्यभामाशब्दस्यार्थो विचार्यते। सत्यः भामः यस्याः सेति बहुव्रीहौ सत्यभामेति पदं निष्पन्नम्। भामशब्दश्च भाधातुनिष्पन्नो दीप्त्यर्थकः, भामधातुनिष्पन्नश्च क्रोधार्थकः। निघण्टौ च क्रुध्यति-कर्मसु धातुषु भामते इत्युपलभ्यते, क्रोधनामसु च भाम इति। अत एव (१)यस्याः शरीरशोभा न प्रसाधनादिकृता परं पारमार्थिकी सा सत्यभामा, (२) यस्याश्च अनिर्जयेन द्विषताममर्षो न प्रशाम्यति, या खल्ववन्ध्यकोपा सापि सत्यभामा। चण्डी भामिनीत्यादीनि[1] नामानि द्वितीयमर्थं समर्थयन्ते।

---

[1] "सुन्दरी रमणी रामा, कोपना सैव भामिनी" "चण्डस्त्वत्यन्तकोपनः" इति चामरः।

भामधातुविषये पुनर्विप्रतिपद्यन्ते विपश्चितः। भ्रमधातोरेवेदं प्राकृतं रूपम्, तेन संक्षोभः क्रोध इत्यर्थ इति केचित्। भी-धातु-निष्पन्न एवायं शब्दो भीम-शब्दस्यैव ज्ञातिरिति बहवः पाश्चात्याः शब्दार्थतत्त्वविदः। वयं तु मन्यामहे दीप्त्यर्थकभाधातुनिष्पन्नो भामशब्दः क्रोधार्थे पर्यवसितः। वदननयनलौहित्यादिकरणकश्चित्त-विकार एव क्रोध इति व्यपदिश्यते इति। अत एव वङ्गभाषायां राग-शब्दस्यार्थः क्रोध इति। (क्रमशः)

---

## पण्डित-मूर्खयोः

[ श्रीअनन्तकुमार शास्त्री ज्योतिषाचार्यः ]

पुरा विक्रमपुरे सार्वभौम-तर्कालङ्कारौ भ्रातरौ पाण्डित्येन जगद्व-रेण्यावपि दारिद्र्यनिपीडितावास्ताम्। तयो र्वासगृहं तृणाच्छादित-जर्जर-वंशखण्डोपरि कथमपि दण्डायमानमिवासीत्। एकदा वायव्यां प्रलयघनमिव घनधूम्राभ-मेघजालमालोक्य उद्विग्नः सार्वभौमः पृच्छति, भ्रातः! वायव्यां प्रलयघन इव दृश्यते, आयात्येव प्रभञ्जनः, गृहस्तम्भाश्च जीर्णाः, अतः किमिदानीं कर्त्तव्यम्? तर्कालङ्कारः प्राह, आर्य्य! उपायश्चिन्त्यताम्। सार्वभौमः कथयति—अत्र बहिःस्तम्भ-निवेशनमेवोपायः। अत उभावेव दात्रमादाय वंशाटवीतो वंशमेकं छिन्नवन्तौ। ततश्च पृच्छति सार्वभौमः। अहो वंशोऽयं कुत्र सन्नि-धातव्यः? तर्कालङ्कारेणाभिहितम्—आर्य्य, जीर्णगृहे बहिःस्तम्भ-रोपणविधिः स्मृतिशास्त्रे नास्ति, न्यायशास्त्रेण चिन्त्यताम् इति। सार्वभौमेनोक्तं—न्यायशास्त्रेऽपि नैष विधिः परिलक्ष्यते, तत् सत्वरं चिन्त्यतामुपायः। समायाति प्रभञ्जनः। तर्कालङ्कारेण विचिन्त्याभि-हितम्—आर्य्य, शास्त्रे यत् कण्ठतो नोक्तम्, तत्तु युक्त्या विचार्य्यम्। दृश्यते हि "क्षतस्थाने औषधं प्रयुञ्जीत" इति। कण्ठे चेत् क्षतं तत्रैव प्रलेपो देयः, नतु पादे। अत्रापि वायव्यां मेघः समुदेति, प्रभञ्जनोऽपि तत एवागच्छति, अतो वंशाग्रञ्च तस्यामेव दिशि स्तम्भकण्ठलग्नच्छदकण

योजनीयमिति। तदाकर्ण्य सार्वभौमः सोच्छ्वासं ब्रूते—भ्रातः, सुष्ठु अभिहितं धीमता। उत्तिष्ठ सत्वरम्। इत्युक्त्वा उत्थाय उभावेव वायुकोणे स्तम्भकण्ठे वंशाग्रं बद्ध्वा तन्मूलन्तु भूमौ निधाय धृत्वा सावधानौ तिष्ठतः। यदा यदा प्रबलं वाति प्रभञ्जनः तदा तदवोभौ दुर्गा दुर्गेति व्याहरन्तौ तद्वंशं शक्त्या व्यचालयताम्। प्रबलवातवेगेनोभयोर्बाहुबलेन च स्वल्पेनैव कालेन तद्गृहं पपात धरणीतले।

ततः सार्वभौमो निःश्वस्याह, भ्रातः! ईश्वरेण विरोधे को विजयते? श्रान्तोऽस्मि तदेहि, इदानीं ताम्रकूटं सेवनीयमिति।

---

## रस-मञ्जरी

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

"परिहासविजल्पितं सखे परमार्थेन न गृह्यतां वचः।"

अध्यापकः। वत्स सुभाष, निर्धारणे का वा विभक्तिर्भवति?

सुभाषः। षष्ठी सप्तमी च।

अध्यापकः। सम्यक्। उदाहरणेन विशदीकुरु।

सुभाषः। आर्य, षष्ठ्या उदाहरणम्—पर्वतानां हिमालयः श्रेष्ठः। सप्तम्याः—कविषु कालिदासः श्रेष्ठः इति।

गवेन्द्रः। आर्य, क्व वा षष्ठी स्यात् क्व वा सप्तमी?

अध्यापकः। अरे मूढ, एतदपि न जानासि? उदाहरणत एव बहुषु स्थलेष्वाचार्याणामभिप्रायो विज्ञायते। पर्वताः प्राणैर्विहीना अतः तत्र षष्ठी; कवयः प्राणैः सम्पन्ना, अतः तत्र सप्तमी। अत एव प्राणिषु सप्तमी स्यात्, अप्राणिषु च षष्ठीति विभावनीयम्।

मनीषः। आर्य 'पुष्पेषु जाती' इति पठितमस्माभिः। अत्राप्राणिनि पुष्पशब्दे कथं सप्तमी?

अध्यापकः। वत्स, पुष्पाणामपि प्राणा वर्तन्ते। उक्तञ्च मनुना—

तमसा बहुरूपेण वेष्टिताः कर्महेतुना।
अन्तःसंज्ञा भवन्त्येते सुख-दुःखसमन्विताः॥

इति। अस्यार्थः—एते वृक्षादयः बहुरूपेण विचित्र-दुःखफलेन कर्म-हेतुना अधर्मकर्महेतुकेन तमसा तमोगुणेन वेष्टिता व्याप्ताः सुखदुःख-समन्विताः सूर्यस्य सन्तापाधिक्याद् दुःखं जलधरजलसम्पर्कात् सुखमनुभवन्तः अन्तःसंज्ञा भवन्ति। बहिः कथनादिकार्यस्याभावात् अन्तः-संज्ञा इत्युच्यन्ते। जगदीशचन्द्र-वसुमहोदयेनापि सुसूक्ष्मयन्त्रादि-साहाय्येन प्रतिपादितं वृक्षादीनामपि प्राणा वर्तन्त एव। अत एव "पुष्पेषु जाती" इत्यत्र सप्तमी निराबाधैव।

---

## पुस्तकपरिचयः

**श्रीरामदासचरितम्।** पण्डितया क्षमा रावदेव्या विरचितं संस्कृतभाषामयं महाकाव्यम्। N. M. Tripathi Ltd., Princess Street, Bombay 2 इत्यतः प्रकाशितम्। मूल्यं रूपकपञ्चकमात्रम्।

विरलाः खलु पण्डितक्षमादेवीसदृशाः कविप्रवराः साम्प्रतं भारते वर्षे। बहुशः खलु समास्वादितानि मञ्जूषाया वाचकमहाभागै-रमृतमयान्येतस्या आख्यानानि। इदानीं श्रीमतः साधो रामदासस्य चरितमवलम्ब्य विरचितमिदं त्रयोदशसर्गकं महाकाव्यं पण्डितवर्यया क्षमादेव्या। प्रथमतस्तावत् साधोश्चरित्रम्, तत्रापि क्षमादेव्याः संग्रथनम्, तत्रापि निर्णयसागरे मुद्रणम्, तत्रापि राधाकृष्णन्-महोदयस्या-भाषणम्, तत्रापि सुललिताङ्गलभाषामयानुवादः इत्यहो सौभाग्यतोऽ-स्माकं महतीयमुत्सवपरम्परा। अवश्यं संग्राह्यमिदं पुस्तकं संस्कृत-साहित्य-रसिकैः, अध्येयतया चेदं निदेष्टव्यं पाठशालासु। मुक्ताफल-सदृशैरक्षरैः कदलीदलकल्पेषु सुश्लक्ष्णेषु पत्रेषु मुद्रितस्य साङ्गलानुवादस्य राधाकृष्णनलिखिताङ्गलभाषामयोपोद्घातसमन्वितस्य त्रयोदशसर्गात्मकस्य परमरमणीयस्य संस्कृतभाषामयस्य काव्यस्यास्य मूल्यं रूप्यक-पञ्चकमात्रमिति सर्वैरपि क्रेतुं शक्यं पुस्तकमिदं क्रेष्यते च।

MANJUSHA ( Sanskrit Monthly Magazine )
*Registered No. C. 3278*



Printed and published by Sri Jyotish Chandra Chatterjee, B.A. from 81, Shyambazar Street, Calcutta—4. Printed at the Elm Press 63, Beadon Street, Calcutta—6.

*Approved by the Directors of Public Instruction, Madras, Bihar and Mysore.*

श्रीशिवः शरणम्

अष्टम-वर्ष ] December, 1953 [ चतुर्थी संख्या

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## Principal Contents





*Office* : 81, Shyambazar Street, Calcutta—4

Annual Subscription : Rupees Three only.

Foreign—Rupees Four.

# मञ्जूषाया नियमावली

मञ्जूषाया वार्षिकं मूल्यं रूपकत्रितयम् । आश्विन (Septembe[r])
मासतो वर्षारम्भः । ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम् ।

२ । प्रतिसौरमासं दशमदिने (आङ्ग्लमासस्य चतुर्विंशे दिवसे)
81, Shyambazar Street, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते ।

## काव्यालङ्कारसूत्रवृत्तिः ( वामनविरचिता ५।१ )

अभिनवविप्रदविरचितटीकोपेता — Rs. २।

Convocation Address in Ancient India — -12

**Popular Etymology**— Re. 1/

**শব্দকথা**— ২৲

ইহাতে সরল ও সরসভাবে বাঙ্গালা ভাষার চলতি ভুলগুলির আলোচনা করা হইয়াছে, সংস্কৃত ব্যাকরণের দিক্ দিয়া, বাঙ্গালা ভাষার দিক্ দিয়া, ভাষাতত্ত্বের দিক্ দিয়া, বঙ্গদর্শন প্রভৃতি হইতে ভূরি ভূরি উদাহরণ উদ্ধৃত করিয়া শব্দ ও শব্দসমষ্টির শুদ্ধি ও অশুদ্ধি বিবেচিত হইয়াছে। ওত-প্রোতশব্দে বিসর্গ আছে কি না, যদি থাকে প্রথম 'ত'র পরে আছে, না দ্বিতীয় 'ত'র পর আছে, না উভয় 'ত'র পরে আছে, 'সঠিক' শব্দ ঠিক কি না, 'ব্যবহারিক' ব্যবহারযোগ্য কি না, আবশ্যক ও আবশ্যকতায় প্রভেদ কি, প্রভৃতি আলোচিত হইয়াছে। "সোনার পাথরবাটি" প্রবন্ধে সংস্কৃত, বাঙ্গালা, ইংরাজী প্রভৃতি নানা ভাষার সোনার পাথর বাটী জাতীয় শব্দগুলি সন্নিবিষ্ট হইয়াছে। ক্রিয়াবিশেষণ প্রবন্ধে বাঙ্গালা, ইংরাজী ও ফরাসী ক্রিয়ার বিশেষণগুলির মূল অর্থ বিবেচিত হইয়াছে। "সন্ধির কথায়" সন্ধির বৈজ্ঞানিক ব্যাখ্যা ও বাঙ্গালা ইংরাজী লাটিন প্রভৃতি ভাষার সন্ধি প্রদর্শিত হইয়াছে; সন্ধি, ষত্ব ও ণত্ব সম্বন্ধীয় নিয়মগুলি সরলভাবে বোঝান হইয়াছে ও বাঙ্গালা উপন্যাসাদি হইতে শত শত দৃষ্টান্ত সন্নিবিষ্ট হইয়াছে।

***ঊষার আলো***—ছোট ছোট হাসির গল্পের সমষ্টি— ৸০

***নক্ষত্রমালা***—ধর্মবিষয়ক শ্লোক, সরল ব্যাখ্যা ও অনুবাদ ।০

**Several complete sets of Vols. IV, V, VI and VII (450 pp. each) of the Manjusha are still available for Rs. 6/8/- per volume and only a few sets of Vols. I-III are available at Rs. 5/12/- for the lot.**

**শ্রীবিশ্বনাথ-চট্টোপাধ্যায়ঃ।**

৮১ শ্যামবাজার স্ট্রীট, কলিকাতা ৪

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

December, 1953 | १८७५-शकीयपौ ष्य ८म-वर्षस्य चतुर्थी संख्या | Vol. VIII No. 4

## पारमार्थिको योगः

सुखेनैव भवेद् यस्मिन्नजस्रं ब्रह्मचिन्तनम् ।
आसनं तद् विजानीयान्नेतरद् दुःखनाशनम् ॥१॥
दृष्टिं ज्ञानमयीं कृत्वा पश्येद् ब्रह्ममयं जगत् ।
सा दृष्टिः परमोदारा न नासाग्रावलोकिनी ॥२॥
चित्तादिसर्वभावेषु ब्रह्मत्वेनैव भावनात् ।
निरोधः सर्ववृत्तीनां प्राणायामः स उच्यते ॥३॥
निरोधनं प्रपञ्चस्य रेचकाख्यः समीरणः ।
ब्रह्मैवास्मीति प्रवृत्तिः पूरको वायुरीरितः ॥४॥
ततस्त वृत्तिनैश्चल्यं कुम्भकः प्राणसंयमः ।
अयं चापि प्रबुद्धानामज्ञानां प्राणपीडनम् ॥५॥
विषमेऽप्यात्मतां दृष्ट्वा मनसश्चितिचिन्तनम् ।
समाहारः स विज्ञेयोऽभ्यसनीयो मुमुक्षुभिः ॥६॥

यत्र यत्र मनो याति ब्रह्मणस्तत्र वर्तनम् ।
मनसो धारणं चैव धारणास्य परा मता ॥७॥
ब्रह्मैवास्मीति यद्वृत्त्या निरालम्बतया स्थितिः ।
ध्यानशब्देन विख्याता परमानन्ददायिनी ॥८॥
निर्विकारतया वृत्त्या ब्रह्माकारतया पुनः ।
वृत्तिविस्मरणं सम्यक् समाधिर्ज्ञानसंज्ञकः ॥९॥
[ न नामधेयं स्तोत्रस्य ज्ञायतेऽस्य कथञ्चन ।
तथापि शङ्कराचार्यकृतिरेवेति कल्प्यते ॥
यमनियमरहितोऽष्टाङ्गो योग ईरितः ।
याथातथ्येन मुनिना पारमार्थ्येन मञ्जुलः ॥ रघुनाथः ]

---

## आभाणकादि

अनन्तरत्नप्रभवस्य यस्य
हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ [ कुमार० १।३ ]

'A mine of gems unnumbered, its loveliness has not been impaired by snow. For one single fault merges in a myriad of excellences, like the spot of the moon in her rays.'

एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोरिति यो बभाषे ।
[1]नूनं न दृष्टः कविना हि तेन[2]
दारिद्र्यदोषो गुणराशिनाशी ॥ [ घटकर्परः ]

'The poet who said, One single fault merges in a myriad of excellences, like the spot of the moon in her (myriad) rays, did not certainly see that the fault of poverty lays the axe to the root of all good qualities.'

---

[1] न तेन दृष्टं कविना समस्तं (=सम्यक्) दारिद्र्यमेकं गुणकोटिहारि ॥ ति पाठान्तरम् । [2] कविनापि तेन (=कविनापितेन) इति पा०

Chill penury repressed their noble rage
And froze the genial current of the soul.
Armut ist die grösste Plage
Reichtum ist das höchste Gut.
"Poverty's the greatest curse,
Riches are the highest good."

तरुकुलसुषमापहरां जनयन्तीं जगति जीवजातार्तिम् ।
केन गुणेन भवानीतात हिमानामिमां वहसि ॥

भामिनीविलासः १।२४

'O father of the spouse of S'iva, for what good do you bear the burden of this mass of snow which robs the vegetable kingdom of all its glories and which causes affliction to all creatures in this world ?'

तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन ।
स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम् ॥

काव्यादर्शः १।७

'So even a slight blemish should not be overlooked in a poem. Even a single white spot (of leprosy) is enough to convert a beautiful form into an ugly one.'

अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति ।
निखिलरसायनमहितो गन्धेनोग्रेण रसोन इव ॥

भामिनीविलासः १।७६

'A thing though possessed of ever so many excellences becomes blameworthy on account of a single fault, like garlic, the prince of elixirs, because of its offensive odour.'

सौरभ्यं भुवनत्रयेऽपि विदितं शैत्यं नु लोकोत्तरं
कीर्तिः किं च दिगङ्गनाङ्गनगता किं त्वेतदेकं शृणु ।
सर्वानेव गुणानियं निगिरति श्रीखण्ड ते सुन्दरान्
उज्झन्ती खलु कोटरेषु गरलज्वालां द्विजिह्वावली ॥

भामिनीविलासः १।७६

'Your fragrance is known throughout the length and breadth of the three worlds, your cooling power is extraordinary. Further, your fame has spread to the courtyards of the damsels of the quarters of space. Still listen to this one thing : All these sterling qualities of yours, O sandal tree, are devoured by this host of serpents emitting the flames of poison into your hollow trunks.'

यैस्त्वं गुणगणवानपि सतां द्विजिह्वैरसेव्यतां नीतः ।
तानपि वहसि पटीरज किं कथयामस्त्वदीयमौन्नत्यम् ॥ ११९

'O sandal tree, you bear on your bosom even those serpents, by whom you, possessed of many qualities as you are, have been rendered unfit to be served by the good : how can we describe your greatness ?'

---

## अशोकस्य शिलालेखः

( ३ )

देवानांप्रियः प्रियदर्शी राजैवमाह—द्वादशवर्षाभिषिक्तेन[1] मयेदमाज्ञप्तम् । सर्वत्र विजिते[2] मम युक्ताश्च[3] रज्जुकाश्च[4] प्रादेशिकाश्च[5] पञ्चसु पञ्चसु वर्षेषु अनुसंयानाय निर्यान्तु[6], एतस्या एवार्थायास्मै धर्मानुशस्तये यथान्यस्मा अपि कर्मणे । साधुर्मातरि च पितरि च शुश्रूषा, मित्र-संस्तुत-ज्ञातिभ्यो ब्राह्मणश्रमणेभ्यः साधु दानम्, प्राणानां साधुरनालम्भः,[7] अल्पव्ययता, अल्पभाण्डता[8] [च] साधुः । परिषदपि युक्तान् आज्ञापयिष्यति गणनायां[9] हेतुतश्च[10] व्यञ्जनतश्च[11] ।

---

[1]खुः पूः २५८ [2]राज्ये [3]राजकोषनियुक्ताः [4]रज्जुग्राहकामात्याः, करादिसम्प्रधारणार्थं रज्ज्वा भूमिपरिमाणादिकारिणः [5] प्रदेशशासकेभ्यः [6] परिदर्शनाय [7]अविनाशनम् [8]अल्पसञ्चयः [9]अनुसंयातॄणां यात्राया दूरत्वानुसारेण व्ययविशेषाणां परिगणने इति सरकारः [10]उद्देश्यानुसारेण—सः [11]अक्षरार्थानुसारेण यद्वा व्यङ्ग्यार्थानुसारेण—सः ।

[देवानां पिंयो पियदसि राजा एवं आह। द्वादशवासाभिसितेन मया इदं आञ्पितं। सर्वत विजिते मम युता च राजूके च पदिसिके च पंचसु पंचसु वासेसु अनुसंयानं नियातु एतायेव अथाय इमाय धंमानुसस्टिय यथा अञाय पि कंमाय। साधु मातरि च पितरि च सुसूसा मितासंस्तुतञातीनं बाम्हणसमणानं साधु दानं पणानं साधु अनारंभो अपव्ययता अपभांडता साधु। परिसा पि युते आञपयिसति गणनायं हेतुतो च व्यंजनतो च।]

---

## देवानांप्रियः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

अशोकानुशासनेषु देवानांप्रिय इति पदमुपलभ्यते। तस्यार्थोऽत्र विचिन्त्यते। "षष्ठ्या आक्रोशे" [ ६।३।२१ ] इत्यत्र वर्तन्ते पञ्च वार्त्तिकानि, तानि च यथा—

(१) षष्ठीप्रकरणे वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषूपसंख्यानम्,
(२) आमुष्यायणामुष्यपुत्रिकेत्युपसंख्यानम्,
(३) देवानांप्रिय इति च,
(४) शेपपुच्छलाङ्गूलेष शुनः संज्ञायाम्,
(५) दिवश्च दासे,

इति।

अत्रोपक्रमे "षष्ठीप्रकरणे" इति सन्दर्शनात् उपसंहारे च "दिवश्च दासे" इत्यस्यावलोकनान् मूलसूत्र आक्रोशे इति पदस्य जाज्वल्यमानत्वेऽपि वार्त्तिकेषु तस्य नानुवृत्तिरिति सम्भाव्यते। भाष्यकृतापि इतराभ्योऽपि दृश्यन्ते [ ५।३।१४ ] इति सूत्रस्य व्याख्याने प्रयुक्तम्—भवान् दीर्घायुः देवानांप्रियः आयुष्मान् इति। अत्र पूर्वोत्तरसाहचर्यात् देवानांप्रिय इति पदं प्रशंसावचनमेवेति प्रतीयते। अजेर्व्यघञपोः [ २।४।५६ ] इति सूत्रभाष्ये दृश्यते—

"एवं हि कश्चिद् वैयाकरण आह—कोऽस्य रथस्य प्रवेतेति।

सूत आह—अहमायुष्मन्नस्य रथस्य प्राजितेति।

वैयाकरण आह—अपशब्द इति।

सूत आह—प्राप्तिज्ञो देवानांप्रियो न त्विष्टिज्ञः। इष्यत एतद्रूपमिति।

अत्र देवानांप्रिय इति सोल्लुण्ठनोक्तिरिति प्रतीयते। अत एव कैयटेनोक्तं—देवशब्दो मूर्खवाची। मूर्खाणाञ्च प्रिया मूर्खा एव भवन्ति। अथवा सुखासक्तस्य शास्त्रेऽनभियोगोऽनेन प्रतिपाद्यत इति।

वस्तुतस्तु विपरीतलक्षणात्र बोद्धव्या—

उपकृतं बहु तत्र किमुच्यते
सुजनता प्रथिता भवता परम्।
विदधदीदृशमेव सदा सखे
सुखितमास्स्व ततः शरदां शतम्॥

इत्यत्र यथा। उक्तञ्च तत्र दर्पणकारेण—अपकारिणं प्रत्युपकारादिप्रतिपादनात् मुख्यार्थबाधो वैपरीत्यलक्षणः सम्बन्धः, फलमपकारातिशयः इति। एवमेवाङ्लभाषायामपि blessed-blest-प्रभृतयः शब्दाः प्रकरणादिवशादन्तरान्तरा विपरीतार्थबोधका उपलभ्यन्ते। यः खलु कथमपि कमपि कार्यविशेषं कर्तुं नेच्छति तेनोच्यते—I am blest if I will do it इति। महाब्राह्मणशब्दस्याप्येषैव गतिः। ( क्रमशः )

---

## लक्षणसंग्रहः

[ श्रीफटिकलाल-दासः ]

( ३ )

आश्रमलक्षणानि—मेखलाजिनदण्डेन ब्रह्मचारीति लक्ष्यते।
गृहस्थो दानवेदाद्यैर्नखलोम्ना वनाश्रिताः॥
त्रिदण्डेन यतिश्चैव लक्षणानि पृथक् पृथक्।
यस्यैतल्लक्षणं नास्ति प्रायश्चित्ती न चाश्रमी॥
—दक्षसंहिता।

आसनम्— अनायासेन येन स्यादजस्रं ब्रह्मचिन्तनम् ।
आसनं तद् विजानीयाद् योगिनां सुखदायकम् ॥

आसवः— शीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत् ।
मैरेयं धातकीपुष्पैर्गुडधानाम्लसंहितम् ॥

—माधवः ।

इङ्गितम्— इङ्गितं हृद्गतो भावो वहिराकार आकृतिः ।
[ आकृति ] —सज्जनः ।

इतिहासः— धर्मार्थकाममोक्षाणामुपदेशसमन्वितम् ।
पूर्ववृत्तकथायुक्तमितिहासं प्रचक्षते ॥

—महाभारतम् ।

इन्द्रियाणि— श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी ।
पायूपस्थं हस्तपादं वाक् चैव दशमी स्मृता ॥
बुद्धीन्द्रियाणि पञ्चैषां श्रोत्रादीन्यनुपूर्वशः ।
कर्मेन्द्रियाणि पञ्चैषां पाय्वादीनि प्रचक्षते ॥
एकादशं मनो ज्ञेयं स्वगुणेनोभयात्मकम् ।
यस्मिञ् जिते जितावेतौ भवतः पञ्चकौ गणौ ॥

—मनुसंहिता ।

ईतयः— अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः ।
प्रत्यासन्नाश्च राजानः षडेत ईतयः स्मृताः ॥

—कामन्दकः ।

———

## सम्प्रसारणम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

इग् यणः सम्प्रसारणम् [ १।१।४५ ] इति पाणिनीयं सूत्रम् । यकारस्थाने इकारः, वकारस्थाने उकारः, रेफस्थाने ऋकारः, लकारस्थाने च लृकारः सम्प्रसारणमिति व्यपदिश्यते । यजे र्निष्ठायामिष्टः,

वसतेर्निष्ठायाम् उषितः, ग्रहेर्निष्ठायां गृहीत इति भवति। किञ्च, इग् यण इति यो वाक्यार्थः स्थान्यादेशसम्बन्धलक्षणः स सम्प्रसारणसंज्ञो भवति। (काशिका)

यकारादष्विकारादयो निष्पिष्टाः सङ्कुचिता अवतिष्ठन्ते, सम्प्रसारणेन तेषां विस्पष्टतयोपलब्धिर्भवतीति हि वैयाकरणानां दर्शनम्। अत एवास्माभिः Technical Terms and Technique of Sanskrit Grammar ग्रन्थ उक्तम्—The idea is that ya, va, ra and la contain i, u, ṛ and ḷ in a condensed form; when they are fully spread out and i, u, ṛ and ḷ make their appearance, the phenomenon is known as samprasāraṇa.

न जानीमः कथं वा W. S. Allen महोदयेनोक्तम्—The relevance of the term is not clear. The form prasāraṇa is also found, and is used by the AP. to refer to the replacement of -bh- by -p- in dipsati < dabh.

अस्माकं पुस्तकं पठित्वापि अग्रालेन-महोदयोनेदमुक्तम् इत्यहो नायं स्थाणोरपराधो यदेनमन्धो न पश्यतीति न्याय आपतति। अथर्वप्रातिशाख्य यदि भकारस्थाने पकारादेशोऽपि प्रसारणशब्देन निर्दिष्टस्तथापि न क्षतिः। प्रातिशाख्यमतेन भकारे पकारो निष्पिष्टो निगूढोऽवतिष्ठते प्रसारणेनासौ स्फुटतयोपलभ्यते। अथर्वप्रातिशाख्यगतसूत्रस्यार्थस्तु अग्रालेन्महोदयेन नावबद्धः। (क्रमशः)

---

## रामायणरत्नमञ्जूषा

वसेत् सह सपत्नेन[1] क्रुद्धेनाशीविषेण[2] च।
न तु मित्रप्रवादेन[3] संवसेच्छत्रुसेविना॥
जानामि शीलं ज्ञातीनां सर्वलोकेषु राक्षस।
हृष्यन्ति व्यसनेष्वेते ज्ञातीनां ज्ञातयः सदा॥

---

* प्रयतेत इति साधु। [1]शत्रुणा [2]सर्पेण [3]मित्रब्रुवेण। मित्रवदाभासमानेन।

प्रधानं[1] साधनं[2] वैद्यं[3] धर्मशीलं च राक्षस ।
ज्ञातयो ह्यवमन्यन्ते शूरं परिभवन्ति च ॥

श्रूयन्ते हस्तिभिर्गीताः श्लोकाः पद्मवने क्वचित् ।
पाशहस्तान् नरान् दृष्ट्वा शृणु तान् गदतो मम ॥

नाग्निर्नान्यानि शस्त्राणि न नः पाला भयावहाः ।
घोराः स्वार्थप्रयुक्तास्तु ज्ञातयो नो भयावहाः ॥

उपायमेते वक्ष्यन्ति ग्रहणे नात्र संशयः ।
कृत्स्नाद् भयाज् ज्ञातिभयं सुकष्टं विदितं च नः ॥

विद्यते गोषु सम्पन्नं[4] विद्यते ब्राह्मणे दमः ।
विद्यते स्त्रीषु चापल्यं विद्यते ज्ञातितो भयम् ॥

ततो नेष्टमिदं सौम्य यदहं लोकसत्कृतः ।
ऐश्वर्यमभिजातश्च रिपूणां मूर्ध्न्यवस्थितः ॥

यथा पुष्करपर्णेषु पतितास्तोयबिन्दवः ।
न श्लेषमुपगच्छन्ति[5] तथानार्येषु सङ्गतम् ॥

[6]यथा मधुकरस्तर्षाद्रसं विन्दन्न विद्यते ।
तथा त्वमपि तत्रैव तथानार्येषु सौहृदम् ॥

यथा पूर्वं गजः स्नात्वा गृह्य[7] हस्तेन वै रजः ।
दूषयत्यात्मनो देहं तथानार्येषु सौहृदम् ॥

यथा शरदि मेघानां सिञ्चतामपि गर्जताम् ।
न भवत्यम्बुसंक्लेदस्तथानार्येषु सौहृदम् ॥

अन्यस्त्वेवंविधं ब्रूयाद् वाक्यमेतन्निशाचरः ।
अस्मिन् मुहूर्ते न भवेत्[8] त्वां तु धिक् कुलपांसनम् ॥

---

[1] स्वजातिश्रेष्ठम्　[2] कार्यसाधकम्　[3] विद्वांसम्　[4] सम्पद्　[5] न संश्लिष्टा भवन्ति, [6]तर्षात् अभिलाषेण, न विद्यते तत्र रसाधारे पुष्पे नावतिष्ठते, तथा त्वमपि ज्ञातीनां सम्पदं भुञ्जानोऽपि तत्पक्षे न तिष्ठसि ।　[7] गृहीत्वेति साधु ।
[8] विनश्येत् ।

[ एतदेवोपजीव्य भट्टिकविनोक्तम्—

अनिर्वृतं भूतिषु गूढवैरं
सत्कारकालेऽपि कृताभ्यसूयम् ।
विभिन्नकर्माशयवाक् कुले नो
मा ज्ञातिचेलं भुवि कस्यचिद् भूत् ॥ ]

---

## स्वर्णमृगः

[ कवीन्द्ररवीन्द्रनाथठाकुरस्य ]

( २ )

वैद्यनाथश्चेत् साहसमवलम्ब्यापृच्छत्, किमेतावन्तो द्रव्यसम्भारा अपेक्ष्यन्ते ? इति, स प्रत्युत्तरमाकर्णयत्, तर्हि पुत्राः सर्वेऽनाहारेण प्राणान् परित्यजन्तु, अहमपि प्रैमि, ततश्च त्वमेकाक्यवस्थायाल्पीयसैवार्थव्ययेन संसारयात्रां निर्वाहयितुं प्रभविष्यसि इति।

इत्थं क्रमेण वैद्यनाथोऽबुध्यत, न खल्वित ऊर्ध्वं यष्टितक्षणेन कार्यं सेत्स्यति। यः कोऽप्युपायोऽवश्यमेव विधातव्यः। दास्यं वा वाणिज्यं वा तस्य दुराशामात्रमेव स्यात्। अत एव कुबेरस्य कोषागारे प्रवेशस्य कश्चन पन्थाः स्वल्पप्रमाण आविष्करणीय इति।

एकदासौ निशायां शय्यामधिशयानः कातरं प्रार्थयत, अये मातर्जगदम्ब, यदि तावत् स्वप्ने दुःसाध्यस्य कस्यचन व्याध भैषजम् अनुशिष्यास्तर्हि वृत्तान्तपत्रेषु तस्य प्रकटनादिविलेखनस्य भारो मया ग्रहीष्यते इति।

तस्यामेव रात्रौ स्वप्नो तेन दृष्टम्, पत्नी तदीयापरक्ता विधवा-विवाहं निर्वर्त्स्यामीति कृतपणा तिष्ठतीति। विद्यमानेऽर्थाभावे कुतो वा तदुपयुक्तमलङ्करणं लभ्येत इत्युक्त्वा वैद्यनाथस्तत्र विप्रतिपद्यते। न खलु विधवाया अलङ्करणम् अपेक्ष्यत इत्युक्त्वा पत्नी तदीया तां विप्रतिपत्तिं निराकरोति। एतस्यापि किमप्यखण्डनीय-

मुत्तरं वतत इति तस्य मनस्युदेति, परमुत्तरं तु तत् कथमपि न प्रतिभाति। व्यतिकरे चास्मिंस्तस्य निद्राभङ्गः सञ्जातः। स चापश्यत् प्रभाता रजनीति। कथं च स्वपत्त्या विधवाविवाहो न सम्भवतीत्यत्र सदुत्तरं सद्य एव तस्य स्मृतिसरणिमुपारूढम्, तेन च मन्दो न कथञ्चिद् दुःखितोऽभवत्।

परेद्यवि प्रातःकृत्यं परिसमाप्य यावदसावेकक एव सुखासीनो वियच्चारिपत्रविहगस्य सूत्रं सन्नाहयति, तावत् कश्चन सन्न्यासी जयध्वनिमुच्चारयन् द्वारदेशमुपागतः। तस्मिन्नेव मुहूर्त्ते वैद्यनाथो विद्युत्स्फुरणमिव भाविन ऐश्वर्यस्य समुज्ज्वलां मूर्तिं प्रत्यक्षीचक्रे। सन्न्यासिने पुष्कलं समादरं स्वागतवचनादिकम् अभ्यवहार्यं च समुपानयत्। वहुतराच्चानुनयादूर्ध्वमवुध्यत, प्रभवत्येव सन्न्यासी सुवर्णं विनिर्मातुम् इति। स च तां विद्यां तस्मै प्रतिपादयितुं नासम्मतोऽभूत्।

गृहिण्यप्यसङ्गीतकमेवानृत्यत्। यथाहि समुपस्थिते यकृतो विकारे सर्वमेव हरिद्रावर्णं विलोकयति जनः, सोऽपि तथैव पृथिव्याः सर्वत्रैव सुवर्णं पश्यति स्म। कल्पनाकर्मणि शयनपर्यङ्कं गृहसज्जां भवन-प्राकारमपि सुवर्णमण्डितं विधाय मनसा विन्ध्यवासिनीं न्यमन्त्रयत।

सन्न्यासी प्रतिदिनं दुग्धस्य शरावद्वयं मोहनभोगस्य च सार्द्धं शरावम् उपयुङ्क्ते स्म, वैद्यनाथस्य चार्थपत्राणि प्रदुह्याजस्रं रौप्यरसं निःसारितवान्।

यष्टि-वडिश-सूत्रधानप्रार्थिनः वैद्यनाथस्य रुद्धद्वारं वृथैव समाहत्य प्रतिष्ठन्ते। गृहे च पुत्रादयो यथाकालम् आहार्यं न लभन्ते, निपत्य च स्फीतललाटा भवन्ति, क्रन्दनेन गगनं विदारयन्ति, गृहपतेर्वा गृहिण्या वा कस्यापि तत्र लेशतोऽपि दृष्टिपातो वा भ्रुवोर्विक्षेपोऽपि वा नास्ति। निस्तब्धमेवाग्निकुण्डस्य पुरत उपविष्टयोः कटाहं च निरीक्षमाणयो-रुभयोश्चक्षुषि पल्लवो नास्ति, वदने च वचनं नास्ति। तृषितैकाग्र-नेत्रे निरन्तरमग्निशिखायाः प्रतिबिम्बनेन नेत्रमणिना स्पर्शमणेरिव

गुणः समासादितः। दृष्टिपथश्च सायन्तनसूर्यास्तपथ इव जाज्वल्यमानेन सुवर्णप्रलेपेन रक्तवर्णः सञ्जातः।

अथ पत्रिकाद्वये समाहुतेऽस्मिन् स्वर्णानले, एकदा सन्न्यासी समाश्वासयत्—श्वो हिरण्ये वर्णः संक्रान्तो भविष्यति इति।

तस्मिंश्च दिवसे निशायां कस्यापि निद्रा नागता नयनयोः। स्त्रीपुंसौ मिलित्वा सुवर्णपुरीं निर्मिमाते स्म। तदधिकृत्यान्तरान्तरा मतभेदेन वितर्केण चोभयोर्मनसि कृतं पदम्, परमानन्दस्यावेगेनाचिरणैव मीमांसा सञ्जाता। न खलु परस्परानुरोधेन ताभ्यां स्वस्य स्वस्य मतस्य किञ्चित् परित्यागे लेशतोऽपि सङ्कोच आस्थितः—निशायां तस्यां दम्पत्योरेकीकरणं तथा घनीभूतं सञ्जातम्।

परेद्यवि सन्न्यासी क्वापि न दृष्टः। समन्ततश्च सुवर्णस्य वर्णम् अन्तर्हितम्, सूर्यकिरणा अपि तमोमया एवादृश्यन्त। इत ऊर्ध्वं शयनपर्यङ्को भवनोपकरणानि गृहप्राकाराश्च चतुर्गुणं दारिद्र्यं च जीर्णतां च प्रकटयन्ति स्म।

(क्रमशः)

---

## नामरहस्यम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

( ५ )

नलनृपतेर्नामार्यैः प्रातः स्मर्यते—पुण्यश्लोको नलो राजेति। अर्थं पुनस्तस्य बहवो न विदन्ति। ऋग्वेदे मूर्धन्यलकारोपेतो नलशब्दः साक्षात्क्रियते, स्वरद्वयमध्यवर्तिनश्च डकारस्य मूर्धन्यलादेशो भवति। अत एवामरकोषे दृश्यते "नलस्तु धमनः पोटगलः" इति। आङ्गलभाषायां च reed इत्युच्यते। अत एव नैषधचरिते [१।३६] दृश्यते—

कथाप्रसङ्गेषु मिथः सखीमुखात्
तृणेऽपि तन्व्या नलनामनि श्रुते।
जनेन यूनः स्तुवता तदास्पदे
निदर्शनं नैषधमभ्यषेचयत्॥ इति।

तस्य च पत्नी दमयन्तीति । दमधातोर्णिचि शतरि दमयन्तीति रूपम् । यथा हि सत्त्वानां प्रसभदमनात् दौष्यन्तेः सर्वदमन (Cf. Greek *pandamato:r*) इति नामासीत्, एवमेव सर्वेषां पुरुषाणां दमनात्, रूपप्रभया निखिलसुन्दरीजनदमनाद्वा, आत्मनो दमनाद्वा दमयन्तीति नामधेयम् ।

अत एव महाभारते दृश्यते—

विदर्भराज्ञो दुहिता दमयन्तीति विश्रुता ।
रूपेण समतिक्रान्ता पृथिव्यां सर्वयोषितः ॥ इति ।
अतावरूपसम्पन्ना श्रीरिवायतलोचना ।
न देवेषु न यक्षेषु तादृग् रूपवती क्वचित् ॥
मानुषेष्वपि चान्येषु दृष्टपूर्वाथवा श्रुता ।
चित्तप्रमाथिनी बाला देवानामपि सुन्दरी ॥ इति च ।

नैषधचरितेऽप्युक्तम् [२।१८]—

भुवनत्रयसुभ्रुवामसौ दमयन्ती कमनीयतामदम् ।
उदियाय यतस्तनुश्रिया दमयन्तीति ततोऽभिधां दधौ ॥ इति ।

आङ्गलभाषायामनरूपं नाम Victoria इति ।

---

## कार्मुकशब्दस्य-निर्वचनम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

कर्मण उकञ् [५।१।१०३] इति सूत्रे काशिकायां दृश्यते—कर्मशब्दादुकञ् प्रत्ययो भवति, तस्मै प्रभवतीत्येतस्मिन्नर्थे। ठञोऽपवादः । कर्मणे प्रभवति कार्मुकं धनुः । धनुषोऽन्यत्र न भवत्यनभिधानात् । इति ।

अत्र न्यासापरनाम्न्यां काशिकाविवरणञ्चिकायां सूत्रस्यास्य काशिकाया व्याख्यानं नोपलभ्यते । पदमञ्जर्यां कार्मुकं धनुरिति प्रतीकमादायोक्तम्—अन्यत्र न भवत्यनभिधानादिति । अत एव काशिकायाः संस्कर्त्रा बालशास्त्रिणा पादटीकायामुक्तम्—धनुषो-

ऽन्यत्रेत्यारभ्य अनभिधानादित्यन्तो ग्रन्थो बहुषु पुस्तकेषु नास्ति। अपपाठः पदमञ्जर्यां दर्शनात्। इति।

चान्द्रव्याकरणेऽपि—कर्मण उकञ् [४।१।१२२] इति सूत्रम्। तत्र च वृत्तिः—कर्मणश्चतुर्थ्यन्तात् प्रभवतीत्यस्मिन्नर्थे उकञ् भवति। कार्मुकम्। इति।

जैनेन्द्रव्याकरणे सूत्रम्—योग्यकार्मुके [३।४।१८८] इति। तत्र च लघुवृत्तिः—योग-कर्मन्-शब्दाभ्यां य उकञ् च निपात्यः। योगाय प्रभुः योग्यः। कार्मुकं धनुः। इति। यद्यपि मूलेऽर्थविषयो विशेषतः किञ्चिन्नोक्तम्, तथापि "तस्मै प्रभुः" इति प्रकरणे पठितमिदं सूत्रम्।

शाकटायनव्याकरणेऽपि 'योग्यकार्मुके' [३।२।९२] इति सूत्रम्। तत्र च यक्षवर्मविरचिता वृत्तिः—योग्यकर्मभ्यां शक्तेऽर्थे य उकञ् इत्येतौ निपात्येते। योगाय शक्तः योग्यः।..कर्मणे शक्तम् कार्मुकम् इति। अत्र वृत्तिकृता धनुर्विषयो किमपि नोक्तम्।

सरस्वतीकण्ठाभरणे कर्मण उकञ् [५।१।११४] इति पाणिनेरेव सूत्रं गृहीतम्। तत्र च हृदयहारिणी—कर्मन्-शब्दात् तस्मै प्रभवतीत्यर्थे उकञ् प्रत्ययो भवति। कर्मणे प्रभवति कार्मुकम् इति।

हैमशब्दानुशासने सूत्रम्—योगकर्मभ्यां योकञौ [६।४।९५] इति। तत्र च बृहद्वृत्तिः—आभ्यां चतुर्थ्यन्ताभ्यां शक्तेऽर्थे यथाक्रमं य उकञ् इत्येतौ प्रत्ययौ भवतः। योगाय शक्तः योग्यः। कर्मणे शक्तं कार्मुकम्। इति। यद्यप्यत्र हेमचन्द्रेणार्थोल्लेखो न विहितस्तथाप्यनेकार्थसङ्ग्रहे तेनोक्तम्—अथ कार्मुकः। वंशे, कार्मुकमिष्वासे कर्मठे। इति।

संक्षिप्तसारे सूत्रं—कर्मण उकञ् [त० ७१७] इति। तत्र च व्याख्यानं—कर्मण इत्यस्मात् तस्मै शक्ते वाच्ये टिकण् भवति। इति।

मुग्धबोधस्य ४३७तम-सूत्रस्य रामतर्कवागीशटीकायां वार्त्तिकम्—कर्मणो णुकः। च्यन्तात् [चतुर्थ्यन्तात्] कर्मशब्दात् प्रभवत्यर्थे णुकः स्यात्। ण इत्। कर्मणे प्रभवति। कार्मुकं धनुः। इति।

सुपद्मे कर्मण उकण् [ ५।३।२६७ ] इति सूत्रम्। तत्र च ग्रन्थकारस्य वृत्तिः—कर्मणे प्रभवति कार्मुकं धनुः इति।

काशिकाविरचनतः पूर्वमपि किराताजनीयकाव्ये भारविणोक्तम्—

स क्षत्रियस्त्राणसहः सतां य-
स्तत् कार्मुकं कर्मसु यस्य शक्तिः

इति। (क्रमशः)

---

## जिज्ञासा मीमांसा च

( २ )

आङ्‌लादिव्याकरणेषु partitive genitive इति दृश्यते। को वास्यार्थः? संस्कृते एवंविधं किमपि वर्तते वा? इति पृच्छति कश्चन जिज्ञासुः।

अत्रोत्तरम्। यया षष्ठ्या समुदायस्यैकदेशो गम्यते समुदायादेकदेशो वा पृथक् क्रियते सा partitive genitive इति व्यपदिश्यते। संस्कृते अवयवोपजनितव्यतिरेके षष्ठीति वा भागव्यतिरेकजनिता षष्ठीति वोच्यते। सर्पिषोऽपि स्यात्, न माषाणामश्नीयात्, पर्वतानां हिमालयः श्रेष्ठः इत्यादीन्युदाहरणानि।

---

## रसमञ्जरी

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

अभ्यागतः। आर्य, भवान् गोत्रेण काश्यप इति श्रुत्वाहमागतः।

गृहस्वामी। बाढमहं काश्यपगोत्रीयः। किं तावता ?

अभ्यागतः। आर्य, क्यास्पीयान् सी ( Caspian Sea ) इति यदुच्यते तस्य नाम नूनं स्याद् भवता श्रुतमेव।

गृहस्वामी। अथ किम्? केन वाक्षरमुखेण न श्रुतं काश्यप-सागरस्य नाम?

अभ्यागतः। एतदपि भवेद् विदितं विदितवेदितव्यस्य भवतो यत् सागरोऽयं ३७५-क्रोशान् दीर्घः, १५०-क्रोशांश्चायतः। अन्तः-प्रदेशीयेषु सागरेष्वयमेव बृहत्तमः। अस्यैव च प्रसादेन रोषायणीयानां (Russians) समुन्नतिः। विज्ञायते वा भवता केन निर्मितोऽयं सागर इति।

गृहस्वामी। केन वापरेण निर्मीयेत? येन खलु समग्रमिदं भुवो मण्डलं विनिर्मितं तेनैव परमेश्वरेण निर्मितोऽयं सागरः।

अभ्यागतः। नहि नहि। न खलु भवता भाषातत्त्वे परिश्रमः कृत इति प्रतिभाति। अस्मद्गोत्रप्रवर्तकेन ब्रह्मणो मानसपुत्रेण कश्यपेनैवायं निर्मितः। अस्य नामैवेदमुच्चैरुद्घोषयति। नामरूपात्मकेऽस्मिञ्जगति नाम्नः साक्ष्यं हातुं न युज्यते।

गृहस्वामी। अहो, मूढेन मया कदाप्येतन्न चिन्तितम्। भवद्भिः कृपया ज्ञानाञ्जनशलाकयाज्ञानतिमिरं मे निर्भिन्नमिति नितरां कृतज्ञोऽस्मि।

अभ्यागतः। अस्माभिश्च काश्यपगोत्रीयैः समितिरेका संस्थापिता। रोषायणीयानां हस्तात् समाच्छिद्य पुनरप्यस्माकं पैतृकं रिक्थमस्माभिरेव भोक्तव्यम्। एतदर्थं च भूयानर्थोऽपेक्ष्यते।

गृहस्वामी। गृह्यतामद्य रूपकसहस्रम्। सति प्रयोजने पुनरप्यागन्तव्यम्।

अभ्यागतः। अनुगृहीतोऽस्मि। विद्याया विभवस्य चानुरूपमेव भवताचरितम्। भगवान् भूतभावनो भद्रं भवतो विदधातु। कश्यपोऽप्यस्माकं कूटस्थः पुरुषः श्रेयसा भवन्तं योजयतु।

---

MANJUSHA ( Sanskrit Monthly Magazine )
*Registered No. C. 3278*



Printed and published by Sri Jyotish Chandra Chatterjee, B.A. from 81, Shyambazar Street, Calcutta—4. Printed at the Elm Press 63, Beadon Street, Calcutta—6.

*Approved by the Directors of Public Instruction, Madras, Bihar and Mysore.*

श्रीशिवः शरणम्

अष्टम-वर्षे ] January, 1954 [ पञ्चमी संख्या

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## Next Month

1. Abhinavagupta, the great rhetorician. 2. The authorship of the Bhagavadgīta, 3. Tagore's short story. 4. Asoka Inscription. 5. On sugar-candy. 6. Notes and Queries, etc.



*Office* : 81, Shyambazar Street, Calcutta—4
Annual Subscription : Rupees Three only.
Foreign—Rupees Four.

# मञ्जूषाया नियमावली

मञ्जूषाया वार्षिकं मूल्यं रूप्यकत्रितयम्। आश्विन (September) मासतो वर्षारम्भः। ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम्।

२। प्रतिसौरमासं दशमदिने (आङ्ग्लमासस्य चतुर्विंशे दिवसे) 81, Shyambazar Street, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते।

## स्त्रीप्रशंसा—वराहमिहिरस्य श्लोकाः

भट्टोत्पलटीकया विद्यावाचस्पतिविरचिताभिनवविस्तृतव्याख्यया च विभूषिता। मूल्यं रूप्यकमात्रम्।

**Convocation Address in Ancient India** -12-

**Popular Etymology**-- Re. 1/-

**শব্দকথা**— ২৲

ইহাতে সরল ও সরসভাবে বাঙ্গালা ভাষার চলতি শব্দগুলির আলোচনা করা হইয়াছে, সংস্কৃত ব্যাকরণের দিক্ দিয়া, বাঙ্গালা ভাষার দিক্ দিয়া, ভাষাতত্ত্বের দিক্ দিয়া, বঙ্গদর্শন প্রভৃতি হইতে ভূরি ভূরি উদাহরণ উদ্ধৃত করিয়া শব্দ ও শব্দসমষ্টির শুদ্ধি ও অশুদ্ধি বিবেচিত হইয়াছে। ওতপ্রোতশব্দে বিসর্গ আছে কি না, যদি থাকে প্রথম 'ত'র পরে আছে, না দ্বিতীয় 'ত'র পর আছে, না উভয় 'ত'র পরে আছে, 'সঠিক' শব্দ ঠিক কি না, 'ব্যবহারিক' ব্যবহারযোগ্য কি না, আবশ্যক ও আবশ্যকতার প্রভেদ কি, প্রভৃতি আলোচিত হইয়াছে। "সোনার পাথরবাটি" প্রবন্ধে সংস্কৃত, বাঙ্গালা, ইংরাজী প্রভৃতি নানা ভাষার সোনার পাথর বাটী জাতীয় শব্দগুলি সন্নিবিষ্ট হইয়াছে। ক্রিয়াবিশেষণ প্রবন্ধে বাঙ্গালা, ইংরাজী ও ফরাসী ক্রিয়ার বিশেষণগুলির মূল অর্থ বিবেচিত হইয়াছে। "সন্ধির কথায়" সন্ধির বৈজ্ঞানিক ব্যাখ্যা ও বাঙ্গালা ইংরাজী লাটিন প্রভৃতি ভাষার সন্ধি প্রদর্শিত হইয়াছে; সন্ধি, ষত্ব ও ণত্ব সম্বন্ধীয় নিয়মগুলি সরলভাবে বোঝান হইয়াছে ও বাঙ্গালা উপন্যাসাদি হইতে শত শত দৃষ্টান্ত সন্নিবিষ্ট হইয়াছে।

**ঊষার আলো**—ছোট ছোট হাসির গল্পের সমষ্টি-- ৮৹

**নক্ষত্রমালা**—ধর্মবিষয়ক শ্লোক, সরল ব্যাখ্যা ও অনুবাদ ।৹

**Several complete sets of Vols. IV, V, VI and VII (450 pp. each) of the Manjusha are still available for Rs. 6/8/- per volume and only a few sets of Vols. I-III are available at Rs. 5/12/- for the lot.**

**श्रीविश्वनाथ-चट्टोपाध्यायः।**

৮১ শ্যামবাজার ষ্ট্রীট, কলিকাতা ৪

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम्॥

# मञ्जूषा


| January, 1954 | १८७५-शकीयमाघस्य ८म-वर्षस्य पञ्चमी संख्या | Vol. VIII No. 5 |
|---|---|---|


## आभाणकमाला

A wilful man will have his way.

क ईप्सितार्थस्थिरनिश्चयं मनः
पयश्च निम्नाभिमुखं प्रतीपयेत्॥ कुमारसम्भवः।

Never take a stone to break an egg, when you can do it with the back of your knife.

Ne'er take a forehammer to break an egg, when you can do it with a pen-knife.

मा ग्रहीः[1] प्रस्तरं वत्स [2]कुक्कुटाण्डस्य भेदने।
क्षुरिकावरभागेण यदि तत् सुशकं भवेत्॥

"कररुहसाध्यो किं परशुना।"

[3]मोद्यंस्था मुद्गरं मूढ कुक्कुटाण्डस्य भेदने।
कर्तरीपृष्ठभागेन कर्तुं तच्छक्यते यदि॥

---

1 माङि लुङ् इति लुङ्। न माङ्योगे इत्यडागमनिषेधः।
2 कुक्कुट्या अण्डम् कुक्कुटाण्डम्। कुक्कुट्यादीनामण्डादिषु इति पुंवद्भावः।
3 "समुदाङ्भ्यो यमोऽग्रन्थे" इत्यात्मनेपदम्।

३। (वङ्गीयः) यार नाम भाजा चाल तारइ नाम मुड़ि।*
यार माथाय पाका चुल तारेइ वले बुड़ी ॥
भृष्टो यस्तण्डुलो नाम तन्न्याक्यमभिधीयते ।
यस्या मूर्ध्नि कचाः शुक्लाः सैव वृद्धेति कथ्यते ॥

There is no more difference between them than between a broom and a besom.

JOHN LYLY, *Euphues and this England.*

Some say, compared to Bononcini,
That Mynheer Handel's but a ninny;
Others aver that he to Handel
Is scarcely fit to hold a candle.
Strange all this difference should be
'Twixt Tweedledum and Tweedledee!

JOHN BYROM, *On the Feud Between Handel and Bononcini.*

## अनुरूपोक्तयः

दलति हृदयं गाढोद्वेगं द्विधा न तु भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥

उत्तररामचरितम् । ३।३१

अन्वयः । गाढोद्वेगं (गाढ उद्वेगः यस्मिन् तत्) हृदयं दलति (स्फुटति) किन्तु द्विधा न भिद्यते । विकलः कायः मोहं वहति, चेतनां [पुनः] न मुञ्चति अन्तर्दाहः तनूं ज्वलयति, भस्मसात् [तु] न करोति । मर्मच्छेदी विधि प्रहरति, जीवितम् [पुनः] न कृन्तति ।

There are crushed hearts that will not break;
And mine, methinks, is one;

* न्याक्यम् भ्रष्टतण्डुलम्, मुड़ी इति भाषा। शब्दकल्पद्रुमः ।

Or thus I should not weep and wake
And thou to slumber gone.

H. P. LYTE, *A Lost Heart.*

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्यासं यातो घनविरलभावः क्षितिरुहाम् ।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढ़यति ॥

उत्तररामचरितम् । २।२७

अन्वयः । पुरा यत्र सरितां (नदीनां) स्रोतः आसीत्, अधुना तत्र पुलिनम् (दृश्यते), क्षितिरुहाम् (वृक्षाणां) घनविरलभावः विपर्यासं यातः (पुरा यत्र निबिडत्वमासीत् इदानीं तत्र विरलत्वं सञ्जातम्, यत्र च विरलत्वम् आसीत्, तत्र निबिडत्वं सञ्जातम्) । बहोः कालात् [अनन्तरं] दृष्टम् इदं वनम् अपरं [वनम्] इव मन्ये । शैलानां (पर्वतानां) निवेशः (यथापूर्वम् अवस्थानं) तत् इदं (तदेव पूर्वानुभूतम् इदं वनम्, न खलु वनान्तरम्) इति बुद्धिं (प्रत्यभिज्ञां) द्रढ़यति (दृढीकरोति) ।

"When I have seen the hungry ocean gain
Advantage of the kingdom of the shore,
And the firm soil win of the watery main,
Increasing store with loss and loss with store."

SHAKESPEARE, *Sonnet* LXIV.

अम्भोधिः स्थलतां स्थलं जलधितां धूलीलवः शैलतां
मेरुर्मृत्कणतां तृणं कुलिशतां वज्रं तृणक्लीबताम् ।
वह्निः शीतलतां हिमं दहनतामायाति यस्येच्छया
[1]स्वेच्छादुर्ललिताद्भुतव्यसनिने देवाय तस्मै नमः ॥

सुभाषितावलिः ।

---

[1] लीलादुर्ललितेति सूक्तिमुक्तावल्यां पाठः

भीष्म उवाच ।

अत्राप्युदाहरन्ती[2]ममितिहासं पुरातनम्[3] ।
[4]बृहस्पतेश्च संवादं शक्रस्य च युधिष्ठिर ॥

शक्र उवाच ।

किंस्विदेकपदं ब्रह्मन् पुरुषः सम्यगाचरन् ।
[5]प्रमाणं सर्वभूतानां यशश्चैवाप्नुयान्महत् ॥

बृहस्पतिरुवाच ।

[1]सान्त्वमेकपदं शक्र पुरुषः सम्यगाचरन् ।
प्रमाणं सर्वभूतानां यशश्चवाप्नुयान्महत् ॥
एतदेकपदं[6] शक्र सर्वलोकसुखावहम् ।
आचरन् सर्वभूतेषु प्रियो भवति सर्वदा ॥
यो हि नाभाषते किञ्चित् सर्वदा भ्रुकुटीमुखः[7] ।
द्वेष्यो भवति भूतानां स सान्त्वमिह नाचरन्[8] ॥
यस्तु सर्वमभिप्रेक्ष्य पूर्वमेवाभिभाषते ।
[9]स्मितपूर्वाभिभाषी च तस्य लोकः प्रसीदति ॥
दानमेव हि सर्वत्र सान्त्वेनानभिजल्पितम् ।
न प्रीणयति भूतानि निर्व्यञ्जनमिवाशनम् ॥

---

[1] सान्त्वम्—निष्कपटप्रियवचनम् । [2] उदाहरन्ति– कथयन्ति । [3] पुरातन is a later word than पुराण. [4] बृहस्पतेः शक्रस्य च संवादम् इत्यन्वयः । शक्रः इन्द्रः । संवादः—Conversation. In Bengali the word in used in the sense of news and संवादपत्र means newspaper. [5] There is a zeugma here : सर्वभूतानां प्रमाणं भवेत् यशश्च महत् आप्नुयात । [6]एकपदं—in one word. [7]सर्वदा भ्रुकुटिमुखः—always with a frown on his brow. [8]नाचरन्—अनाचरन्. It is a सुप् सुपा compound of न and आचरन्. [9]स्मितपूर्वाभिभाषी—स्मितं पूर्वं यस्मिन् तद् यथा स्यात् तथा स्मितपूर्वम् (बहुव्रीहिः), स्मितपूर्वम् अभिभाषितुं शीलं यस्य. Who is accustomed to speak with a smile.

अदानादपि भूतानां मधुरामीरयन्[1] गिरम् ।
सर्वलोकमिमं शक्र सान्त्वेन कुरुते वशे ।।
तस्मात् सान्त्वं प्रयोक्तव्यं दण्डमाधित्सतापि[2] हि ।
फलं च जनयत्येवं न चास्योद्विजते जनः ।।
सुकृतस्य हि सान्त्वस्य[3] श्लक्ष्णस्य मधुरस्य च ।
सम्यगासेव्यमानस्य तुल्यं जातु न विद्यते ।।

भीष्म उवाच ।

इत्युक्तः कृतवान् सर्वं यथा शक्रः पुरोधसा ।
तथा त्वमपि कौन्तेय सम्यगतत् समाचर ।

---

## स्वर्णमृगः

[ स्वर्गत-रवीन्द्रनाथठाकुरस्य ]

( ३ )

इत आरभ्य गृहकार्यमधिकृत्य यदैव वैद्यनाथस्तुच्छमप्यभिमतं प्रकटयितुमुद्युङ्क्ते तदैव गृहिणी तीव्रमधुरेण स्वरेण वदति, बुद्धैः परिचयो बहुधा प्रदत्तः, इदानीं कियन्तिचिद्दिनानि विरतोऽवतिष्ठस्वेति । वैद्यनाथः सर्वथा निर्वाण एव भवति ।

मोक्षदया तथाविधायाः श्रेष्ठताया भाव आस्थितः यथा प्रतीयते न खलु स्वर्णमरीचिकयानया सा मुहूर्तमपि समाश्वस्तेति ।

सापराधो वद्यनाथः पत्नीं कथमपि तोषयितुं विविधान् उपायानचिन्तयत् । एकदा च कस्मिंश्चन चतुष्कोणे पत्रपुटे निभृतमुपहारमादाय पत्नीमुपसृत्य प्रभूतहास्यविकासपुरःसरं निरतिशयेन चातुयण स्कन्धौ सञ्चाल्यावदत्, उच्यतां तावत् किं मयानातमिति ।

---

[1]ईरयन्—उच्चारयन् । "सर्वस्वं गृहीत्वापि सान्त्वं प्रयुञ्जानस्य वशो लोके भवति ।" [2]आधित्सता—आ-धा+सन्—शतृ, तृतीयैकवचनम्, आधातुमिच्छता; प्रयोक्ष्यमाणेन । [3]श्लक्ष्ण—slippery, smooth, soft, tender.

पत्नी कौतूहलं संगोप्य तटस्थाब्रवीत्, कथं वा मयोच्येत ? न खल्वहं दैवज्ञेति ।

वैद्यनाथोऽनावश्यकं कालव्ययं विधाय प्रथमतस्तावत् सूत्रस्य ग्रन्थिं शनैरुन्मोचितवान्, ततश्च फूत्कारेण फूत्कारेण पत्राणां धूलिमपासारयत्, ततश्चातिमात्रेणावधानेनैकैकं पर्वापावृत्य पत्रपुटमुन्मोच्य आर्ट् स्टुडियोनिर्मितं वर्णरञ्जितं दशमहाविद्यानां चित्रं निष्कास्यालोकमभि प्रत्यावर्त्य गृहिण्याः पुरतोऽधारयत् ।

तदात्व एव विन्ध्यवासिन्याः शयनकक्षस्थितानि वैदेशिकतैलचित्राणि गहिण्याः स्मृतिपथमवतीर्णानि, उक्तं च तया, हन्त मातर्जीवामि जीवामि ! तवैव बहिः प्रकोष्ठे संस्थाप्य निषद्य निषद्य निरीक्ष्यतामिदम् । न खल्वेतेन मम कार्यम् इति ।

विषण्णो वैद्यनाथोऽबुध्यत स खलु सहैवेतराभिः शक्तिभिर्योषिदनुरञ्जनस्य दुर्लभशक्त्यापि वञ्चितो विधात्रेति ।

इतश्च तद्दृशो यावन्तो दैवज्ञा आसन् मोक्षदा सर्वेभ्य एव तेभ्यः पाणिरेखाः प्रादर्शयत्, जन्मपत्रिकां च समदर्शयत् । सर्व एवाब्रुवन् सा खलु जीवद्भर्तृकव मरिष्यतीति । परं न खल्वसौ परमानन्दमयस्यास्य परिणामस्य कृते सर्वथा व्यग्रासीत्, अत एव न खल्वेतावतापि निववृते तस्याः कुतूहलम् ।

आकर्णितं च तया, शोभनमेव स्वं पुत्रभाग्यम् । न चिरादेव पुत्रश्च दुहितृभिश्च तस्या गृहं पूर्णं भविष्यतीति सम्भाव्यते इति । श्रुत्वा न खलु विशेषतः कोऽपि हर्षस्तया प्रकटितः ।

अन्ततश्चैकेन गणयित्वोक्तम्—वत्सराभ्यन्तरेण चेद् वैद्यनाथो दैवधनं न प्राप्नुयात्, अहं पुस्तकपञ्चाङ्गादिकं सर्वमेवाग्निसात् करिष्यामीति । गणकस्य निदारुणं पणमिमं श्रुतवत्या मोक्षदायाः मानसे तिलमात्रस्याप्यविश्वासस्य कारणं नावाशिष्यत ।

गणकस्तावत् प्रभूतं पारितोषिकं परिगृह्य प्रययौ, वैद्यनाथस्य जीवनं पुनर्दुर्वहमेव सञ्जातम् । अर्थोपार्जनस्य केचन सामान्याः

पन्थानो वर्त्तन्ते, यथा कृषिः, श्ववृत्तिः, वाणिज्यं, चौर्य्यं विप्रलम्भश्च। परं दैवधनोपार्ज्जनस्य तथाविधः कोऽपि निर्दिष्ट उपायो नास्ति। अत एव मोक्षदा यथा यथा समुत्साहयति भर्त्सयते च तथा तथा वैद्यनाथः क्वापि पन्थानं नाधिगच्छति। कतमत् स्थानं खनितुमारप्स्यते, कतमस्यां पुष्करिण्यां निमज्जकान् अवतारयिष्यति, गृहस्य कतमं प्राचीरं भञ्ज्यात्, चिन्तयन्नपि किमपि निर्णेतुं न प्रभवति।

मोक्षदा च सातिशयमपरक्ता भर्तारं व्यज्ञापयत्, न खलु मयेतः पूर्वं स्वप्नेऽपि सम्भावितं यत् पुरुषस्य मस्तके मस्तिष्कस्य स्थाने एतावद् गोमयं तिष्ठेदिति।

तयोक्तम्। किञ्चिच्चलनारोहणादिकं स्वीकुरु। उद्यमं तावदातिष्ठ। न खलु मुखं व्यादायोपविष्टे त्वयि वियतो रूप्यकवृष्टिर्भविष्यतीति।

वचनमिदं समीचीनमेव, सैव च वैद्यनाथस्यैकान्तिकी वाञ्छा, परं कस्यां दिशि चलिष्यति किं वारोक्ष्यति तत्तु केनापि नोच्यते। अत एव प्राङ्गणे निषद्य वैद्यनाथः पुनरपि यष्टितक्षणे प्रवृत्तः। (क्रमशः)

---

## इध्मः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

अमरकोषे दृश्यते—काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित् स्त्रियाम् [२।४।१३] इति। अत्र इध्मम् इति पाठश्चिन्त्यः, इध्मशब्दस्य प्रायेण सर्वत्रैव पुंलिङ्गत्वदर्शनात्। अत्र क्षीरस्वामिनोक्तम्—"विशेषमाह—इन्धनं त्विति।......आद्यमेध एधेरसुनि दाह्यदार्वर्थे, अपर एधः....इन्धेर्घञि साधुः" इति। अत्र रायमुकुटव्याख्यानम्—ञि इन्धी दीप्तौ। इध्यते दीप्यतेऽग्निरनेनेति ल्युट्। इन्धनम्। एधतेऽनेनाग्निरित्यसुन् एधेः, इन्धेर्वा,

बाहुलकान्नलोपः। गुणः। एधः सान्तम्। इध्यतेऽनेनाग्निरिति षियुधीन्धिदसिश्याधूसूभ्यो मक् [उ० १।१४२]। कित्त्वादनुनासिकलोपे इध्मम्। हलश्चेति [३।३।१२१] करणे घञ्। अवोदैधोद्मेत्यादिना [६।४।२९] नलोपो निपातितः। एधः। पुंस्ययम्। एधान् हुताशनवतः [रघुवंशे ९।८१] इति कालिदासः। समिध्यतेऽनया। इन्धेः सम्पदादित्वात् क्विप्। इति।

भानुजिदीक्षितेन प्रायेण रायमुकुटस्यैव सरणिरनुसृता, केवलं स्वपुस्तकेषु इन्धेर्वा इत्यंशस्य लेखकानवधानाल्लुप्तत्वात् उक्तम्— यत्तु "बाहुलकान्नलोपो गुणश्च" इति मुकुटः, तन्न, एधतेरुभयासम्भवात्। इति। अत्र शिवदत्तमहोदयेनोक्तम्—"इन्धेर्बाहुलकान्नलोपः"* इत्येवं पाठस्य मुकुटपुस्तकेषु दर्शनेन सर्वसङ्गत्या प्रतारणपरमेवैतत् इति। वयं तु ब्रूमः मुकुटदोषोद्घाटनव्यसनितया भानुजिदीक्षितेन स्वपुस्तकेषु त्रुटितोऽंशो नानुमितः, कथं वा बृहस्पतिकल्पो रायमुकुटोऽसतो नकारस्य लोपं विदध्यात् अविद्यमानस्य च इकारस्य गुणं प्रतिजानीत इत्यपि न चिन्तितम्। पित्तोपहतदर्शनः किं वा पीतं न पश्यति?

यथास्माभिर्दृष्टं तथा सर्वैष्टीकाकृद्भिः 'इध्मम्' इति पठ्यते, द्वितीयस्य चैधशब्दस्य पुंलिङ्गत्वं चाभ्युपगम्यते। एतत्तु न समीचीनतया प्रतिभाति। इन्धनमिति रूपं शब्दस्य नपुंसकत्वमवबोधयति। तत्साहचर्याच्च एधः-शब्दोऽपि नपुंसकः। ततश्च इध्म इति पुंलिङ्गः पठनीयः। तस्य च रूपमेव पुंस्त्वं प्रत्याययेत्। तत्साहचर्यात् एधोऽपि पुंलिङ्गो बोध्यः। ततश्च समिच्छब्दस्य स्त्रीलिङ्गत्वं कण्ठत एवोक्तम्।

उणादिसूत्रवृत्तिषु दशपाद्यां पञ्चपाद्यां च शब्दस्यास्य पुंलिङ्गत्वं

---

* अस्मदीये हस्तलिखिते पुस्तके—एध-विन्धेर्वं बाहुलकान्नलोपः। गुणः। इति पाठः। एतस्माच्च एधेरिन्धेर्वा इति पाठः प्रतीयते।

प्रतिपादितम्। पेरुसूरिणा विस्पष्टमेवोक्तम् —इध्मः पुंसि प्रकथितः काष्ठे काले च सूरिभिरिति। ततश्चैकीयमतमुपन्यस्तम्—काष्ठे तु न द्वयोरिति।

---

## परोपकारः

( Theory and Practice )

[ श्रीफटिकलालदासः ]

चन्द्रो नाम द्विजः कश्चित् प्रत्युवास पुरोत्तमे।
स स्वपुत्रमशान्नित्यं धर्मबुद्धिविवृद्धये॥
एकदा पुत्रमाहूय जगाद वचनं महत्।
"भो भोः पुत्र त्वया नित्यं कर्तव्यो धर्मसंग्रहः॥
दरिद्राय धनं देयं, भोज्यादि च बुभुक्षवे।
नग्नगात्राय वासश्च व्याधिताय च भेषजम्॥
क्षन्तव्याः शत्रवो घोराः सदोषा बान्धवा अपि।
कीटस्यापि सदा रक्ष्याः प्राणाः सर्वप्रयत्नतः॥
यत् किञ्चिदेकमेतेषामन्यद्वा नियतं चर।
मामुपेत्य च सन्ध्यायां कृत्यं प्रात्यहिकं वद॥"
पितुरेवं समाकर्ण्य शासनं सुमहत् सुतः।
तस्माद्दिनात् प्रभृत्येव स्वं न्ययुङ्क्त प्रसाधने॥
कालेन गच्छता पित्रैकदा प्रोक्तः सुतः स्वयम्।
"यदद्य विहितं पुण्यं कृत्यं तन्मे निवेदय॥"
श्रुत्वा पितृवचः पुत्रः प्रत्युवाच सुगर्वितः।
"रक्षिता मूषकप्राणा मयाद्य दुःखवेदिना॥"
पिता— साधु वत्स कृतं साधु धन्योऽसि मम पुत्रक।
कथ्यतां कथमेतद्धि त्वया बालेन साधितम्॥

पुत्रः— अद्य प्रातर्मया दृष्ट आखुरेकः पुरः सरन् ।
मार्जारेण समाक्रान्तः कृतान्तेनेव देहिना ॥
दृष्ट्वैतज्जातकारुण्यो मूषकासुरिरक्षिषुः ।
लोष्टेनाहं समाहन्य बिडालं हतवान् क्षणात् ॥
स आखुराशु लब्धासुर्बिलं विवेश वेगवान् ।
प्राणदाता भयत्राता तस्याहं निर्वृतिं गतः ॥
श्रुतोदन्तः पिता हन्त निन्दन् पुत्रविचेष्टितम् ।
जगादोच्चैरहो वत्स किं त्वया दारुणं कृतम् ॥
विचारमूढतामाप्तस्त्वमित्थं प्रतिभासि मे ।
नोचेद्धत्वा बिडालं हा कथमाखुर्विरक्षितः ॥
अहिंसा चेत् परो धर्मः सर्वशास्त्रपुरस्कृतः ।
एकस्य रक्षणव्याजान्नाशोऽन्यस्य न युज्यते ॥
भो भोः पाठकवर्या मे वृत्तान्तो नानृतो ह्ययम् ।
विस्मयं चेद् गता यूयं सारं मे श्रूयतां वचः ॥
किं चित्रं यद्यहत्वैकं नापरस्य समुन्नयः ।
आब्रह्मस्तम्बपर्यन्तं विधिरेष सनातनः ॥
हननं बहुधा प्रोक्तं, नैकं प्राणविनाशनम् ।
परवित्तापहारेण शोषणञ्चापि हिंसनम् ॥
दरिद्रानेव हत्वैवं जीवन्ति धनिका जनाः ।
क्रेतृवर्गं समाहन्य श्रीमन्तो व्यवसायिनः ॥
अहो राजा प्रजा हत्वा क्षेत्रपश्च कृषीवलान् ।
धनधान्यसमायुक्तो प्रासादमधितिष्ठतः ॥
शतमारी भवेद्वैद्यः सहस्रघ्नश्चिकित्सकः ।
स्वर्गकामाः सदा यज्ञे यज्वानः पशुघातिनः ॥
वैधी हिंसाऽथवाऽवैधी विश्वे सा सर्वतोमुखी ।
अहिंसा परमो धर्मः शास्त्रेष्वेव व्यवस्थितः ॥]

---

## औत्तराधर्य्यम्

कस्य वा न विदितो मर्त्यस्य भुजङ्गानां भेकैः सह शाश्वतिको विरोधः ? भुजङ्गा हि प्रायेण भेकदंशं भक्षयन्ति । साम्प्रतं पुनर्वृत्तान्तपत्रेषु भेककर्त्तृकं भुजङ्गनिगरणमुपवर्णितम् । हाजारिबागान्तःपातिनि छातरानिगमे ढाउससमाख्यः कश्चनातिबृहन् भेकः सार्द्धहस्तपरिमितं भुजङ्गममेकं न्यगिरत् । निरवधौ काले विपुलायां च पृथ्व्यां कति वाश्चर्याणि न सन्दृश्यन्ते ।

---

## अशोकस्य शिलालेखः

### ( ४ )

अतिक्रान्तमन्तरं बहूनि वर्षशतानि वर्द्धित एव प्राणालम्भः, विहिंसा च भूतानाम्, ज्ञातिष्वसंप्रतिपत्तिः, ब्राह्मणश्रमणानाम् असंप्रतिपत्तिः । तदद्य देवानांप्रियस्य प्रियदर्शिनो राज्ञो धर्म्मचरणेन भेरीघोषोऽभूद्धर्मघोषः । विमानदर्शनाच्च हस्तिदर्शनाच्च अग्निस्कन्धान् च अन्यानि च दिव्यानि रूपाणि दर्शयित्वा जनम्, यादृशं बहुभिर्वर्षशतैर्न भूतपूर्व्वम्, तादृशमद्य वर्द्धितं देवानांप्रियस्य प्रियदर्शिनो राज्ञो धर्मानुशस्त्या—अनालम्भः प्राणानाम्, अविहिंसा भूतानाम्, ज्ञातीनां संप्रतिपत्तिः, ब्राह्मणश्रमणानां संप्रतिपत्तिः, मातरि पितरि शुश्रूषा । एतदन्यच्च बहुविधं धर्मचरणमिदम् । पुत्राश्च पौत्राश्च देवानांप्रियस्य प्रियदर्शिनो राज्ञः प्रवर्द्धयिष्यन्तीदं धर्मचरणं यावत् संवर्त्तकल्पम्, धर्मे शीले च तिष्ठन्तः धर्ममनुशासिष्यन्ति च । एतच्छ्रेष्ठं कर्म यद्धर्मानुशासनम् । धर्मचरणमपि न भवत्यशीलस्य । अस्मिन्नर्थे वृद्धिश्चाहीनिश्च साधुः । एतस्मा अर्थायेदं लेखितम्—अस्यार्थस्य वृद्धिर्युज्यताम्, [1]हीनिश्च न रोचयितव्या । द्वादशवर्षाभिषिक्तेन देवानांप्रियेण प्रियदर्शिना राज्ञेदं लेखितम् ।

---

[1]हीनिः = हानिः, अल्पता ।

[ अतिकातं अन्तरं बहूनि वाससतानि वढितो एव प्राणारंभो विहिंसा च भूतानं ञातीसु असंप्रतिपत्ती ब्राह्मणस्रमणानं असंप्रतीपत्ती। त अज देवानं प्रियस प्रियदसिनो राञो धंमचरणेन भेरीघोसो अहो धंमघोसो। विमानदंसना च हस्तिदंसना च अगिखंधानि च अञानि च दिव्यानि रूपानि दसयित्पा जनं यारिसे बहूहि वाससतेहि न भूतपुवे तारिसे अज वढिते देवानंप्रियस प्रियदसिनो राञो धंमानुसस्टिया अनारंभो प्राणानं अविहिसा भूतानं ञातीनं संपटिपत्ती ब्रम्हणसमणानं संपटिपत्ती, मातरि पितरि सुस्रूसा थैरसुसुसा एस अञे च बहुविधे धंमचरणे वढिते। वढयिसति चेव देवानंप्रिया प्रियदसि राजा धंमचरणं इदं। पुत्रा च पोत्रा च प्रपोत्रा च देवानंप्रियस प्रियदसिनो राञो प्रवधयिसंति इदं धंमचरणं आव सवटकपा धंमम्हि सीलम्हि तिस्टंतो धंमं अनुसासिसंति। एस हि सेस्टे कंमे य धंमानुसासनं। धंमचरणे पि न भवति असीलस्स। त इमम्हि अथम्हि वधी च अहीनी च साधु। एताय अथाय इदं लेखापितं इमस अथस वधि युजंतु हीनि च [ नो ] लोचेतव्या। द्वादसवासाभिसितेन देवानंप्रियेन प्रियदसिना राञा इदं लेखापितं। ]

---

## नामरहस्यम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

( ६ )

धृष्टद्युम्नशब्दः खलु बहुशः श्रुतः सर्वैरेव भारतवर्षीयैः, अर्थः पुनरस्य स्वल्पैरेव विज्ञायते विपश्चिद्भिः। दीप्त्यर्थकाद् दिव्धातोर्म्न त्ययेन द्युम्नशब्दो निष्पन्नः। प्रत्ययोऽयं निम्न-सुम्न-नृम्णशब्देष्वप्युपलभ्यते। द्युम्नशब्दस्यार्थो दीप्तिः, धनम्। धृष्टं सुमहत् द्युम्नं दीप्तिः यस्य सः धृष्टद्युम्नः। यद्वा धृष्टम् अधिगतं द्युम्नं धनं येन स धृष्टद्युम्नः। यद्वा धृष्टं सुमहत् द्युम्नं धनं यस्य स धृष्टद्युम्नः। एवमेव प्रकृष्टं द्युम्नम् औज्ज्वल्यं दीप्तिः कान्तिः यस्य स प्रद्युम्नो मदनः। इन्द्रस्येव द्युम्नं दीप्तिः यस्य स इन्द्रद्युम्नः। शोभना दीप्तिर्यस्य स सुद्युम्नः। ऋग्वेदे ऋतद्युम्न-तुविद्युम्न-त्वेषद्युम्न-पाशद्युम्नाऽभिष्टिद्युम्न-सुद्युम्न-शब्दा उपलभ्यन्ते।

---

## अपूर्वा युक्तिः

बालकः। आर्य, पठितं मया वृत्तान्तपत्रेषु रङ्गभूमितो कश्चन व्याघ्रो विनिष्क्रान्त इति। बलवत् खलु भीतोऽस्मि।

वृद्धः। वत्स मूढाः खलु व्याघ्राद् बिभ्यति। यदा हि व्याघ्रः क्षुधार्तो भवति तदैव मानुषादीन् ग्रसते, नान्यदा।

बालकः। कथं वा जानीयां कश्चन व्याघ्रः क्षुधार्तो वा न वेति।

वृद्धः। यदि व्याघ्रस्त्वां भक्षयेत् तर्हि ज्ञास्यसि क्षुधार्तोऽयमासीदिति।

---

## बालिकाया वैदग्ध्यम्

मातुलस्य भोजनकाले त्रिहायणी (three years old) भागिनेयी समुपस्थिता।

(आहारनिरतं मातुलं प्रति) अपूपभक्षणे नास्ति कोऽपि निषेधः। अहमपि अपूपान् भक्षयामि। (मातुलस्तूष्णीमेकैकमपूपं भुङ्क्ते।) अपूपा मह्यं रोचन्ते। (मातुलस्तथैव भक्षयति।) एकोऽपूपो मदर्थं रक्षणीयः। (मातुलोऽपूपमेकं तस्याः पाणौ प्रयच्छति।) (अपूपं सानन्दं भक्षयित्वा सक्रोधम्) किमित्युच्छिष्टं मे प्रदत्तम्? अपि न ज्ञायते भवता नाहं कस्याप्युच्छिष्टं भक्षयामीति। भृशं भवते क्रुध्यामि। इतः परं कदाप्येवं न कर्तव्यम्, उच्छिष्टं मे न दातव्यम्।

सुष्ठु खलूक्तं कालिदासेन [शकुन्तला ५।२२]—

स्त्रीणामशिक्षितपटुत्वममानुषीषु
सन्दृश्यते किमुत याः प्रतिबोधवत्यः।
प्रागन्तरिक्षगमनात् स्वमपत्यजातम्
अन्यैर्द्विजैः परभृताः खलु पोषयन्ति॥ इति।

[The untaught cunning (अशिक्षितपटुत्वम्) of women (स्त्रीणाम्) is observed (सन्दृश्यते) even among lower animals (अमानुषीषु), not to speak of those (किमुत याः) endowed with

reason ( प्रतिबोधवत्यः ). The female cuckoos (परभृताः) get their young ones ( स्वम् अपत्यजातं ) nursed ( पोषयन्ति ) by other birds ( अन्यैः द्विजैः ) before ( प्राक् ) they are able to fly in the air ( अन्तरिक्षगमनात् ) । ]

---

## कार्मुकशब्दस्य निर्वचनम्

[ श्रीक्षितीशचन्द्र चट्टोपाध्यायः ]

( २ )

वस्तुतस्तु संस्कृतभाषायां कार्मुक-शब्दो द्विविध उपलभ्यते। एकः कर्मण उकञ् इति सूत्रेण कर्मन्शब्दात् उकञ्प्रत्ययेन निष्पन्नः, प्रत्ययस्य ञित्वादाद्युदात्तः। अस्य अर्थः—कर्मणे प्रभवति, फलोत्पादनक्षमः, अमोघः इति। शब्दोऽयम् 'आरोग्यसाधनक्षमः' इत्यर्थे वैद्यकसंहितासु प्रायश उपलभ्यते। अस्य च स्त्रियां विशेषसूत्राभावात् अजाद्यतष्टाप् इति सूत्रेण टापि कार्म्मुकेति स्यात्।

द्वितीयश्च कार्मुकशब्दः काष्ठविशेषवाचिनः अन्तोदात्तात् क्रमुकशब्दात् अनुदात्तादेश्च इति सूत्रस्यापवादेन कोपधाच्च इति सूत्रेणाण्प्रत्ययेन निष्पन्नः। यथा शृङ्गशब्दादणि शार्ङ्गम्, तथा क्रमुकशब्दादणि कार्मुकम्। प्राचीने काले धनूंषि क्रमुकवृक्षस्य काष्ठेन निर्मीयन्ते स्मेति प्रतीयते। अस्य च प्रत्ययस्वरेणान्तोदात्तत्वं बोद्धव्यम्। स्त्रियां टिड्ढाणञ् इति सूत्रेण ङीपि कार्म्मुकीति पदं भवति, तच्च उदात्तनिवृत्तिस्वरेणान्तोदात्तं बोध्यम्।

---

## जिज्ञासा मीमांसा च

( ४ )

मान्या मञ्जूषासम्पादकमहोदयाः,

सिद्धान्तकौमुद्यां कानिचनोद्धृतानि वाक्यानि वर्तन्ते येषां मूलं प्रयत्नतोऽन्विष्यमाणेनापि नोपलभ्यते। कृपया चुरादिप्रकरण

पठितस्य स एवायं नागः सहति कलभेभ्यः परिभवम् इति श्लोकांशस्य शेषः पूरणीयः। इति प्रणतः श्रीनन्दलाल शर्मा।

समग्रः श्लोकः सुभाषितग्रन्थेषूपलभ्यते। स च यथा—

नदीवप्रान् भित्वा किसलयवदुत्पाट्य च तरून्
मदोन्मत्ताञ्जित्वा करचरणदन्तैः प्रतिगजान्।
जरां प्राप्यानार्यां तरुणजनविद्वेषजननीं
स एवायं नागः सहति कलभेभ्यः परिभवम् ॥

यस्मिन् श्लोके करचरणदन्तैरिति पदं देदीप्यते तस्य साहायकेन सहधातोः परस्मैपदित्वप्रतिपादनं साहसमात्रम्।

इति मञ्जूषासम्पादकः।

---

## रसमञ्जरी

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

आचार्यः। वत्स वेणुगोपाल, संपाठः पठ्यताम्।

वेणुगोपालः। ( पठति )

परावरे ब्रह्मणि यं सदाहु-
र्वेदात्मानं वेदनिधिं मुनीन्द्राः।
तं पद्मगर्भं परमं त्वादिदेवं
प्रणम्यर्चां लक्षणमाह शौनकः ॥

रामगोपालः। आर्य, ग्रन्थकारान् उद्दिश्य वर्तते नः कुतूहलम्। तत कोऽयं शौनको नाम ?

आचार्यः। शुनको नाम कुक्कुरः। शुनकस्य पुत्रो वा शिष्यो वा शौनकः।

रामगोपालः। ही ही शुनकोऽपि नाम भवति ! यस्येदं नाम तेन कथं निर्वृतिर्लभ्यते ?

आचार्यः। यथा कुक्कुरः सर्वानुद्दिश्य बुक्कति ( barks ) तथा यः अभ्यक्तमिव स्नातः, शुचिरशुचिमिव, सर्वं जनं पश्यति, भर्त्सयते च, अपरक्तलोकेन तस्मिन् शुनक इति नाम आरोपितम् !

नन्दगोपालः। आर्य, बुद्धं मया। अस्माकमेव शुनक आङ्ग्ल-भाषायां Cynic रूपं परिगृहीतवान्। तर्हि शुनकस्य पितृदत्तं नाम ( Antisthenes ) अन्तिस्थान इत्यासीत्। तस्यैव शिष्यः शौनक इति।

वेणुगोपालः। तर्हि यवनानां ( of the Greeks ) Diogenes एवास्माकं शौनकः।

आचार्यः। वत्साः, श्रीमतां प्रसादेनाधिगतं मया तत्त्वज्ञानम्। गलितं तिमिरावरणं नयनयोः। Diogenes-शब्दो द्विजानि-शब्दस्यैव विकारः। द्वे जाये यस्य स द्विजानिरिति। तेन खलु विपश्चिता द्विः परिगृहीता दारा इति स स्वजनैर्द्विजानिरिति व्यपादिश्यत। स च प्रकृतिमुखरयोः कलत्रयोराक्रोशेन निरन्तरं दह्यमानकर्णो जगति निःस्पृहः सन्न्यासी संवृत्तः। ततश्च अन्तिस्थानस्य (Antisthenes) शिष्यतामुपगतः। स खलु सर्वत्रैव दोषं पश्यति स्म, शशिशुभ्रमपि शङ्खं पीतं पश्यति स्म। स च प्रचण्डतापे निदाघे तप्ततमासु सिकतासु लुठति स्म, अस्थिविध्वंसिनि च शीते निशायां निरावरणा-स्तुहिनावृता मर्मरमूर्त्तीः स्पृशति स्म।

एकदा जगदेकवीरेणालीकसुन्दरेण तस्य साक्षात्कारः सञ्जातः। सम्राजोक्तम्—अहं महावीरोऽलीकसुन्दर इति। विदुषोक्तम्—अहं शौनको द्विजानिरिति ( Diogenes the Cynic )। सम्राजोक्तम्, किं ते प्रियं करवाणीति। विदुषोक्तं कृपया सूर्यकरान् मा निरौत्सीरिति। एतदेवास्य निरपेक्षत्वं प्रमापयति। अत एव खृस्तपूर्वपञ्चम-शताब्द्यां शौनकेन विरचितमृक्प्रातिशाख्यम् इति बोध्यम्।

---

MANJUSHA ( Sanskrit Monthly Magazine )
*Registered No. C. 3278*



Printed and published by Sri. Jyotish Chandra Chatterjee, B.. from 81, Shyambazar Street, Calcutta—4. Printed at the Elm Pr.. 63, Beadon Street. Calcutta—6.

*Approved by the Directors of Public Instruction, Madras, Bihar and Mysore.*

श्रीशिवः शरणम्

अष्टम-वर्षे ] March, 1954 [ सप्तमी संख्या

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः



*Office* : 81, Shyambazar Street, Calcutta—4

Annual Subscription : Rupees Three only.

Foreign—Rupees Four.

Single copy : Eight annas.

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

March, 1954 | १८७५-शकीयचैत्रस्य ८म-वर्षस्य सप्तमी संख्या | Vol. VIII No. 7

## आभाणकमाला

१। सर्वः स्वे स्वे गृहे राजा। महाभारतम्।
( हिन्दी ) अपने घरमें हर आदमी बादशाह है।
स्वके गेहे कुक्कुरोऽपि तावच्चण्डो भवति।
(वङ्गीयः ) निजेर घरे सकलेइ राजा।
आपन गाँये कुकुर राजा।
आपन घरे सवाइ राजा।
. cock is bold on his own dunghill.
Latin. Gallus in sterquilinio suo plurimum potest.
'The cock is master on his own dunghill.'

२। आहारे व्यवहारे च त्यक्तलज्जः सदा भवेत्।
One should never be bashful at table or in trade.
Latin. Verecundari neminem apud mensam decet.
At table no one should be bashful.

३। चिन्तनीया हि विपदामादावेव प्रतिक्रिया।
न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ॥

One should provide against all emergencies beforehand. It is foolish to set about sinking a well when the house is burning furiously.

Lat. Miserum est opus, Igitur demum fodere puteum, ubi sitis fauces tenet.

It is a miserable thing to be digging a well at the moment when thirst has seized your throat.

कण्ठे तृष्णासमाक्रान्ते कष्टं कूपस्य निर्मितिः ।

---

## रामायणरत्न-मञ्जूषा

रावणं प्रति जटायुषो वाक्यम्

सर्पमाशीविषं बद्ध्वा वस्त्रान्ते नावबुध्यसे ।
ग्रीवायां प्रतिमुक्तं च कालपाशं न पश्यसि ॥
स भारः सौम्य भर्तव्यो यो नरं नावसादयेत् ।
तदन्नमपि भोक्तव्यं जीर्यते यदनामयम् ॥
यत् कृत्वा न भवेद्धर्मो न कीर्त्ति र्न यशो भुवि ।
शरीरस्य भवेत् खेदः कस्तत् कर्म समाचरेत् ॥

---

## प्रश्नोत्तराणि

प्रश्नः । ब्रूहि तावत् कथं वा वृद्धाश्चिरं जीवन्ति ।

उत्तरम् । ये तावत् स्वल्पे वयसि म्रियन्ते न खलु ते वृद्धावस्थां प्रपद्यन्ते इति ।

प्रश्नः । यदि स्वकृतप्रतिज्ञाया भङ्गः स्यात् किं करिष्यसि ?

उत्तरम् । पुनरप्यनुरूपया प्रतिज्ञया तस्याः स्थानपूर्तिं विधास्यामि ।

प्रश्नः । को वा कस्यापि बुद्धिपरीक्षणस्य सुकरोपायः ?

उत्तरम् । तस्य पुरतस्तं मुख इत्याख्याहि । काणश्चेत् काण इत्युच्यते क्रुद्धो भवति, न पुनश्चक्षुष्मान् ।

प्रश्नः । परिचितेषु पञ्चसु जनेषु के के भवतः पूर्वमेव मरिष्यन्ति तद्वक्तुं प्रभवति वा भवान् ? एतदर्थं यावदपेक्षं कालं गृहाण ।

उत्तरम् । तर्हि प्रभवाम्येव वक्तुम् । यथा यथा द्रक्ष्यामि तथा तथा वदिष्यामि ।

---

## कृपया पथिकृद् भव

भुः । दास्याः पुत्र, नरकं गच्छ ।

भृत्यः । कृपया पुरो गच्छन् पन्थानं प्रदर्शयसि चेत् सम्यक् स्यात् । अन्यथा अपरिचिततया मार्गस्य कथं गच्छेयम् ?

---

## सङ्ग-फलम्

[ स्वामी लक्ष्मणशास्त्री ]

माता चैका पिता चैक एके स्वजनबान्धवाः ।
अहं च मुनिना नीतः स च नीतो गवाशिभिः ॥१॥

एतत्पद्यविषये वर्षीयसां मुखेनैकाख्यायिका श्रूयते । पुरा बभूव कश्चन श्रीदत्तो नाम मुनिः । स कस्मिंश्चिद्वने कृताश्रमस्तपश्चरति स्म । प्रवयसस्तस्य कदाचन तीर्थयात्रायामिच्छा जाता । स स्वस्मादाश्रमात् प्रस्थितस्तीर्थेषु पर्यटन् पथि कुत्रचित् निर्जनं वनमाससाद । तत्र च कमपि शून्यमाश्रमं निरीक्ष्य कुतूहलेन तस्मिन् प्रविष्टः । आश्रमाभ्यन्तरे न कोऽपि जनस्तदानीमासीत् । केवलं पञ्जराभ्यन्तर्गत एकः शुक एव तेन मुनिना तत्र दृष्टः । मुनिमायान्तं दृष्ट्वैव स शुको रोषेण रक्तनेत्रः किट-किट-शब्दं कुर्वाणः स्फुटमवदत् । कोऽसि त्वम् ? कुतस्त्वं शून्यमिममाश्रमं प्रविशसि ? नूनं त्वं तस्करोऽसि । सत्वरं बहिर्निस्सर । न चेदहं त्वां ताडयिष्ये । अहो ! किं त्वं बधिरोऽसि ? यन्मदीयं कथनं शृण्वन्नपि समुपसर्पसि, नूनं त्वमतिधृष्टोऽसि, निर्लज्जश्चासि ।

इति निष्कारणमेव तिरस्कुर्वाणस्य तस्य शुकस्य रोषपूर्णां दुरुक्तिं निशम्य मुनिः सत्वरमेव तस्मादाश्रमाद्बहिर्निःसृत्यान्यतोऽगमत्। तत्रैव वने परिभ्रमन् स मुनिर्नातिदूरे रम्यमेकमन्यमाश्रमं निरीक्ष्य, तस्मिन् कुतूहलादविक्षत्। तत्रापि पूर्ववत् पञ्जराभ्यन्तरस्थितमेकं शुकमेव केवलमपश्यत्। स्वाश्रमाभ्यन्तरे समायान्तं मुनिं विलोक्य प्रमुदितान्तरः शुकः स स्वदक्षिणचरणेन प्रणतिं विदधे, मधुरतरवाण्या च समभणत्। भगवन्! स्वागतमस्तु भवताम्। बृस्यामस्यां समुपविश्यताम्। मधुरतमं शीतलं च जलं पीयताम्। फलमूलानि यथेष्टमास्वाद्यन्ताम्। मार्गश्रमेण नूनं भवन्तः श्रान्ता जाताः। क्षणं विश्रम्यताम्। सूर्यस्तीव्रतरं तपति। अवसरश्चेत्कामं किञ्चिन्निद्रासुखमप्यनुभूयताम्। भवद्भिरत्रागत्य नूनमयमाश्रमः सनाथीकृतः पवित्रीकृतश्च। कुत्र विद्यते भवतामाश्रमः? भवतामाश्रमे सर्वे कुशलिनः सन्ति कच्चित्? वयं जगदीश्वराद् भवतां सर्वेषां निरामयमीहामहे।

इत्थं सत्कारगर्भितां मधुरतमां च वाचं तस्य शुकस्य निशम्य पूर्वाश्रमदृष्टस्य च तत्समानस्यैव शुकस्य तिरस्कारगर्भितां दुःसहाञ्च दुरुक्तिं स्मृत्वा स मुनिर्नितरां विस्मितोऽभूत्। बभाषे च तमेव शुकम्। पक्षिराज! अहं तवातिमधुराभिर्वाग्भिरतितराम्प्रमुदितो जातः। किन्तु शङ्का मदीयं चेतो बाधते। भवान् ममातिसत्कारं कृतवान्। त्वत्सदृशवयोरूपादिसम्पन्नः पूर्वाश्रमे दृष्टः पुनः शुको मम नितरां तिरस्कृतिं व्यदधात्। किमेतस्य कारणम्?

एवं मुनेर्वचनं निशम्य ज्ञातवृत्तान्तः स शुकस्तं मुनिमवदत्। भगवन्! श्रूयताम्।

माता चैका पिता चैक एके स्वजनबान्धवाः।
अहं च मुनिना नीतः स च नीतो गवाशिभिः॥ इति।

एतत्पद्यस्य निष्कर्षस्त्वयम्, यद् आवयोर्द्वयोर्माताप्येका, पिताप्येकः स्वजनबान्धवाश्चाप्येके। किन्त्वहं बाल्ये एव वयसि मुनिना तदाश्रम-

वासिना समानीय पालितोऽस्मि। सततं महात्मनां मुनीनां सङ्गतिकरणात् सुशीलः समागतानामतिथीनां च सत्कृतिकरणे प्रवीणोऽभवम्। भवद्भिः पूर्वाश्रमे दृष्टश्च स मदीयः सहजो भ्राता तु गोमांसभक्षकैश्चाण्डालैः स्वगृहं नीत्वा पालितः। तेषां दुःशीलानां सततं सङ्गतिकरणाच्च स स्वयं दुःशीलः समागतानामतिथिजनानां च तिरस्करणेऽतिनिपुणश्चाभवत्। सङ्गप्रभावेणावयोः सहजयोरपि स्वभावे महदन्तरमभूत्। सङ्गप्रभावोऽतितरां बलवान्। सङ्गप्रभावेणाकाशपातालयोरिव रात्रिदिवसयोरिव च पशुपक्षिणामपि प्रकृतौ महती विकृतिर्जायते, किम्पुनः कामक्रोधलोभैककिङ्कराणां सर्वेन्द्रियैर्विचित्रविषयजुषां च मानुषाणाम् ? अतो भवद्भिः सर्वथा नात्र विस्मयः कार्यः।

एवं तस्य शुकस्योक्तिं श्रुत्वा विगतशङ्कः स मुनिस्तमामन्त्र्य तस्मादाश्रमान्निष्क्रम्य च यथाभीष्टं प्रययौ।

---

श्रीरवीन्द्रनाथठाकुरस्य

## उर्वशी

[ उडालि-सुब्बरामशास्त्री ]

माता नासि न कन्यकासि न वधूर्भासि स्वयं सुन्दरी
रूपेणाऽप्रतिमेन नन्दनवने वासस्त्वया स्वीकृतः।
सन्ध्यायाः पतने च शाद्वलतटे कृष्ट्वा सुवर्णाञ्चलं
दीपाञ्श्रान्ततनुद्युतिर्न रचयेस्सान्ध्यान् गृहाणां पुरः ॥१॥
पङ्क्त्यां शङ्काजडाभ्यामतिशयविलसत्कम्प्रवक्षस्स्थलाढ्या
नम्रैर्दृष्टैर्विलासैस्स्मितहसितमुखैर्लज्जया त्वं निशीथे।
निस्तब्धे केलिकायै न विशसि भवनं नांशुकं स्मेरवक्त्रे
कुर्यास्तुल्योषसा त्वं विचरसि भुवनेऽकुण्ठिता स्वैरगत्याम् ॥२॥

वृन्तहीनसुमवत् स्फुटतां त्वं
प्राप्य यौवनमनोज्ञलतायाम् ।
प्रस्फुटासि समये किल कस्मि-
न्नुर्वशि प्रथितरूपविलासे ॥३॥
आदिमे किल वसन्तविभाते
व्युत्थितासि मथितोदधिमध्यात् ।
न्यस्य दक्षिणकरेऽमृतपात्रं
दक्षिणेतरकरे विषपात्रम् ॥४॥

यत्पादाम्भोजसीमामुदधिरयमहो ! भ्रान्तकल्लोलभङ्गै-
र्माहात्म्यं नीयमानोऽप्यपगतमहिमा सेवतेऽयं फणीव ।
मन्त्रैः क्ष्वेडापहारप्रणुतमहिमभिः पातयञ्छीर्षलक्षं
कुन्दस्वच्छप्रभासा सुरपतिविनुता शोभसेऽनिन्दिता त्वम् ॥५॥
आसीर्बाला कदापि त्वमिह ? महिमयुग् यौवनं शाश्वतं ते
कस्यागारे विशाले किमु रमणि ! मणिस्तोममुक्ताफलैस्त्वम् ।
क्रीडाद्रव्यैरनैषीर्ललितशिशुवयो बालकेलीविशेषैः
सिन्धावेकाकिनी त्वं विचरसि निबिडध्वान्तपूर्णोदरेऽस्मिन् ॥६॥
दीपैर्माणिक्यरूपैरनपगतविभारूषितद्वारदेशैः
कल्लोलह्लादगीतैरपगतमलिनस्मेरवक्त्राब्जशोभा ।
पर्यङ्के विद्रुमाणामधिगतशयना यासि निद्रां निशायां
क्वापि त्वं कस्य वाङ्कं समुपगतवती ? तुल्यजन्मा जगत्या ॥७॥

---

## असिधेनुका

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

अमरकोषे दृश्यते—स्याच्छस्त्री चासिपुत्री च च्छुरिका चासिधेनुका [२।८।९२] इति। व्याख्यातं चेदं क्षीरस्वामिना—शस्यतेऽनया शस्त्री। असेः पुत्रीव अल्पत्वात्। छुरति छिनत्ति छुरिका।

क्षुरिकापि ।" इति । अत्रासिधेनुकामधिकृत्य किमपि नोक्तम् । सर्वानन्देन विवृतम्—ङीषि शस्त्री । पुत्रीधेनुकाभ्यामसेः षष्ठीसमासः । छु र छेदने क्वुन् । छु रिका । इति । रायमुकुटेन सविस्तरं व्याख्यातम् —शस्यतेऽनया । शसु हिंसायां दाम्नीत्यादिना [ ३।२।१८२ ] ष्ट्रन्, षित्वात् ङीष् [ ४।१।४१ ] । असेः पुत्रीव स्वल्पत्वात् असिपुत्री । छुरति छिनत्ति शत्रून् । छुर छेदने । शिल्पिसंज्ञयोः [ उ० २।३५ ] इति क्वुन् । टापि छुरिका । असेः कार्ष्ण्यात् करिरूपस्य धेनुका करिणीव असिधेनुका । धेनुका स्त्री करेण्वाञ्च इति वक्ष्यते इति । भानुजिदीक्षितेन व्याख्यातम्—छुर छेदने क्वुन् । इगुपध इति कः, कन् वा । असेर्धेनुरिव इति । रघुनाथचक्रवर्त्तिनोक्तम्—असेधनुकेव इति ।

असिधेनुकाशब्दस्यार्थविषये टीकाकाराणामैकमत्यं दृश्यते, निर्वचने पुनर्विप्रतिपत्तिरुपलभ्यते । अत्रास्माभिर्मन्यते—यथा शस्त्रशब्दस्य स्त्रियां शस्त्रीति विलिखितम्; तथवासिशब्दस्य स्त्रियामसिधेनुरिति भवति, पुनरपि कनि असिधेनुकेति रूपम् । खड्गधेनु-गोधेनु-वडवाधेनु-प्रभृतिशब्देषु धेनुशब्दयोगेन स्त्रीवाचकत्वं सन्दृश्यते । धेनुकाशब्दस्यापि व्युत्पत्तिलभ्यार्थः पयस्विनी गौः, ततः या कापि गौः, ततश्च या कापि स्त्री इत्यर्थः सञ्जातः । "स्त्री स्यात् काचिन्मृणाल्यादिर्विवक्षापचये यदि" इति न्यायेन शस्त्रीशब्दश्छु रिकावाचकस्तथासिधेनुकेत्यपि । आङ्गलभाषायामपि elephant, rhinoceros प्रभृतिशब्दानां cow-शब्द-समभिव्याहारेण स्त्रीत्वं दृश्यते । अत एव धेनुका तु करेण्वाञ्च इत्यत्र धेनुका स्त्रीकरेण्वोश्च इति केचन पठन्ति । अत एव असे र्धेनुका इति विग्रहः समीचीन इति प्रतिभाति ।

---

## बहुलीभूताः प्रमादाः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

( १ )

सहृदयाः, कस्य वा न विदितं भारवेः सुभाषितरत्नम्—

सहसा विदधीत न क्रिया-
मविवेकः परमापदां पदम्।
वृणते हि विमृश्यकारिणं
गुणलुब्धाः स्वयमेव सम्पदः॥

इति। अस्य तृतीयं चरणं प्रायेण सुभाषितग्रन्थेषु—वृणुते हि विमृश्यकारिणमित्याकारं सन्दृश्यते। तत्तु सर्वथा न युक्तम्। अत्र सम्पदः इति कर्तृपदं बहुवचनान्तम्, अत एव क्रियायामपि बहुवचनमेवापेक्ष्यते। वृणुते इति स्वादिगणीयस्य धातोः प्रथमपुरुषैकवचने रूपम्। कविना पुनः क्रैयादिको धातुः प्रयुक्तः। तस्य च लटि प्रथमपुरुषबहुवचने रूपम्—वृणते इति। अत एवात्र वृणते इत्येव पठितव्यम्।

---

## नामरहस्यम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

( ६ )

कालिदासस्य सर्वस्वे शाकुन्तले शार्ङ्गरवशारद्वतयोः सन्दर्शनं भवति। शब्दयोः पुनरर्थो बहुभिर्नावबुध्यते। तत्र शृङ्गस्य विकारः शार्ङ्गम्। तस्य च धनुरित्यर्थः। शार्ङ्गस्येव रवो यस्य सः शार्ङ्गरवः। तस्य हि कण्ठस्वरो धनुष इव टङ्कारस्तीव्रश्च दूरप्रसारी चामर्षणश्च। अत एवाभिज्ञानशकुन्तलस्य चतुर्थेऽङ्के महर्षिणोक्तम्—गौतमि, आदिश्यन्तां शार्ङ्गरवमिश्राः शकुन्तलानयनाय इति। इतश्च तस्य शार्ङ्गरवे

बहुमानः प्रतीयते। ततश्च कुलपतिना पृष्टम्—क्व ते शार्ङ्गरवमिश्रा इति। ततश्च महर्षिणा शार्ङ्गरवमुखेनैव स्वसन्देशः प्रेषितः—शार्ङ्गरव, इति त्वया मद्वचनात् स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः इति। ततश्च शार्ङ्गरवेणैवोक्तम्—युगान्तरमारूढः सविता। त्वरतामत्रभवती। इति। पञ्चमेऽङ्के शार्ङ्गरवो जनाकीर्णं राजभवनं हुतवहपरीतमिव सम्भावयति। ततश्च "असावत्रभवान् वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनो वः प्रतिपालयति" इति राजप्रशंसनपरः पुरोहितस्तिरस्कृत इव—भो महाब्राह्मण, काममेतदभिनन्दनीयम्, तथापि वयमत्र मध्यस्थाः। कुतः—

भवन्ति नम्रास्तरवः फलागमै-
र्नवाम्बुभिर्दूरविलम्बिनो घनाः।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम्॥

इति। ततश्च राज्ञा सह संवादे तस्य शार्ङ्गस्येव रवः श्रोतॄणां श्रवणसरणिमुपयाति। यदा तेनोक्तम्—मूर्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु तदाशेषनरपतिशिरःसमभ्यर्चितशासनेन सम्राजोक्तम्—विशेषेणाधिक्षिप्तोऽस्मीति। ततश्च यदा राज्ञोक्तम् "इदं तत् प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते" इति, यदा च शकुन्तलालोभेन च धर्मभयेन चोभयथा समाकृष्यमाणो विभ्रान्तोऽसौ प्राकृत इव जनः गौतमीं तापसवृद्धे इत्यामन्त्र्यावोचत्—

स्त्रीणामशिक्षितपटुत्वममानुषीषु
सन्दृश्यते किमुत याः प्रतिबोधवत्यः।
प्रागन्तरिक्षगमनात् स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयन्ति॥

इति, तदा शार्ङ्गरवेणोक्तम्—इत्थमात्मकृतं प्रतिहतं चापलं दहति।

अतः परीक्ष्य कर्तव्यं विशेषात् सङ्गतं रहः।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम्॥

इति। अत्रापि मेघस्तनितनिर्घोषश्चकितमिव विदधाति श्रोतृजनम्। ततश्च यदा राज्ञा पृष्टम्—किमत्रभवतीप्रत्ययादेवास्मान् संयुतदोषाक्षरैः क्षिणुथ इति, तदा शार्ङ्गरवेणोक्तम्—श्रुतं भवद्भिरधरोत्तरम्।

आ जन्मनः शाठ्यमशिक्षितो य-
स्तस्याप्रमाणं वचनं जनस्य।
परातिसन्धानमधीयते यै-
र्विद्येति ते सन्तु किलाप्तवाचः॥

इति, तदा तस्य कण्ठध्वनिरद्रीनप्यारूढः, उदधीनपि वितीर्णः, भुजङ्गमानामपि वसतिं प्रविष्ट इत्यनुभूयते। यदा च तीव्रामिमां सोल्लुण्ठनोक्तिं सोढुमशक्नुवता सम्राजोक्तम्—भोः सत्यवादिन्, अभ्युपगतं तावदस्माभिरेवम्, किं पुनरिमामतिसन्धाय लभ्यत इति, तदा तत्क्षणादेव शार्ङ्गरवेण ससागराया धराया एकाधिपतिः प्रत्युक्तः—विनिपात इति। यदा च सरोषं निवृत्य शार्ङ्गरवेणोक्तं—किं पुरोभागे स्वातन्त्र्यमवलम्बसे, तदापि तस्य शार्ङ्गरवत्वं स्फुटमेव।

इदानीं शारद्वतशब्दस्यार्थो विव्रियते। शरद् नाम संवत्सरः। शरद् अस्यास्तीति शरद्वान्। वर्षीयान् इत्यर्थः। तस्य अपत्यं पुमान् शारद्वतः। कारणगुणा हि कार्यगुणानारभन्त इति न्यायेन शारद्वते वर्षिष्ठसुलभं गाम्भीर्यं विवेचकत्वं निरपेक्षत्वं च स्फुटीभवति। शाकुन्तले तस्याद्यं वचनम्—

अभ्यक्तमिव स्नातः शुचिरशुचिमिव प्रबुद्ध इव सुप्तम्।
बद्धमिव स्वैरगतिर्जनमिह सुखसङ्गिनमवैमि॥

यथा स्नातोऽभ्यक्ताद्बीभत्सते, यथा शुचिरशुचेर्बीभत्सते तथासौ सांसारिकसुखमेव स्वर्गमाकलयद्भ्यो जनेभ्यो बीभत्सते। प्रबुद्धः जागरितो यथा सुप्तं निद्राणं प्रबोधविरहितं जनं सानुकम्पं पश्यति, तथैवायमत्रत्यं सुखपरं जनं पश्यति। शार्ङ्गरवेणाधिभौतिकः क्लेशोऽनुभूतः, शारद्वतेन पुनराध्यात्मिकः इति विशेषः।

यदा तावद्राज्ञो विस्मरणनाटितकेन क्रोधस्य काष्ठामारूढेन शार्ङ्गरवेण विजितशार्ङ्गध्वनिनोक्तम्—

मा तावत्,

क्रुताभिमर्षामनुमन्यमानः
सुतां त्वया नाम मुनिर्विमान्यः ।
मुष्टं प्रतिग्राहयता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन ॥

इति, तदा शारद्वतेन पूर्वपक्षम् उत्तरपक्षं चोभयमेव परिहृत्य निर्णयो दत्तः—शार्ङ्गरव, विरम त्वमिदानीम् । शकुन्तले, वक्तव्यमुक्तमस्माभिः । सोऽयमत्रभवानेवमाह । दीयतामस्मै प्रत्ययप्रतिवचनम् इति ।

ततश्च सम्राट्शार्ङ्गरवयोः संवादः शारद्वतेनेत्थमुपसंहृतः —

शार्ङ्गरव, किमुत्तरेण । अनुष्ठितो गुरोः सन्देशः । प्रतिनिवर्तामहे वयम् । ( राजानं प्रति )

तदेषा भवतः कान्ता त्यज वैनां गृहाण वा ।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥

अविदितदुर्वासःशापवृत्तान्तैः शार्ङ्गरवशारद्वतादिभिः कृतकार्यद्वेषाद् राज्ञा विस्मरणमभिनीयते इति प्रतीतम् । तथापि शारद्वतेन राजा वा शकुन्तला वा लेशतोऽपि नाधिक्षिप्तः । समुन्नततमधर्माधिकरणस्य प्राड्विवाकेनेव तेन निर्णयो दत्तः—मुखमस्तीति वक्तव्यमिति न्यायेनेदानीं यत्किञ्चिदप्युच्यतां त्वया । एषा पुरतो दृश्यमानाश्रुबिन्दुनिचितगण्डस्थला तपोवनसंवर्द्धिता कैतवानभिज्ञा मुग्धा ललना तव पत्नी । त्वयैवैकदा स्वेच्छया पत्नीत्वेन स्वीकृतेति कान्तापदेन व्यज्यते । अस्याः परित्यागे स्वीकारे वा त्वमेव प्रमाणम् । परित्यागे विनिपातः, स्वीकारे स्वधर्मरक्षणमिति त्वन्यदेव । (It is a matter between you and your God.) इति

यदि शारद्वतोऽध्यात्मज्ञानेन शार्ङ्गरवमतिशेते तर्हि किमिति

कविप्रवरेण शार्ङ्गरवे भारो निहित इति चेत्, उच्यते—संसारेऽस्मिन् केवलेनाध्यात्मविज्ञानेन कार्याणि न सिध्यन्ति, पूर्वपक्षस्योत्तरपक्षोऽप्यपेक्ष्यत इति।

---

## अस्माकं मतं भाषा च

[ श्रीपट्टाभिराम-शास्त्री विद्यासागरः ]

यवनिका चेदपसार्यते तर्हि समग्रः प्रकाशो दृष्टिगोचरो भवति। एवमेव साम्प्रतं परिदृश्यमानानि सर्वाण्यपि मतानि वैदिकमतस्यांशभूतान्येव। यथा ह्येकस्यैव परस्य ब्रह्मणः प्रतिबिम्बभूता अंशभूता वा सर्वे जीवराशयः, तथैवास्मन्मतेन मतान्तराणां सम्बन्ध इति।

अस्मन्मतं यथा सर्वस्य देशस्य साधारणम्, मतान्तरैश्चेदं न विरुध्यते, तथैवास्मद्भाषापि संस्कृतं सर्वस्य जगतस्साधारण्यमावहति, भाषान्तरैश्च सह न विरुध्यते। न केवलं भाषान्तरैरियं न विरुध्यते, किन्तु सर्वासां भाषाणां मूलभूता विराजते। तासु तासु प्रान्तीयासु भाषासु प्रयुज्यमानानां विवरणसापेक्षाणां शब्दानां विवरणं संस्कृतभाषयैव क्रियत इति न तिरोहितमिदम्। भाषान्तराण्येकैकं प्रान्तदेशं वाश्रित्य स्वस्वरूपं लभन्ते, शब्ददारिद्र्यञ्चानुभवन्ति परस्परमीक्षन्ते, परमस्माकं निलिम्पवाणी सर्वमपि जगद्व्याप्नुवती अक्षय्यं शब्दकोशं बिभ्रती भाषान्तराणि चोज्जीवयन्ती चकास्ति। अनयैव भाषान्तराणि प्राणवन्ति, इयञ्च तेषां प्राणरूपा। प्राणवतामेव शरीराणां विकारो मरणं वा। न हि क्वचन प्राणा विक्रियन्ते म्रियन्ते वा। शरीरात्प्राणा निरगच्छन्निति हि लोकानां प्रवादः। यदि शरीरस्थानापन्नेभ्यो भाषान्तरेभ्यः प्राणरूपेयं निर्गच्छेत्, तर्हि भाषान्तराण्येव म्रियेरन्।

आधुनिका भाषाशास्त्रिणः प्राय एवं व्यवहरन्ति—यस्यैव भाषा जीवनं धत्ते, यस्यां प्रत्यब्दं प्रतिमासं वा शब्दा वर्द्धन्ते। संस्कृते तु—इतो बहोः कालात्पूर्वं पूर्वजैर्ये शब्दाः प्रयुक्तास्त एवान्यूनानतिरिक्तास्साम्प्रतमपि व्यवह्रियन्ते। न तत्र शब्दानां वृद्धिं पश्यामः। अत इयं जीवनरहितेति। परमिदं कथनं भाषाशास्त्रिणां न युक्तियुक्तमिव। यैव भाषा व्यवहारौपयिकान् पुष्कलान् शब्दान्, प्रत्यहं वैज्ञानिकदृशा सम्प्रति समुत्पाद्यमानानां पदार्थानां व्यवहाराय बह्वीः प्रकृतीः संख्यातीतांश्च प्रत्ययान् धत्ते, तत्र शब्दवृद्ध्यर्थं कः प्रश्नः? यत्र च दारिद्र्यं शब्दानां विलसति तत्रैव हि तद्वृद्धिरपेक्ष्यते। इदन्त्वङ्गीकर्तव्यम्—यत्पुरातनैः प्रयुक्तान् शब्दान् केनापि कारणेन वयं विस्मराम इति। अन्यदिदमस्माकं भाषाया गौरवम्—यदुत आ च भगवतः प्रथमायास्सृष्टेः आ चैतन्निमेषात् संस्कृतभाषायां भाषान्तरीयाश्शब्दा न प्रयुज्यन्त इति। शोभनं खल्विदं समेषामपि—यन्मर्यादायां वर्तनम्। त्रसलिङ्गात्मकेऽस्मिन् प्रपञ्चे पशवस्तिर्यञ्चः, लतास्तरवः, पर्वता वनानि सर्वे च मानवा यदि स्वस्वमर्यादामाश्रित्य वर्तन्ते, तर्हि मन्ये न कोऽपि विप्लवस्यावसरो भवेत्। कामं लोका विहगा इव वियति डयन्ताम्, जलचरा इव वा जले प्लवन्ताम्, तथापि ते विहगा जलचरा वा यथा स्वमर्यादायां वर्तन्ते तथास्माभिरपि वर्तितव्यम्। न हि पशवः पक्षिणो वा मर्यादामुल्लङ्घ्य वर्तन्ते। साधूक्तं श्रोत्रियतिलकेन श्रीनीलकण्ठेन—

'अस्पृश्योऽस्तु मलीमसोऽस्त्वनियताहारोऽस्त्वतोऽप्युद्भटै-
दौंर्गैरस्तु परश्शतैः परिवृतः काकस्ततः का क्षतिः।
भुङ्क्ते भोज्यमुपस्थितं समुपहूयैव स्वयं बान्धवान्
यस्सीदन् क्षुधया विचिन्तय ततो धन्यश्च पुण्यश्च कः॥ इति।

अत एव प्राक्तनाः पुरुषधौरेयाः सुविमृश्यानवरततत्त्वपरिशीलनपरिपक्वमतिवैभवा लोककल्याणैकतानमतयः सर्वत्र काञ्चन स्पृहणीयां मर्यादां समकल्पयन्। तत्र निलिम्पवाण्या अपि काचन लोभनीया

मर्यादा विलसति। तस्यां वर्तमानेयं देशेन कालेन जात्या वापरिच्छिन्ना आ च तुषारशैलात् आ च कुमारिकाया अद्य यावत् एकरूपेणैव विराजत इति किं ब्रूमो वयमस्माकं पचेलिमां सौभाग्यपरम्पराम्।

एवञ्चास्माकं मतस्य भाषायाश्च परस्परं विद्यमानं नान्तरीयकं सम्बन्धं परिवर्द्धयितुमेकैकेनापि भारतीयेन बद्धपरिकरेण भवितव्यम्। प्राचीनैः प्रवर्तितमिदं मतस्य भाषायाश्च तत्त्वं तत्र तत्र बीजरूपेण साम्प्रतं वर्तते। तच्च केवलं जलसेकमेवापेक्षते। केनाप्यनुकूलदैवेन वयं प्राज्यं स्वातन्त्र्यसुखमधुनानुभवामः। अवसरोऽयं शोभनः। यदि वयमनुष्ठानानुष्ठापनाध्ययनाध्यापनरूपं जलं सिञ्चामस्तर्हि नूनं क्रमशोऽङ्कुरितेभ्यः पुष्पितेभ्यश्च तेभ्यो बीजेभ्योऽचिरेणैव स्वादूनि फलान्यवाप्य तान्यास्वादयितुं प्रभवाम इति विश्वसिमि।

---

## रसमञ्जरी

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

( पूर्वतोऽनुवर्तते )

तथ्यवत्सलः। आर्य, अन्योऽप्यत्रार्थः सम्भवति। पर्याप्तिर्नामान्यूनता। अन्यूनतायाश्च प्रतियोगि यथा न्यूनत्वं तथाधिक्यमपि। अत एव अपर्याप्त-शब्दस्य निःसीमार्थकल्पने को दोषः?

वङ्गवत्सलः। अयमेव दोषः—तथाविधार्थे शब्दस्यास्य क्वापि प्रयोगो नोपलभ्यत इति।

तथ्यवत्सलः। अत्रैव प्रयोगो जाज्वल्यमानोऽवतिष्ठते। तथाचास्मकमाभाणकः—"हाते दइ पाते दइ। तबु बले कै कै।" दधि हस्ते दधि पात्रे दधि सर्वत्र दीप्यते। तथापि रौति मूर्खोऽयं क्व दधि क्व दधीति च। इति।

वङ्गवत्सलः। अत्रत्यं पदं विवादग्रस्तम्। विवादाध्यासितं पद प्रमाणं भवितुं नार्हति।

तथ्यवत्सलः। महाकवेर्भासस्य कर्णभारनाटके दृश्यते—अपर्याप्तं कनकं ददामीति। अत्र अपर्याप्तशब्दस्यार्थः अपरिमितमिति प्रकरणात् प्रतीयते।

वङ्गवत्सलः। अत एव भासस्य वङ्गीयत्वमस्माभिरुद्घोष्यते।

उपाध्यायः। अहो समीचीना ते युक्तिः।

अपर्याप्तपदस्यात्र निःसीमार्थो यतः स्थितः।
अतो गीताप्रबन्धोऽयं वङ्गीयेन विनिर्मितः॥

इति। वत्स, युक्त्यन्तरं वर्तते चेद् वर्ण्यताम्।

वङ्गवत्सलः। कथं न विद्येत? यद्यपि कोको-कफीप्रभृतीनि तानि तानि पानीयानि वर्तन्ते, तथापि चा एव सुतरां स्वदते वङ्गीयेभ्यः। येषां च यत् प्रियं भवति तेषां दैवतमपि प्रायेण तदाकारमेव भवति। न केवलं यदन्नः पुरुषस्तदन्नास्तस्य देवताः, यदेव हि येषां प्रियं तदेव हि तेषां दैवतम्। अत एव Dickens-विरचिते Pickwick Papers ग्रन्थे दृश्यते पिक्उइक्महोदयेन स्वदैवतं Bardell-गृहिणी tomato sauce रूपेण सम्बोधिता। गीतायां च श्रीभगवतोक्तं—

सर्वस्य चाहं हृदि सन्निविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनञ्च।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम्॥

इति। अत्र भगवतात्मानमुद्दिश्य चाहमित्युक्तम्। मुखेन पीत चापानीयं हृदि सन्निविशते, ततश्च स्मृतिज्ञानादीनां समुन्मेषो भवति, सोमरसलक्षणं चापानीयं पीत्वा भगवता वेदान्तो व्यरचि, वेदश्चावेदि। एतस्माच्च स्पष्टमेवावगम्यते वङ्गीयेनैव विदुषा

विरचिता भगवद्गीतेति, अन्यथा भगवान् कफारूपेण कोकोरूपेण वा निरूपितोऽभविष्यत्।

अध्यापकः। अहो अपूर्वा ते युक्तिः!

यदेव हि प्रियं येषां तत्तेषां दैवतं मतम्।
रक्षःप्रियं नृमांसं तद्रक्षसां दैवतं नरः॥
वङ्गीयानां प्रियं पेयं चारसो नात्र संशयः।
अवश्यमुपगन्तव्यं चा तेषां दैवतं परम्॥
निपातेन चकारेण चारूपेण स्थितेन च।
प्राप्तं श्रीकृष्णसायुज्यं गीतायां दृश्यते स्फुटम्॥
वङ्गेषु रचिता गीता वङ्गीयेनैव साधुना।
वङ्गवासिहितार्थाय पद्मनाभेन धीमता॥
वङ्गवत्सल! भद्रं ते चिरं जीव सुखी भव॥

---

## आगामिनि मासे।

अनुबन्धचतुष्टयम्। अशोकस्य शिलालेखः। रवीन्द्रनाथस्य स्वर्णमृगः। रसमञ्जरी। नामरहस्यम्। जिज्ञासा मीमांसा। पुस्तक-परिचयः। देवानांप्रिय इति पदस्यार्थः।

---

TECHNICAL TERMS AND TECHNIQUE OF

# Sanskrit Grammar

**A Critical, Comparative and Historical Study**

BY

**Kshitish Chandra Chatterji, Sastri, M. A., D. Litt**

*Professor, Calcutta University ;*
*Formerly Editor, Calcutta Oriental Journal,*
*Surabharati Oriental Literary Digest, etc., etc.*

**The Modern Review** (December, 1950) **says :**

"Honour to whom honour is due. Dr. Chatterji has broken entirely new ground in his **Technical Terms and Technique of Sanskrit Grammar** and demonstrated clearly that Bengal, though fallen on evil days, can even now produce works on Indology that invite and bear comparison with the best work produced in any part of the world. Who ever thought that all the technical terms admitted of satisfactory explanation and who ever imagined that a work on grammatical terminology could be made as delightful as a novel ? In this volume of nearly 350 pages the technical terms of Sanskrit grammar from the Brahmanas, Nirukta, Pratishakhyas, Panini, Katyayana, Patanjali, down to Prayogaratnamala and Harinamamrita have been considered critically and historically in all their bearings and apparently arbitrary technical terms like *gha*, *bha*, *lat, lit*, etc., have been traced to their sources. **We have nothing but admiration for this masterpiece of scholarship and warmly recommend it to our readers."**

*Price Rupees Twelve only.* *Foreign Rs. 14/-*

*Postage Extra.*

**VISVANATH CHATTERJI**

**81 Shyambazar Street,**

CALCUTTA—4

Phone : B. B. 4049

MANJUSHA ( Sanskrit Monthly Magazine )
*Registered No. C. 3278*



Printed and published by Sri Jyotish Chandra Chatterjee, B.A. from 81, Shyambazar Street, Calcutta—4. Printed at the Elm Press 63, Beadon Street, Calcutta—6,

श्रीशिवः शरणम्

दशम-वर्ष ] January, 1956 [ पञ्चमी संख्या

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## PRINCIPAL CONTENTS



**Next Month—Usha Memorial Number.**

Three complete dramas by Pandita Kṣamā Rao.

**Siddhānta-Kaumudī with Līlāvatī, a new Commentary.**


*Office :* 8, Bhupendra Bose Avenue, Calcutta—4.

Annual Subscription : Rupees Five only.

Foreign—Ten shillings.

Single copy : One Rupee.

# मञ्जूषाया नियमावली

मञ्जूषाया वार्षिकं मूल्यं रूपकपञ्चकम्। आश्विन (September) मासतो वर्षारम्भः। ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम्।

२। प्रतिसौरमासं दशमदिने (आङ्गलमासस्य चतुर्विंशे दिवसे) 8, Bhupendra Bose Avenue, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते।



श्रीविश्वनाथ-चट्टोपाध्यायः।

Phone :—B. B. 4049. ८, भूपेन्द्र वसु आभिन्यू, कलिकाता ४

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम्॥

# मञ्जूषा

January, 1956 | १८७७-शाकीयमाघस्य १०म-वर्षस्य पञ्चमी संख्या | Vol. X No. 5

## उपदेशरत्नानि

सुखार्थिनः कुतो विद्या नास्ति विद्यार्थिनः सुखम्।
सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा त्यजेत् सुखम्॥ महाभारत ५।४०।६

How can the man who ease pursues
The praise of knowledge ever earn ?
All those the path of toil must choose
Of ceaseless toil—who care to learn.
Who knowledge seeks must ease refuse
Who ease prefer must knowledge lose. MUIR.

सुखं वा यदि वा दुःखं प्रियं वा यदि वाप्रियम्।
प्राप्तं प्राप्तमुपासीत हृदयेनापराजितः॥ महा० १२।२५।२६

यथा वृक्षस्य संपुष्पितस्य दूराद् गन्धो वाति, एवं पुण्यस्य कर्मणो दूराद् गन्धो वाति। तैत्तिरीयारण्यक १०।४

As far and wide the vernal breeze
Sweet odours wafts from blooming trees,
So, too, the grateful savour speeds
To distant lands of virtuous deeds.

Old Fr. Ne sois paon en ton parer,
Ny perroquet en ton parler,
Ny cicogne en ton manger,
Ny oye aussi en ton marcher.

वेषेषु मयूरो मा भूर्मा कीरश्चापि भाषणे।
भोजने सारसो मा भूर्मा मरालो गमागमे॥

—

# भारती कालिदासस्य

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

कस्य वा सहृदयस्य न विदितः शाकुन्तलगतः प्रथमश्लोकः—

या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम्।
यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥

इति। अत्र स्रष्टुराद्या सृष्टिरित्यनेन भगवतो जलरूपा तनुर्बोध्यत इत्यत्र सर्वेषामैकमत्यम्। नव्येन केनचन व्याख्यात्रोच्यते—उपनिषदां पर्यालोचनेनाकाश एव ब्रह्मणः प्रथमा सृष्टिरिति प्रतीयते, अत एव स्रष्टुराद्या सृष्टिरित्यस्य स्रष्टुरपि पूर्ववर्तिनी सृष्टिरित्यर्थः कल्पयितव्यः। इति। "या सलिलरूपा तनुः स्रष्टुः प्रजापतेः ब्रह्मणः आद्या आदौ भवा अर्थात् ब्रह्मणः प्रागेव वर्तमानासीत्, अद्भ्यः एव ब्रह्माण्डस्य ब्रह्मणश्च जातत्वात्। तथा च मनुः—तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मिन् [ ! ] जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥" इति।

एतत् सर्वमविचारितरमणीयमिति प्रतिभाति। सर्वपथीनाः खलु कवयः। तैर्यत् किमपि मतमवलम्ब्य काव्यं विरच्यते। अप एव ससर्जादौ इति मनुवचने अप्शब्दस्य सृजधातोश्च सद्भावो विस्पष्टमेव तस्य कालिदासोक्तेराकरत्वं प्रमापयति। अन्यत्रापि सलिलस्यैव प्रधानतः संकीर्तनमुपलभ्यते। पुरुषसूक्तेऽपि श्रूयते—तम आसीत् तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदमिति। अथर्ववेदेऽपि दृश्यते—आपो अग्रे विश्वमावन् गर्भं दधाना अमृता ऋतज्ञाः [ ४।२।६ ] इति। एतन्मूलकमेव मनुवचनम्—

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥
ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम्।
महाभूतादि वृत्तौजाः प्रादुरासीत्तमोनुदः ॥
सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः।
अप एव ससर्जादौ तासु बीजमवासृजत् ॥ [ १।५-६, ८ ] इति

अथर्ववेदेऽप्याम्नातम्—आपो वत्सं जनयन्तीर्गर्भमग्रे समैरयन् [ ४।२।८ ] इति। अत्र भाष्यकृद्भिरुक्तम्—ईश्वरेण प्रथमसृष्टा आप इत्यादि।

अत्राद्याशब्देन श्रेष्ठत्वमपि प्रतिपादयितुमिष्यते, वारिणश्च श्रेष्ठत्वं कवीनामभीष्टम्। तथाच नैषधे श्रीहर्षः—आपो वहन्तीह हि लोकयात्रां यथा न भूतानि तथापराणीति। यवनदार्शनिकेनाप्युक्तम्—ariston men hudōr वाः श्रेष्ठं सर्वभूतेष्विति।

अत एव साम्प्रदायिकं व्याख्यानमेव समीचीनम्।

---

# नामरहस्यम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

शचीकुमारः शचीप्रसन्नः शचीराणीत्यादीनि नामानि सुप्रसिद्धानि वङ्गेषु। इन्द्रः शचीपतिरिति श्रूयते च वेदेषु। तत्र शचीशब्दस्य कोऽर्थ इति विचारे पुलोमजा शचीन्द्राणीत्यमरवचनं मानसमधिरोहति, ततश्च प्रतीयते देवराजस्य पत्न्या नाम शचीति। पाणिनीये धातुपाठे शच व्यक्तायां वाचीति, शक्ऌ शक्ताविति च पठ्यते। निघण्टौ वाङ्नामसु कर्मनामसु प्रज्ञानामसु च पठितः शचीशब्दः। वस्तुतस्तु शक्ऌ शक्तावित्यत एव शचीशब्दो निष्पन्नः। अस्य चार्थः—शक्तिः, सामर्थ्यं, बलमिति। इन्द्रो हि विशेषतो बलस्य देवता। तथाच यास्केनोक्तम्—या च का च बलकृतिरिन्द्रकर्मैव तत् [ निरुक्त ७।१० ] इति। अत एव इन्द्रः शचीपतिरित्युपवर्ण्यते स्म। तस्य च पत्नीन्द्राणीति स्तूयते। क्रमेण जनानां मतिः सञ्जाता "इन्द्रः शचीपतिः" इत्यस्यार्थः—इन्द्रः शचीं नाम कुमारीमुपयेमे इति। ततः प्रभृति शचीशब्द इन्द्राण्या नामान्तरमिति प्रथितं लोके।

---

# नर्मपरायणो नाट्यकारः

दिवाकरमहोदयस्य विचक्षण इति प्रसिद्धिरासीत्। एकदा वास-शकटेन गृहं प्रत्यावर्तमानोऽसौ केनचन कविना सम्बोधितः, महाभाग, विपन्नस्य मे क्रियतां किमपि साहाय्यकम् इति। तेनोक्तम्, भद्र स्वच्छन्दमुच्यताम्। सति सम्भवेऽवश्यमेव साहाय्यं ते विधास्यामीति। कविनोक्तम्, आर्य नाटकमेकं विरचितं मया। भवांश्च विवेचक इति प्रसिद्धिरस्ति। कृपया नाटकं वाचयित्वा स्वाभिमतं विवरणीयम्। हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा। इति। दिवाकरमहोदयेन गृहीता सा लिपिः परमागमनावसरे सा प्रनष्टा।

प्रतिरात्रमेव नाट्यशालायां नाटककारेण साकं दिवाकरमहोदयस्य साक्षात्कारः सञ्जायते स्म, तेन च पृच्छ्यते स्म, आर्य, रोचते वा नाटकं मे भवते? इति। तदानीं शोचनीया तस्य समवस्थाभवत्। विवर्णवदनेन घर्माक्तकलेवरेण कदाचित् तेनोक्तम्—अद्यापि तद्विलोकनस्यावसरो न लब्ध इति। कदाचिद्वोक्तम्, प्रथमोऽङ्कस्तावदतीव समीचीनः, द्वितीयस्तु नाद्यापि पठित इति। कदाचिद्वा, अहो इदानीमेव वाष्पशकटो ग्रहीतव्यः। अतीव विषीदामि, किन्तु नावकाशः साम्प्रतं वार्तालापस्य। इति। अगतिकतया मिथ्या तु वक्तव्यमेव, परं प्रकृतोपयोगीनि कति वा छलान्युद्भाव्येरन्।

व्यतिगताः केचन मासाः, ग्रन्थकारस्तु निष्करुणमेव दिवाकरमहोदयं निर्बध्नाति स्म। अन्ततश्चासौ पुनरपि स्वगृहं निपुणं व्यचिनोत्। ततश्च तस्य मनसि सञ्जातम्, कदाचिन्मया लिपिरसौ वासशकटे एव त्यक्तेति। तदात्व एव दिवाकरमहोदयो दूरध्वनियन्त्रेण वासशालायामधिकारिणमपृच्छत्, कियद्भ्यश्चिन्मासेभ्यः पूर्वं किमपि हस्तलिखितं पुस्तकं मया वासशकटे त्यक्तं वेति? सद्य एवोत्तरमागतम्—अथ किम्। किमपि नाटकं ग्रन्थकर्तुर्नामाङ्कितम्। मासचतुष्टयात्पूर्वम् अधिगतमात्रमेव तदस्माभिर्ग्रन्थकाराय प्रेषितम्। इति। नैसर्गिकं हि नैष्ठुर्यं नर्मिणां हृदयेष्विह।

---

## कतिपयशब्दः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

कतिपयशब्दमधिकृत्य काचन किंवदन्ती वङ्गेषु प्रामाणिकानां वदनेषु विहरति। आसीत् कश्चन प्रबलप्रतापो भूम्यधिकारी। स चात्यन्तं विद्यानुरागी। प्रतिदिनमेव सायं तस्य कर्मकराः प्रभोर्निदेशेन पुस्तकानि पठित्वा तं श्रावयन्ति स्म। अथैकदा काचन वङ्गभाषामयीं कथां शृण्वतस्तस्य कर्णकुहरे कतिपयशब्दः प्रवेशमासादयामास। स च हर्षस्य परां काष्ठामधिरूढः प्रोवाच, अहो किं वा पठितम्? पुनरपि पठ्यतामिदं वाक्यम्। वाचयित्रा पुनरप्युच्चारितं कतिपयशब्दसनाथं वाक्यम्। भूस्वामिमहोदयेनोक्तम्, अहो रामणीयकम्, अहो समीचीनत्वं कतिपयशब्दस्येति। ततश्च रात्रौ कस्यापि पत्रस्य लेखनमावश्यकमासीत्। कस्या अपि प्रजायै तत् पत्रं विलिखितम्। तत्र सन्दिष्टम्—तव च पितुः कुशलमाशास्यत इति। पत्रलेखनोत्तरं भूस्वामिनोक्तम्। अहो विस्मृतं खलु मया। पत्रे कतिपयशब्दः सन्निवेश्यताम्। इति। ततश्च लेखकेन पितुरित्यत्र पितृकतिपयानामिति लिखितम्। प्रजा च पत्रमधिगम्य भूस्वामिनं धर्माधिकरणेऽभियुयुजे, भूस्वामिकुलकलङ्केनानेन मम मातर्याक्षेपः कृत इति।

अतः परं व्याकरणमनुसरामः। कतिपयशब्दः शतपथब्राह्मणकालादारभ्य लोके वेदे चोपलभ्यते। पाणिनिना महर्षिणाष्टाध्याय्यां त्रिः शब्दस्यास्योल्लेखः कृतः, निर्वचनन्तु न प्रदर्शितम्। व्याकरणान्तरेष्वप्यस्य प्रकृतिप्रत्ययविभागो प्रायेण नैव दृष्टिपथमुपयाति। यथास्माभिर्दृश्यते तथा कतिशब्दात् तयपि विषमीभवनप्रक्रियया द्वितीयस्य तकारस्य पकारादेशे शब्दान्तरप्रतिभासेन चान्तोदात्तत्वे कतिपयशब्दनिष्पत्तिः। अत एव संख्याया अवयवे तयप् [ ५।२।४२ ] इत्यतोऽनन्तरम् कतेः पयच् इति पठनीयम्, तत ऊर्ध्वं द्वित्रिभ्यां तयस्यायज् वा, उभादुदात्तो नित्यमिति यथायथं पठनीयम्।

अत एव यथास्माभिर्दिनचतुष्टयमित्युच्यते तथा दिनकतिपयमित्युच्यते स्म। अत एव पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्त्तैर्जातिः [ २।१।६५ ] इति सूत्रेण कतिपयशब्दस्य परनिपातो विहितो महर्षिणा।

स्तोकशब्दविषये त्वेतद्विस्पष्टमेव सन्दृश्यते। आदौ तावत् स्तोकशब्दस्य बिन्दुरित्यर्थ आसीत्। तथाच ऋग्वेदे [ ३।२१।१ ] श्रूयते—

इमं नो यज्ञममृतेषु धेहीमा हव्या जातवेदो जुषस्व।
स्तोकानामग्ने मेदसो घृतस्य होतः प्राशान प्रथमो निषद्य॥ इति।

अत्र स्तोकानामित्यत्र न माषाणामश्नीयादितिवत् सम्बन्धसामान्ये षष्ठी। आधुनिकैरेषा Partitive Genitive इत्युच्यते। अथर्ववेदे [ ४।३८।६ ] चाम्नायते—

अन्तरिक्षेण सह वाजिनीवन् कर्की वत्सामिह रक्ष वाजिन्।
इमे ते स्तोका बहुला एह्यर्वाङियं ते कर्कीह ते मनोऽस्तु॥

इति। शतपथब्राह्मणे समस्त एव स्तोकशब्द उपलभ्यते। घृतस्तोका इव त्वत् मधुस्तोका इव त्वत् [ १।६।३।५ ] इति। "त्वच्छब्दस्त्वशब्दसमानार्थः सर्वनामसु पठितः। त्वत् एकस्मिन्नङ्गे घृतस्तोका इव घृतबिन्दवः परिदृश्यन्ते। तथा त्वत् एकत्राङ्गे मधोर्बिन्दव इव।" अत्रोभावेव घृतस्तोकमधुस्तोकशब्दावन्तोदात्तौ।

अथ गच्छता कालेन स्तोकशब्दो बिन्द्वर्थको बिन्दोरल्पपरिमाणत्वादल्पार्थे प्रयुज्यते स्म। रामायणमहाभारतादिष्वयमर्थो दृश्यते। अत एव महर्षिणा पाणिनिनागत्या कर्मधारयप्रकरणे पोटायुवतीति सूत्रे स्तोककतिपयशब्दौ सन्निविष्टौ।

त्वय्यासन्ने परिणतफलश्यामजम्बूवनान्ताः
सम्पत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः॥ [ मे० १।२३ ]

[ पोटायुवतिस्तोककतिपयेत्यादिना कतिपयशब्दस्य नोत्तरत्वं तस्य शास्त्रस्य प्रायिकत्वात्। मल्लिनाथः। ]

तत् कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रमः। शाकुन्तल २

तथा विनयनम्रापि मया माल्त्युपायतः।
नीता कतिपयाहोभिः सखीविश्रम्भसेव्यताम्॥ मालतीमाधव ३।१

कतिपयसहकारपुष्परम्यस्तनुतुहिनोऽल्पविनिद्रसिन्दुवारः।
सुरभिमुखहिमागमान्तशंसी समुपययौ शिशिरः स्मरैकबन्धुः॥
किरातार्जुनीय १०।३०

अनियतरुदितस्मितं विराजत् कतिपयकोमलदन्तकुड्मलाग्रम्।
वदनकमलकं शिशोः स्मरामि स्खलदसमञ्जसमञ्जुजल्पितं ते॥
उत्तररामचरित ४।४, मा० मा० १०।२

कतिपयकुसुमोद्गमः कदम्बः प्रियतमया परिवर्धितोऽयमासीत् ।
स्मरति गिरिमयूर एष देव्याः स्वजन इवात्र यतः प्रमोदमेति ॥ उत्तररामचरित ३।२०

आयुः कल्लोललोलं कतिपयदिवसस्थायिनी यौवनश्री-
रर्थाः संकल्पकल्पा घनसमयतडिद्विभ्रमा भोगपूराः ।
कण्ठाश्लेषोपगूढं तदपि न चिरं यत्प्रियाभिः प्रणीतं
ब्रह्मण्यासक्तचित्ता भवत भवभयाम्भोधिपारं तरीतुम् ॥ वैराग्यशतक ३६

तपस्यन्तः सन्तः किमधिनिवसामः सुरनदीं
गुणोदारान् दारानुत परिचरामः सविनयम् ।
पिबामः शास्त्रौघानुत विविधकाव्यामृतरसा-
न्न विद्मः किं कुर्मः कतिपयनिमेषायुषि जने ॥ वै० श० ७६

विपुलहृदयैरीशैरेतज्जगज्जनितं पुरा
विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा ।
इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते
कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ॥ वै० श० ५७

कदाचिच्च...कतिपयाप्तसुहृत्परिवृतो वीणावेणुमुरजमनोहरमन्तःपुरसङ्गीतकं ददर्श । कादम्बरी ५०

कतिपयदिवसापगमे च देवताप्रसादात्, सरसीमिव प्रतिमाशशी, विवेश गर्भो विलासवतीम् । का ४१८

ततः कतिपयदिवसापगमे च राजा...मन्त्रपूतेन वारिणा सुतमभिषिषेच । का० १११

ततः कतिपयदिवसापगमे मेघनादः पत्रलेखामादायागच्छत् । का० २२९ ।

तत् कतिपयदिवसान्तरितं वैशम्पायनाननदर्शनोत्सुकं मामविकल्पं विसर्जय त्वम् ।... वरमावाभ्यां कतिपयदिवसान् अनयोरप्यदर्शनकृतान् क्लेशाननुभूतान् । काद० २८०

कतिपयैर्दिवसैः परापताम । का० ३२३

ततो गतेषु कतिपयदिनेषु पौरजनसमक्षम्...। दशकुमारचरित, पूर्वपीठिका ४ ।

करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य [ २।३।३३ ] इति सूत्रात् स्तोकशब्दस्य पाणिनेः समयेऽल्पार्थे प्रयोगोऽनुमीयते । उक्तं च न्यासकारेण—एकार्थत्वेऽपि स्तोकादीनां भेदेनोपादानं पर्यायान्तरनिवृत्त्यर्थम् इति । स्तोकेन विषेण हत इति काशिकागत उदाहरणेऽप्यल्पार्थत्वं स्फुटमेव । स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन [ २।३।३९ ] इति सूत्रतोऽपि स एवार्थोऽवसीयते । अत एव काशिकादिषु स्तोकार्थ उदाहरणद्वयम्—स्तोकान्मुक्तः, अल्पान्मुक्त इति, पञ्चम्याः स्तोकादिभ्यः [ ६।२।२ ] इति सूत्रेऽपि तदेवोदा-

हरणद्वयं सन्दृश्यते। नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेणेति न्यायेन स्तोकशब्दस्याय-मेवार्थो गच्छता कालेन सुप्रतिष्ठितो लोके, बिन्दुरित्यर्थस्तु विस्मृतप्राय एव। अत एव स्तोकाल्पक्षुल्लकाः श्लक्ष्णं सूक्ष्मं दभ्रं कृशं तनुरित्यल्पार्थेष्वेवामरकोशे स्तोकशब्दस्य पाठः। अत एव प्रयोगा अस्मिन्नर्थ एवोपलभ्यन्ते। यथा—

[ तस्यादर्शनजः शोकः सुतस्याप्रतिकर्मणः।
उच्छोषयति मे प्राणान् वारि स्तोकमिवातपः॥ रा० २।६४।६९

अत्र यद्यपि मुद्रितेषु पुस्तकेषु वारि स्तोकम् इति पदद्वयं तथापि समस्तमेव वारिस्तोकपदं पठनीयमिति प्रतिभाति।

अग्निः स्तोको वर्धतेऽप्याज्यसिक्तो बीजं सिक्तं रोहसहस्रमेति।
आयव्ययौ विपुले सन्निशाम्य तस्मादल्पं नावमन्येत वित्तम्॥

महाभारत, १२।१२०।३८.

अत्रापि पाठविषये संशयो वर्तते। अग्निस्तोक इत्यपि पाठः सम्भवति। द्वयोरपि पक्षयोरपि-शब्दो भिन्नक्रमः। अत्र च श्लोकद्वय उभयोऽप्यर्थः सुघटः। ]

पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति।

अभिज्ञानशकुन्तल

श्रोणिभारादलसगमना स्तोकनम्रा स्तनाभ्याम्। मेघदूत।

अस्तोकविस्मयः। मालतीमाधव।

यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वा धनं
तत्प्राप्नोति मरुस्थलेऽपि पुरुषो मेरौ ततो नाधिकम्।
तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा म कृथाः
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम्॥ नीतिशतक।

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च॥

भूयांसो वायसाः सन्ति स्तोकाश्च भासपक्षिणः।

पथि शिखरिणां मूले मूले विलम्ब्य जडजनान्
मितपरिकरो गच्छन्नूर्ध्वं क्रमात्समदृश्यत।
गहनवसुधाः संपूर्योच्चैर्व्रजन् स निजात्पदा-
न्नद इव विनिर्यातः स्तोकैः कृतानुगमो जलैः॥

राजतरङ्गिणी २।१६४

रामायणे किष्किन्ध्याकाण्डे चतुष्पञ्चाशे सर्गे 'स्वल्पं हि कृतमिन्द्रेण क्षिपता ह्यशनिं पुरा' 'स्तोकं हि कृतमिन्द्रेण क्षिपता ह्यशनिं पुरा' इति पाठद्वितयमुपलभ्यते।

स्तोकनम्रा स्तनाभ्याम् इति कालिदासप्रयोगे विस्पष्टपष्ठवत्समास इति जातेरभावात् स्तोकशब्दस्य पूर्वनिपातो निराबाध एव। अस्तोकविस्मय इत्यत्राप्यस्तोकशब्देन समासस्तत्रापि बहुव्रीहिरिति स्तोकशब्दस्य परनिपातचिन्तैव न समुदेति। स्तोकतिलराशिप्रभृतिषु पञ्चतन्त्रादिगतेषूदाहरणेषु स्तोकशब्दस्य पूर्वनिपातः पाणिनिसूत्रविस्मरणमूलक इति प्रतिभाति।

---

# कर्मण्यकर्म यः पश्येत्

[ के. जी. कुलकर्णी ]

आसीत्पुरा व्याघ्र-वराह-गजादिवनचरोषितायाम् आम्रजम्बूवटादिवृक्षयुतायां शुकसारिकामयूरादिखगरवनिनादितायां विन्ध्याचलोपत्यकायामटव्यां वसन्वररुचिर्नाम महातत्त्वज्ञो गुरुः। खिस्तशतकस्य तृतीयं शतकं हि तत्। यथा वेदान्तन्यायादिषट्शास्त्रेषु स प्रवीणस्तथा भास-सौमिल्ल-कालिदासादिकवीनां चेतोहराणि काव्यानि तेन पठितानि। सदैवाध्ययनाध्यापनरतः सः। विद्वन्मुकुटमणिरपि न पण्डितंमन्यः, सकलशास्त्रपारं गतोऽपि न परप्रत्ययनेयबुद्धिः। वैदग्ध्य-कीर्तिमेतां तस्य श्रुत्वा बहवश्छात्रगणास्तस्य शिष्या बभूवुः।

"छात्रः प्रत्यूषस्युत्तिष्ठेत्" इति तस्य नियम आसीन्नाग्रहः। "स्वधर्मे निधनं श्रेयः" इति भगवद्वचने श्रद्दधानोऽपि परधर्मसहिष्णुरेवासीत्सः। छात्रेषु स सदा मातेव वत्सलः पितेव कर्तव्यकठोरो गुरुरिव सम्यङ् मार्गदर्शी। अध्यापनवेलायां तु मूर्त्तिमती शारदा देवी बद्धकरेव तस्य सविधेऽवर्तत। अतस्तस्याश्रमः सदैव छात्रगणैः संकुलस्तस्थौ। चतुरशीतिवयोऽवस्थां स्पृशतोऽपि न कथंचित्परिहीनं तस्याध्यापनकौशलम्। प्रवयसोऽपि किमप्यनन्यसामान्यं तेजो वव्रते तस्य मुखे। वार्द्धकेन किंचिन्मन्दगतेरपीषन्मन्दचक्षुषोऽपि भास्वतः सूर्यस्येव तस्य बुद्धिः प्रचकाशे। "छात्रैरपि स्वतन्त्र-विचार-शीलैर्भवितव्यं न परतन्त्रप्रज्ञैः" इति तस्य "निश्चितं चोत्तमं च" मतमासीत्। अत एव प्रश्नपराः शिष्यास्तस्यातीव प्रिया आसन्। उपनिषद्गतां स्वतन्त्र-प्रज्ञां स बहु मेने। वृद्धस्य तत्त्वान्यपि न स तिरश्चकार। स्वतन्त्रविचारशीलश्छात्रस्तस्यानन्दस्थानम्। तस्य बहवः शिष्या आसन्। ते सर्वे धर्मचरणशीलाः स्नानसन्ध्यादिभिः पूता गुरुसेवानिरता अध्ययनपराश्चासन्। वररुचिस्तेभ्यः प्रसङ्गविशेषेण नवनवान् सिद्धान्तान्कथयामास। "छात्रैः सदैव प्रगमनशीलैर्विचारपरायणैश्च भवितव्यम्" इति तस्योपदेश आसीत्।

एकदा प्रातःकाले वररुचिरध्यापनपर आसीत्। मन्दो वातो ववौ। वृक्षेषु खगा मधुरं चुकूजुः। नातिदूरे प्रवहन्त्या गोदावर्याः प्रसन्नाम्भसो रवः कर्णौ तोषयामास। गुरोः पुरस्ताद्विशालवटवृक्षस्याधस्तादासन्नपञ्चाशच्छात्राः स्वेषु स्वेष्वासनेष्ववस्थिता गुरोः सुधामधुराणि वाक्यानि शृण्वन्ति स्म। गुरुरप्युच्चासनस्थः—

"कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः।
स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत्॥"

इति भगवद्गीतान्तर्गतं श्लोकं विशदीकरोति। कर्माकर्मणोः सन्देहो बलवान् विद्वांसमपि कथं मोहयतीत्येतस्य सोदाहरणं स्पष्टीकरणं गुरुः कृतवान्। अस्मिन् संसारे सुज्ञमपि पुरुषं कर्माकर्मविवेको बाधते। उक्तं च "असंभवं हेममृगस्य जन्म तथापि रामो लुलुभे मृगाय" इति। 'कर्माकर्म-मोह-मुक्तो नरो दुर्लभः' इति गुरुः सावेशं कथयामास।

अस्मिन्नवसरे देवदत्तो नाम कश्चित्प्रश्नपरः शिष्यो गुरुमुवाच, "नैतत्सम्यग्गृहीतं मया। तदुदाहरणान्तरेण स्पष्टीक्रियताम्" इति।

गुरुरुवाच, "करोम्यवधानं देहि। जानीत वातमासेवितुं सुदूरमटव्यां गता यूयं केचिच्छात्राः कण्टकिनो द्रुमस्य समीप उपविष्टाः। अत्रान्तरे व्याधैरनुसृतः कोऽपि शशकः प्रधावन् द्रुमपरिसरस्थेषु पर्णेषु प्रविष्टः पर्णान्तरे च लीनः। अनन्तरं व्याधा अपि धनुर्बाणहस्तास्तत्स्थानं प्राप्ता युष्मान् पृच्छन्ति स्म, 'आलोकितः कश्चिच्छशकोऽत्रागतः? कुत्र वर्तते सः?'" इति। किंचिद्विरम्य गुरुर्ब्रह्मदत्तं पप्रच्छ, "कथय रे ब्रह्मदत्त, किं करिष्यसि त्वमस्मिन्नवसरे?" इति। ब्रह्मदत्तः प्रत्युवाच, "'नागतः शशकोऽत्र' इति वक्ष्यामि। देवदत्त उवाच, "तन्मिथ्याभाषितं भवेत्" इति। गुरुरुक्तवान्, "साधूक्तं देवदत्तेन। द्वौ प्रश्नावुपस्थितावत्र। 'असत्यं ब्रूयाद्वा प्राणिहिंसनं वानुमन्येत' इति। सत्यं ब्रूयाच्चेत्प्राणिहिंसा भवति। मिथ्या वदेच्चेदसत्यवचनस्य दोषो लगति। अत एवोक्तं भगवता श्रीकृष्णेन, 'किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः' इति।" इति।

कथितमेव हि पुरा यदीदृशे समये गुरोः प्रज्ञा सौदामिनीव प्रचकाशे, नवसिद्धान्तप्रसवा च बभूव। एतादृश एकः सिद्धान्तस्तस्य बुद्धौ पुस्फोर। एष स सिद्धान्तः "यदा यदा नरः किंकर्तव्यतामूढो भवति तदा तदा तेनान्तःकरणप्रवृत्तेरनुसारेण वर्तितव्यम्। सदसतोर्विवेक एतादृशे समये नोपयुक्तो भवति। एकस्मात्कर्मणोऽन्यत्कर्म श्रेय इत्यप्यध्यवसातुं न शक्यम्। उक्तं च कालिदासेन "सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" इति।

अध्यापनानन्तरं सर्वे शिष्याः स्वं स्वं स्थानं जग्मुः। एष सिद्धान्तो देवदत्तायातीव रुरुचे। सर्वदा विचारमग्न उदासीनोऽन्तर्मुखश्चैष शिष्यः। स्नानसन्ध्याशुचिर्भूतोऽपि धर्मस्य "ऐतिह्यम्" स न प्रमाणीचकार। उपरिनिर्दिष्टेन गुरोः सिद्धान्तेन तस्य हृदये नवः प्रकाश उद्भूतः। उदिते सूर्ये यथा तमो नश्यति तथा तस्य चेतसो निर्वेदोऽस्तं गतः। नष्टं नैराश्यम्। दीर्घकालस्थितः शरीरस्थो गदो यथा भिषग्वरस्यौषधेन नश्यति तथा तस्य हृदयव्यथा सपदि नष्टा। गतः सन्देहः। नष्टो मोहः। पुनरुज्जीवनमिव प्राप्तं तस्य। कालिदासस्य रम्यां कृतिं शाकुन्तलं वाचयित्वा यथा पाश्चात्यपण्डितस्तत्पुस्तकं शिरसि निधायानृत्यत्तथा गुरुवरस्यैतं सिद्धान्तं शिरोधार्यं कृत्वा ननर्तैव सुशिष्यः। तस्यान्तःकरणस्य भारो लघूभूतः, हर्षोत्फुल्ले तस्य नयनकमले। "सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" इत्येतं सिद्धान्तं स बहुवारमुच्चैः पपाठ। आसीच्चास्य मनसि, "अहो सिद्धान्तः! अहो गुरोर्वैदग्ध्यम्! अहो कर्माकर्मविवेकः! यथा श्रीकतत्त्वज्ञो महाभाग आर्कीमिडिः फलकदण्डस्यावलम्बनेन पृथिवीमाकाशे क्षेप्तुमैच्छत्तथाहमेतस्य सिद्धान्तस्य साहाय्येनैतां जीवितयात्रां तृणीकरोमि।" इति मनसि कृत्वा कर्माकर्मसन्देहस्य समये स एतं सिद्धान्तमुपयुयुजे। पितृदत्तं नवकुठारं गृहीत्वा महात्मा जार्ज-वाशिंगटनो यथा तं वृक्षे वृक्षे प्राहरत् तथा स एतं सिद्धान्तं सन्देहे सन्देहे प्रमाणीकृतवान्।

एकस्मिन् दिने गुरोः स्नानवेलाऽऽसीत्। तस्य वस्त्रभाण्डनयनस्य देवदत्तस्य वारः। किन्तु नवसिद्धान्तपरिदीप्तो देवदत्तो गन्तुमना न बभूव। स उवाच, "नाहमागमिष्याम्यद्य। यतो व्याधितचित्तशरीरोऽहमधुना।" इति। अन्ये शिष्या गुरुश्चैतेन तस्योत्तरेण विस्मयचकिता बभूवुः। किन्तु सहनशीलो गुरुः सुशिष्यकृतमेतं प्रथममपराधं मनसि न कृतवान्। देवदत्तं विहाय सर्वे स्नानार्थं गताः। (क्रमशः)

---

## ऋग्वेदभाष्यविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

अभि त्यं मेषं पुरुहूतमृग्मियम् [ ऋ० सं० १।५१।१ ] इति मन्त्रं व्याचक्षाणेन सायणाचार्येणोक्तम्। मेषम्। मिष स्पर्धायाम्। इगुपधलक्षणे के प्राप्ते देवसेनमेषादयः पचादिषु द्रष्टव्या इति वचनादच्प्रत्ययः। इति। शं नो देवीरभिष्टये [ अथर्वसं १।६।१ ] इत्याथर्वणभाष्येऽपि तदेवोक्तम्। अन्यत्रापि देवसेनमेषादयः पचादिषु द्रष्टव्या इति वचनं भाष्ये समुद्धृतमुपलभ्यते। वस्तुतस्तु देवसेवमेषादयः पचादिषु द्रष्टव्या इति शुद्धः पाठः, भाष्यकाशिकाद्यानुगुण्यात् क्षोदक्षमत्वाच्च। तथाच भाष्यम् [ ३।१।१३५ ]

—कथं मेषः देवः सेवः इति ? पचादिषु पाठः करिष्यते। इति। काशिकायामपि दृश्यते—देवसेवमेषादयः पचादौ पठितव्याः। इति। सीव्यतेरिगुपधेत्यादिना कः प्राप्तः, पचादिपाठाभ्युपगमादच्प्रत्यय इति युक्तिरप्यत्रैवानुकूला।

---

कवीन्द्र-रवीन्द्रनाथस्य

## पुरस्कारः

[ श्रीफटिकलालदासकृतस्तात्पर्यानुवादः ]

वर्षाप्रभाते मृदुमन्दशब्दैर्वृष्टौ पतन्त्यां स्तनितैर्घनानां
समेत्य कान्तं परितर्जयन्ती कविप्रियैतां निजगाद वाचम् ॥१॥
"अनारतं त्वं निरतोऽसि कष्टे छन्दोवितानैर्नवकाव्यसृष्टौ।
जानासि किं भोः पिपतिष्वगारं सदैव शीर्षोपरि विद्यते नौ ॥२॥
अदीर्घ-दीर्घाक्षर-बद्ध-पादैः श्लोकैर्गजाश्वं किमु लप्स्यसे त्वम्।
एकोऽपि शस्यस्य कणो न जातु येषां प्रभावाद् गृहमागतो मे ॥३॥
कुत्रापि पात्रे नहि भोज्यमस्ति गृहं वचोऽवस्करपूर्णमेव।
वाण्याधुनाहर्निशबालकेलिं विहाय लक्ष्म्याः पदमाश्रयस्व ॥४॥
विमुञ्च गेहाद् बहिरेव दूरे ग्रन्थांस्त्वमेतान् मसिलेखने च।
लब्धा हि विद्याः कति यत्नपूर्वं न वेत्सि वित्तागममार्गमेकम् ॥५॥"
भयङ्करां तां प्रसमीक्ष्य मूर्तिं बभूव कम्पः कविचित्तमध्ये।
तथापि हासस्फुरिताधरोष्ठो वाचं बभाषे विहिताञ्जलिः सः ॥६॥
"बिभेमि नाहं मुखताडनात्ते मय्येव लक्ष्मीः सदया सदैव।
गृहेऽस्ति सा मे न च भाण्डमध्ये प्रत्येति कस्ते वचने प्रियेऽस्मिन् ॥७॥
मन्ये विचित्रा गतिरेव दैवी सर्वं यतो मे विपरीतमस्ति।
साऽचञ्चला मां प्रति चञ्चला श्रीः स्थिरा न वाणी बहुसेवितापि ॥८॥
मित्राक्षरं तद् विचिनोमि नित्यं स्वर्गं च मर्त्यं च पिधाय कक्षम्।
स्याच्चेत् प्रमादः क्षणिकोऽपि तत्र जायेत नूनं सुमहाननर्थः ॥९॥"
अन्तर्हसित्वा बहिरेव रुष्टा प्रोवाच सा तं "परिहाससाधो।
तर्केण जेतुं न हि पारयामि संसारसौख्यं मम नष्टमेव ॥१०॥"

( क्रमशः )

---

# लावण्यम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

सहृदयाः, कस्य वा लोचनयुगलं न विलोभयति लावण्यमिह जगति, कस्य वा न विदितं लावण्यस्य लक्षणम्—

मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा।
प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥

इति? टीकाकृद्भिः प्रायेण लवणाशब्दात् ष्यञा लावण्यशब्दो व्युत्पाद्यते। तत्तु सचेतसां चेतसां प्रीतये न भवति। कामं लवणमाहार्येषु स्वादुतां समर्पयति* कामं तत्र चाकचिक्यं वर्तते, तथापि लवणेन क्षारेण साकं लावण्यस्य सम्बन्धः समुद्वेगमिव जनयति सहृदयानां हृदयेषु।

रामायणे [ अरण्य २५।५ ] दृश्यते—

वनरामण्यकं यत्र जलरामण्यकं तथा।
सन्निकृष्टं च यत्र स्यात् समित्पुष्पकुशोदकम्॥

इति। अत्रच्छन्दोऽनुरोधेन रामणीयकशब्देन रामण्यकरूपं स्वीकृतमिति प्रतिभाति। रमणीयशब्दाच्च योपधाद् गुरूपोत्तमाद् वुञ् इति भावे वुञि रामणीयकशब्दस्य निष्पत्तिः। ततश्च रमणीयस्य भाव इति तस्यार्थ इति सिध्यति। लावण्यशब्दस्यापि स एवार्थः। प्रथमतस्तावद् रामणीयकं रामण्यकं सञ्जातम्, ततो रामण्यं ततो रलयोरभेद इति न्यायेन सन्निहितयोरनुनासिकयोरेकस्य विषमीकरणप्रक्रियया चाननुनासिकीकरणेन लावण्यमिति निष्पन्नमिति प्रतिभाति।

---

* तथाच कथासरित्सागरे दृश्यते—

बभूव गह्वरग्रामवासी कोऽपि जडः पुमान्।
स मित्रेण गृहं जातु नीतो नगरवासिना।
भोजितो लवणस्वादून्यन्नानि व्यञ्जनानि च॥
केनेयं स्वादुतान्नादेरित्यपृच्छत् स गह्वरः।
प्राधान्याल्लवणेनेति तेनोचे सुहृदा तदा॥
तदेव तर्हि भोक्तव्यमित्युक्त्वा लवणस्य सः।
पिष्टस्य मुष्टिमादाय प्रक्षिप्याभक्षयन्मुखे॥
तच्चूर्णं तस्य दुर्धुद्धेरोष्ठौ श्मश्रूणि चालिपत्।
हसतस्तु जनस्यात्र मुखं धवलतां ययौ॥

---

यज्ञे आश्रावणप्रत्याश्रावण-सम्बन्धितया कानिचन वाक्यानि प्रयुज्यन्ते। यथा शातपथे श्रूयते ओश्रावयेति चतुरक्षरम्। अस्तु श्रौषडिति चतुरक्षरम्। यजेति द्व्यक्षरम्। ये यजामह इति पञ्चाक्षरम्। द्व्यक्षरो वषट्कारः। [१२।३।३-४] इति। एष वै सप्तदशाक्षरश्छन्दस्यः। एतेषामक्षराणां विष्णुरूपतोच्यते स्मृतौ। यथा—

चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च।
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु॥ इति।

अत्र विचारः—कुत इमान्येवाक्षराणि यज्ञ उच्यमानानि विष्णुरूपत्वेन स्तूयन्ते। कुतो वा एषामक्षराणां छन्दस्यशब्देन ब्राह्मणे प्रशंसा। कश्चैषामर्थ इति। यत्त इतरेषामक्षराणां यज्ञ उपयोगाविशेषेऽपि यज्ञस्य हविर्दानरूपत्वेन साक्षात्तत्सम्बन्धित्वेनैषामेव प्रशस्यत्वम्। वषट्कारशब्देन देवताभ्यः प्रदीयमानस्य हविषो दानबोधनाय यज्ञे प्रयुज्यमानो वौषडिति शब्दो गृह्यते। दानबोधकत्वेन तस्य साक्षादेव यज्ञसम्बन्धिता। एवं वषट्कारस्य याज्यान्ते प्रयुज्यमानत्वेन याज्यापाठार्थं वक्तुः प्रेरणार्थान्योश्रावयेति वाक्यानीति सर्वेषां साक्षाद्यागबोधने व्यापाराद्विशिष्टतैतेषामत एव प्रशस्यत्वमिति। तन्न सम्यगिव। साक्षाद्दानसंबद्धानां यज्ञे प्रयुज्यमानानामपरेषामक्षराणां सत्त्वेन तद्ग्रहणे विनिगमनाभावात्। साक्षाद्दानसम्बद्धानामग्रहणे परम्परया दानसम्बन्धिनामुक्तानां ग्रहणे विशेषाभावः। तानि च दानसम्बद्धान्यक्षराणि। याज्यान्ते प्रयुज्यमानः प्रणव एकमक्षरं वषट्कारो द्व्यक्षरोऽनुवषट्कारश्च त्रयोदशाक्षरः। अनुवषट्कारश्च वषट्कारानुमन्त्रणार्थौ मन्त्र इति मन्त्रादौ प्रणवग्रहणे १+२+१४=१७ सप्तदशान्यक्षराणि भवन्ति। साक्षाद्दानेनेमानि सम्बद्धानि। तदुक्तं श्रौतसूत्र आश्वलायनेन [१।५।१७]—"वागोजः सहओजो मयि प्राणापानाविति वषट्कारमुक्त्वोत्त्वानुमन्त्रयेत" इति। अनुमन्त्रणपदार्थौ याज्ञिकैर्विव्रियते—

मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत्।
शेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम्॥ इति।

किञ्चोक्तच्छन्दस्यत्वेनोच्यमानवाक्येषु प्लुतवचनस्य निर्हेतुकत्वम्। किञ्चोक्तानि सर्वाणि वाक्यानि न यागसम्बद्धानि। चतुर्थवाक्यस्य होतुर्वंशशुद्धिविषयकत्वात्। तदुक्तप्रतिप्रादने मीमांसकाः स्त्र्यपराधात्पत्युः पुत्रदर्शनेन सम्यग्वंशज्ञानाभावेन सामान्यरूपेण यच्छन्दोपादानम्—ये यजामह इति। ये वा के वा सम्यग्ज्ञानाभावेनानिर्णयः। यजामहे याज्यां पठाम इति तदर्थं ब्रुवते। किञ्चैतद्वाक्यं होत्रा पठनीयम् यजामह इत्यनेन याज्यापाठबोधनात्। याज्यापाठस्य होतृकर्मत्वात्। यज्ञे च होतुरैक्यम्। तथा सति यजामह इति बहुवचनस्यानुपपत्तिः। सरूप-

निर्णयाभावेनादरार्थे बहुवचनमित्यस्यायुक्तत्वात्। साक्षाद्दानबोधकवषट्कारेणाविभाग-मापन्नाया याज्याया यागेनाविदूरसम्बन्धयोग्याया अग्रहणं विदूरस्य प्रवर्तकवाक्य-प्रैषणायोपयोगिनोरध्वर्य्वाग्नीध्रयोर्वाक्योवाक्यस्य छन्दस्यत्वेन स्तवस्य नियुंक्तिकत्वम्। श्रौषडितिपदस्य परोक्षवृत्तिनः प्रत्यक्षवृत्तिता कल्पनीयेति दोषश्च। किञ्च यजधातो-र्यजामह इत्यात्मेनपदं नोपपद्यते। उभयपदयोगिनो धातोः फलस्य कर्तृगामित्वविवक्षाया-मात्मनेपदमिति स्वरितञितः कर्त्रभिप्राये क्रियाफले [ १।३।१२ ] इति पाणिनिनाऽ-भिधानात्। यजामहइतिशब्दप्रयोक्तुर्याज्यावक्तुर्होतुर्यागफलासम्बन्धित्वेनात्मनेपदस्या-युक्तत्वं चेति।

( क्रमशः )

# रसमञ्जरी

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

विद्यालयपरिदर्शकः। ( शालां प्रविश्य ) वत्साः, किं वा पठ्यते श्रीमद्भिः।

छात्राः। आर्य, संस्कृतम्।

परि०। सम्यक्। गोशब्दस्य द्वितीयाबहुवचने किं वा रूपं स्यात्?

पृष्टश्छात्रः प्रतिपत्तिमूढस्तिष्ठति। प्रधानशिक्षकश्च परिदर्शकस्य पृष्ठतोऽवस्थितः स्वगात्रेषु हस्तं न्यस्यति।

छात्रः। आं ज्ञातम्। शरीरम्।

द्वितीयश्छात्रः। गाः।

परिदर्शकः सुसन्तुष्टः प्रधानशिक्षकेण सह कक्षाद् विनिर्गतः।

तृतीयश्छात्रः। कथं वा त्वया प्रतीतं गा इति?

द्वितीयश्छात्रः। अरे मूर्ख, प्रधानशिक्षकस्तावत् स्वगात्रेषु हस्तं विन्यस्यन्नासीत्। गात्रशब्दश्च वङ्गभाषया गा इत्युच्यते। विसर्गमन्तरेण च संस्कृतमेव न भवति। अत एव विसर्गसंयोजनेन मया गाः इत्युक्तम्। मम मित्रेण पुनः सुसंस्कृत एव शब्दः प्रयोक्तव्य इति मन्यमानेन भ्रान्तम्। यद्यपि भाष्यकृद्भिरुक्तम्—अन्तरेणापि शब्द-प्रयोगं बहवोऽर्था गम्यन्ते तद् यथाक्षिनिकोचैः पाणिविहारैश्च इति, तथाप्यक्षिनिको-चादिभिरन्तरान्तरा सन्दिग्धोऽर्थो गम्यते। तथाहि कश्चनाङ्गलो हिस्पानीदेशं गतस्तत्र चाट्टशूलेऽवस्थितः। एकदा प्रातराशं भुञ्जानोऽसौ दुग्धं पातुमियेष। दुग्धस्य च हिस्पानी-प्रतिशब्दस्तस्याज्ञात एवासीत्। अत एव तेन पत्रखण्डमादाय तत्र गोः प्रतिमूर्तिरङ्किता, परिवेषकाय च प्रदर्शिता। हिस्पानीदेशे च बलीवर्दताडनक्रीडा (bull-baiting) सुप्रथितैव। अत एव परिवेषकेण आं ज्ञातमित्युक्त्वा नचिरादेव वृषभताडितक-क्रीडाभूमेः प्रवेशपत्रं (ticket) क्रीत्वानीय विस्मयमानस्य तस्य हस्ते समर्पितम्।

सर्वे छात्रास्तस्य नैपुण्यं प्रशंसन्ति स्म।

# अप्पाशास्त्रिराशिवडेकरपुरस्कारः

[ *A prize of Rupees Ten will be awarded in memory of the Late Appa Sastri Rashivadekar for the best Sanskrit renderiug of the following extracts. In the matter of the award the Editor's decision must be regarded as final and legally binding. Translations must reach the Editor on or before the last day of February, 1956.* ]

Behold I commit myself unto Thy mercy, I resign myself unto thy hands. Deal with me according to Thy goodness, not according to my wickedness and iniquity.

I offer up also unto Thee all my good works, though they be very small and imperfect, in order that Thou mayest amend and sanctify them, that Thou mayest make them grateful and acceptable unto Thee, and always be perfecting them more and more ; and bring me also, slothful and unprofitable as I am, to a good and blessed end.

Moreover I offer up unto Thee the necessities of parents, friends, brethren, sisters, and of all those who are dear unto me, or who have done good either to myself or others for Thy love, that all may feel the present help of Thy grace, the aid of Thy consolation, protection from dangers, deliverance from pain ; and that being rescued from all evils, they may with joy return abundant thanksgivings unto Thee.

I offer up also unto Thee prayers and intercessions, for those especially who have in any matter hurt, grieved, or found fault with me, or who have done me an injury or caused me anger. For all those also, whom at any time I may have vexed, troubled, burdened, and scandalized, by words or deeds, knowingly or in ignorance ; that Thou wouldst grant us all equally pardon for our sins, and for our offences against each other.

Take away from our hearts, O Lord, all suspiciousness, indignation, wrath, and contention, and whatsoever may wound charity, and lessen brotherly love.

Have mercy, O Lord, have mercy on those that crave Thy mercy, give grace unto them that stand in need thereof, and make us so to live that we may be worthy to enjoy Thy grace, and attain to life eternal.

---

# पुस्तकपरिचयः

**श्रीमत्सुबोधसंस्कृतम्** ( Easy Steps to Sanskrit ). B. B. Kamat विरचितम् 11, Sarasvata Brahman Colony, Poona 2 इत्यतो ग्रन्थकारेण प्रकाशितम्। First Part (pp. 103) Rs. 2/-, Second Part (pp. 169) Re. 1/-, Third Part (pp. 150) Re. 1/-

इदानीं खलु बहुभिः संस्कृताध्ययनाय प्रयत्यते परं सुलभसमीचीनग्रन्थाभावात् तेषां प्रयत्नाः प्रायेण साफल्यं नाधिगच्छन्ति। कमतमहोदयेन विरचितं हिन्दीभाषामयमिदं स्वल्पमूल्यं पुस्तकत्रितयं संस्कृतशिक्षार्थिनां महत उपकाराय स्यात्। अत्रादावन्ते च व्याकरणसूत्राणि संक्षेपेण सुबोधतया च विवृतानि, मध्ये च चित्ताकर्षकाः पाठाः सुसन्निविष्टाश्चित्रैश्च समुद्भासिताः। प्रथमभागगताः पाठा अतीव सरलाः सन्धिरहिताश्च, द्वितीयभागस्थास्ततः किञ्चित् कठिनास्तृतीयभागस्थाश्च लेशतः कठिनतराः। एतेषां पुस्तकानामध्ययनेनानुशीलनेन च संस्कृतभाषायां न केवलं प्रवेशः स्यात् परं संस्कृतभाषणे लेखने च नैपुण्यमपि स्यादित्यत्र नास्ति संशयलेशोऽपि।

**श्रीज्ञानेश्वरचरितम्।** आङ्गलानुवादसहितम्। पण्डितया क्षमादेव्या विरचितम्। Srimati Lila Dayal, 37 New Marine Lines, Bombay इत्यतः N. M. Tripathi Ltd., Book-sellers, Bombay 2 इत्यतो वा लभ्यम्। मूल्यं सार्धं रूप्यकचतुष्टयम्।

कस्य वा न विदितं मञ्जूषावाचकस्य विद्वद्वर्यायाः क्षमादेव्याः पाण्डित्यं च कवित्वं च? प्रायेण प्रतिमासमेव कविप्रवराया अस्या लेखा अस्या एव परमविदुष्या दुहित्रा श्रीमत्या लीलादेव्या सुसंस्कृता विभूषयन्ति मञ्जूषाकलेवरम्। पण्डितायाश्च पतिव्रतायाश्च क्षमादेव्या लेखेषु ग्राम्यतायाश्चाश्लीलतायाश्च सर्वथाऽऽभावात् प्रसादादिविविधगुणगणस्य च निरतिशयं सद्भावाल्लेखा इमे छात्राणां विशेषत उपयोगिनः संवृत्ताः। केचन ग्रन्थाः केषुचिद्विद्यालयेषु पाठ्यतया निर्दिष्टाः, परं सर्व एव सर्वेषु विद्यालयेषु पाठ्यकोटौ निवेशनीया इति निर्मायं ब्रूमः। तस्याः पुस्तकानां नामानि मूल्यानि चात्र निर्दिश्यन्ते। सत्यग्रहगीता २॥०, उत्तरसत्यग्रहगीता ६॥०, शङ्करजीवनाख्यानीयम् २), मीरालहरी ( आङ्लानुवादसहिता ) २॥०, श्रीतुकारामचरितम् ( आङ्लानुवादसहितम् ) ५॥०, कथापञ्चकम् १), कथामुक्तावली ( षोडशानां चित्ताकर्षकाणां परमरमणीयानां गद्यकथानां संग्रहः ) ४॥०, श्रीरामदासचरितम् ( आङ्गलानुवादसहितम् ) ५)।

**Astrological Magazine** Annual Number, January, 1956. Edited by Dr. B. V. Raman, Bangalore 3. Annual Subscription : Rs.12/- only.

विविधविषयभासुरा परमरमणीयेयं पत्रिकावश्यं संग्राह्या वाचकमहाभागैर्विशेषतश्च ज्योतिषानुरागिभिः।

---

# Manjusha

Vol. IV (about 400 pages)—29 storiettes, hymn from the Rigveda with commentary, छात्री versus छात्रा, पतत्र versus पत्र, Goethe's maxims (original German with Sanskrit translation), Saratchandra's Niṣkṛti, on Pāṇini's ॠ, महाभाष्य, विश्रम versus विश्राम, सेवका versus सेविका, अन्योन्य, 11 humorous skits. Rs. 6/8/-.

Vol. V (about 400 pages) 16 storiettes, 4 long stories, 12 poems, humorous skits, discussions on परःशत, भ्रातृव्य, सूनृता, आज्ञो दोऽनास्यविहरणे, on the Anubandhas, on grammatical gender, Sanskrit equivalent of "horse-power", Tagore's poems, Language as fossil history, on Sāyaṇa's Bhāṣya, The Śivasūtras and the Sanskrit Alphabet, Patañjali's Mahābhāṣya, Hymns from the Avesta, etc., etc. Rs. 6/8/-

Vol. VI (about 400 pages) 5 storiettes, 2 long stories, 1 Bhāṇa, Derivations of अश्वतर and पुत्र, आनोभद्रीयसूक्त with various commentaries, explanation of the Madhusūkta, Kālidāsa and Bhavabhūti, Mahābhāṣya (pp. 33-136), Rasamañjarī, etc., etc. Rs. 6/8/-

Vol. VII (about 400 pages) **Technical Terms and Technique of Sanskrit Grammar—Samāsa, Kāraka and Vibhakti.** Kālidāsa and Bhavabhūti (5 instalments). Was Pāṇini a Communist? Kālidāsa and Shakespeare. Greek Proverbs (64 pages). On तरप् and तमप्. Meaning of शफोरू, 9 storiettes, 3 long stories, मृगया in Sanskrit Drama, etc., etc. 6/8/-.

Vol. VIII (about 200 pages), Short stories, long stories, humorous skits, महाभाष्यरत्नमञ्जूषा. Meanings of Sanskrit proper names. Sanskrit stanzas and their parallels from European languages. Sanskrit equivalent of bread. Notes and Queries. Tagore's short story. On देवानांप्रियः. On the derivation of कार्मुक, **On** Abhinavagupta. **On** Śārṅgarava and Śāradvata. Tagore's Urvashi. Common Errors. **So-Called Solecisms of Kālidāsa.** Rs. 3/-.

Vol. IX (nearly 300 pages). **So-called Solecisms of Kālidāsa.** Literary Parallels. Common Errors. Technical Terms of the Mugdhabodha. Tagore's story and poems. Contradiction in Terms. On the correct derivation of प्रवीण, सिकता etc. वाग्मी vs. वाग्ग्मी. बिभीषण versus विभीषण. On फ, ढ, ख, छ, घ in Pāṇini. A new stanza from Vyāḍi's Saṃgraha. Meaning of रद विलेखने. सतीर्थ्य versus सतीर्थ. The Anubandhas ऱ, क, प, उ, ष in Pāṇini, **The Technical Terms—Upasarga, Nipata, Karmapravacaniya, Gati, etc. Apurva in Mimamsa. In Defence of the Padapaṭha.** On ऊकालोऽज्ह्रस्वदीर्घप्लुतः. On वामदेव्यं साम. रेफ versus रकार। Rs. 5/-.

MANJUSHA ( Sanskrit Monthly Magazine )
*Registered No. C. 3278*



Printed and published by Sri Visvanath Chatterjee, M.A. from 8, Bhupendra Bose Avenue (81, Shyambazar Street), Calcutta—4. Printed at the Gupta Press, 37/7, Baniatola Lane, Calcutta—9.

श्रीशिवः शरणम्

द्वादश-वर्षे ] December, 1957 [ चतुर्थी संख्या

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

**Principal Contents**



*Office :* 8, Bhupendra Bose Avenue, Calcutta—4.
Minimum Annual Subscription : Rupees Six only.
Foreign—Twelve shillings.
Single copy : One Rupee.

# मञ्जूषाया नियमावली

मञ्जूषाया वार्षिकं मूल्यमवरतो रूपकषट्कम् । आश्विन (September)-मासतो वर्षारम्भः । ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम् ।

२। प्रतिसौरमासं दशमदिने (आङ्गलमासस्य चतुर्विंशे दिवसे)

8, Bhupendra Bose Avenue, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते ।

**Vāmana's Kāvyālamkārasutravritti** (Chapter on usage) with a magnificent Sanskrit commentary giving rational explanations of the rules and copious examples from classical authors. Rs. 2/-

**सिद्धान्तकौमुदी**—लीलावतीसहिता (प्रथमो भागः) । मूल्यं १)

**स्त्रीप्रशंसा**—अभिनवविस्तृतव्याख्यया विभूषिता । मूल्यं १)

| | |
|---|---|
| Upasarga and other Technical Terms | Rs. 1/4/- |
| Convocation Address in Ancient India | As. 12 |
| Popular Etymology— | Re. 1/- |

**Chandra Vyakarana**—The First Great Revised Edition of Pāṇini, critically edited with Vṛtti, rules of Pāṇini and Bhoja, etc. etc. Three Grammars in one. Part I Rs. 12/.

**Patanjali's MAHABHASHYA** (Paspasha or Introduction) with English Translation, exhaustive critical and explanatory notes, commentaries etc. Second Edition. Rs. 4/-

**GREEK PROVERBS** in Roman character with their Latin and English analogues and parallel proverbs and sayings from Sanskrit, Marathi and Bengali. All the grammatical forms have been clearly explained and the student of Sanskrit will not only acquire some knowledge of the glorious Greek language but will be struck with the resemblance it bears to Sanskrit. *Price : Rupees Two only.*

| | |
|---|---|
| ऋग्वेदीयम् आनोभद्रसूक्तम् (पञ्चभाष्यसमन्वितम्) | २॥० |
| শব্দকথা—সরস, সরল ভাষাতত্ত্ব | ২৲ |
| ঊষার আলো—ছোট ছোট হাসির গল্পের সমষ্টি— | ৸৹ |
| নক্ষত্রমালা—ধর্মবিষয়ক শ্লোক, সরল ব্যাখ্যা ও অনুবাদ | ৷৹ |

Several complete sets of Vols. IV, V, VI, VII, X and XI (400 pp. each) of the Manjusha are still available for Rs. 6/8/- per volume and only a few sets of Vol. VIII (200 pages) Rs. 3/8/- only. Vol. IX Rs. 5/-

श्रीविश्वनाथ-चट्टोपाध्यायः ।



Phone :—55-4049 ८, भूपेन्द्र वसु आवेन्यू, कलिकाता ४

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम्॥

# मञ्जूषा


| | | |
|---|---|---|
| December, 1957. | १८७९-शकीयपौषस्य १२श-वर्षस्य चतुर्थी संख्या | Vol. XII No. 4 |


## गीतारत्नम् [११।५५]

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव॥

गीताशास्त्रसारसर्वस्वं श्लोकेनैकेनोच्यते—मत्कर्मकृदिति। यत् खलु लौकिकं वैदिकं वा कर्म कर्तव्यतया निश्चीयते तद् भगवतः कर्मेति मन्वानः सर्वात्मना सर्वप्रयत्नेन सर्वसामर्थ्येन कुरु। निश्चयश्च शास्त्रदृष्ट्या विधातव्यः, न पुनः स्वमनीषिकया। अत एव भगवतोक्तम्—तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ। ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि॥ [१६।२४]। इति। वयं खलु पूर्वजन्मकृतकर्मपरिपाकेण कर्मभूमिमिमाम् अनुप्रपन्नाः। अत्र "न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्।" सर्वैः कर्मैव क्रियते। तत्र कैश्चित् साधु कर्म क्रियते, कैश्चित्पुनरसाधु कर्म। कैश्चित् सर्वप्रयत्नेन कर्म क्रियते, कैश्चित्पुनरनिच्छया दीर्घसूत्रितया कर्म क्रियते। भूतिकामैस्तु कर्मसङ्गवर्जितैः आसक्तिलेशशून्यैः कर्मफलं भगवति समर्प्य विहितं कर्म कर्तव्यम्। अत एव भगवतोक्तम्—यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम्॥ [७।२१] इति। सर्वप्राणिषु च सर्वथा शत्रुभावरहितैर्भवितव्यम्। यदा दुष्टानां निग्रहः कर्तव्यतयापतेत् तदा भगवतः कर्मेति तत् कर्तव्यं न पुनः शत्रुभावेन। आत्मनिर्विशेषं सर्वभूतानि द्रष्टव्यानि। अत एव भगवतोक्तम्—समः शत्रौ च मित्रे च तथा मानापमानयोः। शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः॥ इति। अत एव मनीषिप्रवरेण राधाकृष्ण-

महोदयेनोक्तम्—Whatever be our vocation and character, whether we are creative thinkers or contemplative poets or humble men and women with no special gifts, if we possess the one great gift of the love of God, we become God's tools, the channels of his love and purpose. When this vast world of living spirits become attuned to God and exists only to do His will the purpose of man is achieved.

श्रीमता ज्ञानेश्वरेण विस्पष्टं व्याख्यातोऽयं श्लोकः —

योऽखिलान्यपि कर्माणि मत्प्रीत्यर्थं करोति हि।
तथा च माम्ृते यस्य नान्यदस्ति प्रियं क्वचित्॥
यस्येहामुत्र सकलमहमेवास्मि केवलम्।
तथैव जीवितफलं मदर्थं येन रक्षितम्॥
यो भूतशब्दं विस्मृत्य तत्र मामेव पश्यति।
अतो भूतेषु निर्वैरः सर्वत्र भजते स माम्॥
एवंभूतस्य भक्तस्य यदा देहः प्रणश्यति।
स तदा निर्ममो भूत्वा मत्स्वरूपोऽवतिष्ठते॥ इति।

---

## आभाणकमाला

More worship the rising than the setting sun.

Greek. Pleiones ton hēlion anatellonta proskunoûsin ē duomenon.

Latin. Plures adorant solem orientem quam occidentem.

भूयांस उद्यन्तमादित्यमुपतिष्ठन्ते, अल्पीयांसोऽस्तं यन्तम्।

You forsake the setting to court the rising sun.

Lat. Occidentem ab eo deseri, orientem spectari.

उदीयमानमादित्यमुपस्थातुमस्तं यन्तं जहासि।

"उत्थिता एव पूज्यन्ते जनाः कार्यार्थिभिर्नरैः।
शत्रुवत् पतितं को नु वन्दते मानवं पुनः॥"

Nobody is fond of fading flowers.

को वा स्पृहयति म्लायद्भ्यः पुष्पेभ्यः?

"निर्माल्योज्झितपुष्पदामनिकरे का षट्पदानां रतिः।"

पूज्यो बन्धुरपि प्रियोऽपि तनयो भ्राता वयस्योऽपि वा
यो मोहादनवद्यकार्यविमुखो हेयः स कार्यार्थिना ।
लोके हि प्रथिता खलु श्रुतिरियं नार्योऽपि गायन्ति यां
किं कार्यं कनकेन तेन भवति च्छेदाय कर्णस्य यत् ॥ पञ्चतन्त्रम् ।

**Rats will leave a sinking ship.**

निमज्जन्तीं तरीं लोके मुञ्चन्ति मूषका अपि ।
"निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोऽपि ।" रघुवंशः ।
( वङ्गीयः ) पडिले मातङ्ग पङ्के भेके प्रहारय ।
मातङ्गं पतितं पङ्के भेकोऽपि प्रहरेन्मुदा ।
"किं हीनकुसुमं सहकारपादपं मधुकर्यः पुनः सेवन्ते ।" मृच्छकटिकम् ।
"परोऽपि बन्धुः समसंस्थितस्य मित्रं न कश्चिद्विषमस्थितस्य ।"

---

## बहुलीभूताः प्रमादाः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

कुमारसम्भवे [ ६।२९ ] वर्तते—

तामस्मदर्थं युष्माभिर्याचितव्यो हिमालयः ।
विक्रियायै न कल्पन्ते सम्बन्धाः सदनुष्ठिताः ॥

इति । अत्र नाथेनोक्तम्—एवं परार्थवृत्तिरहं त्रिदशाभ्यर्थनया परिणिनीषुः कन्यावरणे युष्मान् नियुञ्ज्यामित्यर्थः । इति । नारायणेनैतदेवानूदितम्—इत्थं परार्थप्रवृत्तिरहं सुजन-प्रार्थनया विवाहं कर्तुकामः कन्यावरणे युष्मान् नियुञ्ज्यामित्यर्थ इति । अत्र नियुञ्ज्या-मित्यत्र परस्मैपदं न व्याकरणानुगतम्, स्वराद्यन्तोपसृष्टादिति वार्त्तिकस्य जागरूकत्वात् । तथाहि प्रोपाभ्यां युजेरयज्ञपात्रेषु [ १।३।६४ ] इति सूत्रे भाष्यम्—स्वराद्यपसृष्टात् । स्वराद्यपसृष्टादिति वक्तव्यम् । उद्युङ्क्ते । अनुयुङ्क्ते ॥ अपर आह—स्वराद्यन्तो-पसृष्टात् । [ वा १ ] स्वराद्यन्तोपसृष्टादिति वक्तव्यम् । प्रयुङ्क्ते । नियुङ्क्ते । विनि-युङ्क्ते । इति । कैयटेन निष्कृष्टोऽर्थः प्रदर्शितः—सम् निस् दुर् इत्येतान् निरस्य सर्वे उपसर्गाः संगृहीताः । इति ।

यद्यपि संहिताब्राह्मणादिषु नियुजेः परस्मैपदे प्रयोगा उपलभ्यन्ते, अत एव पाणि-नि ना प्रोपाभ्यामेव युनक्तेरात्मनेपदं विहितम्, तथापि पाणिनेरुत्तरकाले भाषायामात्मने-

पदस्यैव सन्दर्शनात् कात्यायनेन [ पतञ्जलिना वा ] नियुजेरात्मनेपदं विहितम्। यथोत्तरं मुनीनां प्रामाण्यम् इति न्यायेन नाथनारायणप्रयुक्तं नियुज्ज्यां-पदमशुद्धमेव।

---

## नहि नहि

गुरुः ( व्ययशौण्डं प्रति )। वत्स, उपार्जितं वित्तं सर्वं न व्ययीकर्तव्यम्।

व्ययशौण्डः। आर्य, नाहं कदापि सर्वं व्ययीकरोमि। मया पञ्चशत्युपार्ज्यते ततः केवलं शतत्रयं व्ययीक्रियते।

गुरुः। साधु वत्स साधु। अवशिष्टेन शतद्वयेन किं वा करोषि? अपि तन्न्यासरूपेण श्रेष्ठिहस्ते प्रदीयते?

व्ययशौण्डः। नहि नहि। तत्तु परिवारप्रतिपालनव्ययनिर्वाहार्थं सहधर्मिण्यै समर्प्यते।

---

## अहो ध्वनिः

सा। अपि नामाहं कण्ठस्वरेण सर्वं रङ्गं पूर्णमकरवम्?

सः। नहि नहि, त्वं खलु सर्वं रङ्गं रिक्तमकरोः।

---

## सम्यक्

अध्यापकः। शर्कराशब्दस्य बहुवचने किं रूपम्?

छात्रः। मोदकः।

---

## कथारत्नम्

असाध्यं साधयत्यर्थं हेलयाभिमुखो विधिः।

बभूव हरिशर्माख्यः कोऽपि ग्रामे क्वचिद् द्विजः।
स दरिद्रश्च मूर्खश्च वृत्त्यभावेन दुःस्थितः॥
पूर्वदुष्कृतभोगाय जातोऽतिबहुबालकः॥
सकुटुम्बो भ्रमन् भिक्षां प्राप्यैकं नगरं क्रमात्।
शिश्रिये स्थूलदत्ताख्यं गृहस्थं तं महाधनम्॥

गवादिरक्षकान् पुत्रान् भार्यां कर्मकरीं निजाम् ।
तस्य कृत्वा गृहाभ्यर्णे प्रैष्यं कुर्वन्नुवास सः ॥
एकदा स्थूलदत्तस्य सुतापरिणयोत्सवः ।
तस्याभूदागतानेकजन्ययात्राजनाकुलः ॥
तदा च हरिशर्मापि तद्गृहे सकुटुम्बकः ।
आकण्ठघृतमांसादिभोजनास्थां बबन्ध सः ॥
तद्वेलां वीक्षमाणोऽथ स्मृतः केनापि नात्र सः ।
ततोऽनाहारनिर्विण्णो भार्यामित्यब्रवीन्निशि ॥
दारिद्र्यादिह मौर्ख्याच्च ममेदृशमगौरवम् ।
तदत्र कृत्रिमं युक्त्या विज्ञानं *दर्शयाम्यहम् ॥
येनास्य स्थूलदत्तस्य भवेयं गौरवास्पदम् ।
त्वं प्राप्तेऽवसरे चास्मै ज्ञानिनं मां निवेदय ॥
इत्युक्त्वा तां विचिन्त्यात्र धिया सुप्ते जने हयः ।
स्थूलदत्तगृहात्तेन जह्रे जामातृवाहनः ॥
दूरे प्रच्छन्नमेतेन स्थापितं प्रातरत्र तम् ।
इतस्ततो विचिन्वन्तोऽप्यश्वं जन्या न लेभिरे ॥
अथामङ्गलवित्रस्तं हयचौरगवेषिणम् ।
हरिशर्मवधूरेत्य स्थूलदत्तमुवाच सा ॥
भर्ता मदीयो विज्ञानी ज्योतिर्विद्यादिकोविदः ।
अश्वं वो लम्भयत्येनं किमर्थं स न पृच्छ्यते ॥
तच्छ्रुत्वा स्थूलदत्तस्तं हरिशर्माणमाह्वयत् ।
ह्यो विस्मृतो हृतेऽश्वे तु स्मृतोऽस्म्यद्येतिवादिनम् ॥
विस्मृतं नः क्षमस्वेति प्रार्थितं ब्राह्मणं च सः ।
पप्रच्छ केनापहृतो हयो नः कथ्यतामिति ।
हरिशर्मा ततो मिथ्या रेखाः कुर्वन्नुवाच सः ।
इतो दक्षिणसीमान्ते चौरैः संस्थापितो हयः ॥
प्रच्छन्नस्थो दिनान्ते च दूरं यावन्न नीयते ।
तावदानीयतां गत्वा त्वरितं स तुरङ्गमः ॥

---

*मूले "प्रयुनज्म्यहम्" इति वर्तते। तत्र प्रयुनज्मीत्यपशब्दः, 'प्रोपाभ्यां युजेरज्ञपात्रेषु' इत्यात्मनेपदविधानात् ।

तच्छ्रुत्वा धावितैः प्राप्य क्षणात् स बहुभिर्नरैः ।
आनिन्येऽश्वः प्रशंसद्भिर्विज्ञानं हरिशर्मणः ॥
ततो ज्ञानीति सर्वेण पूज्यमानो जनेन सः ।
उवास हरिशर्मात्र स्थूलदत्तार्चितः सुखम् ॥
अथ गच्छत्सु दिवसेष्वत्र राजगृहान्तरात् ।
हेमरत्नादि चौरेण भूरि केनाप्यनीयत ॥
नाज्ञायत यदा चौरस्तदा ज्ञानिप्रसिद्धितः ।
आनाययामास नृपो हरिशर्माणमाशु तम् ॥
स चानीतः क्षिपन् कालं वक्ष्ये प्रातरिति ब्रुवन् ।
वासके स्थापितो ज्ञानवित्तो* राज्ञा सुरक्षितः ॥
तत्र राजकुले चासीन्नाम्ना जिह्वेति चेटिका ।
यया भ्रात्रा समं तच्च नीतमभ्यन्तराद्धनम् ॥
सा गत्वा निशि तत्रास्य वासके हरिशर्मणः ।
जिज्ञासया ददौ द्वारि कर्णं तज्ज्ञानशङ्किता ॥
हरिशर्मा च तत्कालमेककोऽभ्यन्तरे स्थितः ।
निजां जिह्वां निनिन्दैवं मृषा विज्ञानवादिनीम् ॥
भोगलम्पटया जिह्वे किमिदं विहितं त्वया ।
दुराचारे सहस्व त्वमिदानीमिह निग्रहम् ॥
तच्छ्रुत्वा ज्ञानिनानेन ज्ञातास्मीति भयेन सा ।
जिह्वाख्या चेटिका युक्त्या प्रविवेश तदन्तिकम् ॥
पतित्वा पादयोस्तस्य ज्ञानिव्यञ्जनमब्रवीत् ।
ब्रह्मन्नियं सा जिह्वाहं त्वया ज्ञातार्थहारिणी ॥
नीत्वा तच्च मयास्यैव मन्दिरस्येह पृष्ठतः ।
उद्याने दाडिमस्याधो निखातं भूतले धनम् ॥
तद्रक्ष मां गृहाणेमं किञ्चिन्मे हेम हस्तगम् ।
एतच्छ्रुत्वा सगर्वं स हरिशर्मा जगाद तम् ॥

---

*मूले "ज्ञानविग्नो" वर्तते । तस्य चार्थो ज्ञानेनोद्वेजितः । स च पाठः "अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु । शुक पञ्जरबन्धस्ते मधुराणां गिरां फलम् ॥" इति न्यायेनोपपादनीयः । ज्ञानवित्त इति पाठस्तु सुबोधतरः । तेन वित्तस्चुञ्चुपूचणपाविल्या-त्रायसूत्रे दर्शनात् ।

गच्छ जानाम्यहं सर्वं भूतं भव्यं भवत्तथा ।
त्वां तु नोद्घाटयिष्यामि कृपणां शरणागताम् ॥
यच्च हस्तगतं तेऽस्ति तद् दास्यति पुनर्मम ।
इत्युक्ता तेन सा चेटी तथेत्याशु ततो ययौ ॥
हरिशर्मा च स ततो विस्मयादित्यचिन्तयत् ।
असाध्यं साधयत्यर्थं हेलयाभिमुखो विधिः ॥
यदिहोपस्थितेऽनर्थे सिद्धोऽर्थोऽशङ्कितं मम ।
स्वजिह्वां निन्दतो जिह्वा चौरी मे पतिता पुरः ॥
शङ्कयैव प्रकाशन्ते बत प्रच्छन्नपातकाः ।
इत्याद्याकलयन् सोऽत्र हृष्टो रात्रिं निनाय ताम् ॥
प्रायश्चालीकविज्ञानयुक्त्या नीत्वा स तं नृपम् ।
तत्रोद्याने निखातस्थं प्रापयामास तद्धनम् ॥
चौरं चाप्यपनीतांशं शशंस प्रपलायितम् ।
ततस्तुष्टो नृपस्तस्मै ग्रामान् दातुं प्रचक्रमे ॥
कथं स्यान्मानुषागम्यं ज्ञानं शास्त्रं विनेदृशम् ।
तन्नूनं चौरसङ्केतकृतेयं धूर्तजीविका ॥
तस्मादेषोऽन्यया युक्त्या वारमेकं परीक्ष्यताम् ।
देव ज्ञानीति कर्णे तं मन्त्री राजानमभ्यधात् ॥
ततोऽन्तःक्षिप्तमण्डूकं सपिधानं नवं घटम् ।
स्वैरमानाय्य राजा तं हरिशर्माणमब्रवीत् ॥
ब्रह्मन् यदस्मिन् घटके स्थितं जानासि तद् यदि ।
तदद्य ते करिष्यामि पूजां सुमहतीमहम् ॥
तच्छ्रुत्वा नाशकालं तं मत्वा स्मृत्वा ततो निजम् ।
पित्रा क्रीडाकृतं बाल्ये मण्डूक इति नाम सः ॥
विधातृप्रेरितं कुर्वंस्तेनात्र परिदेवनम् ।
ब्राह्मणो हरिशर्मात्र सहसैवैवमब्रवीत् ॥
साधोरेव तु मण्डूक तवाकाण्डे घटोऽधुना ।
अवशस्य विनाशाय सञ्जातोऽयं हठादिह ॥
तच्छ्रुत्वाहो महाज्ञानी भेकोऽपि विदितोऽमुना ।
इति जल्पन्ननन्दात्र प्रस्तुतार्थान्वयाज्जनः ॥

ततस्तत् प्रातिभज्ञानं मन्वानो हरिशर्मणे ।
तुष्टो राजा ददौ ग्रामान् सहेमच्छत्त्रवाहनान् ॥
क्षणाच्च हरिशर्मा स जज्ञे सामन्तसन्निभः ।
इत्थं दैवेन साध्यन्ते सदर्थाः शुभकर्मणाम् ॥

## विशेषतो द्रष्टव्यम्

मासेऽस्मिन् मुद्रणयन्त्रस्य पञ्चाङ्गमुद्रणे विनियुक्ततया षोडशपृष्ठात्मिका मञ्जूषा प्रकाशिता। आगामिनो मासादारभ्य पुनरपि मञ्जूषायां द्वात्रिंशत् पृष्ठानि विलसिष्यन्ति। आशास्यते च वाचकमहोदया मञ्जूषादर्शनेन सुप्रीतमनसो रूप्यकषट्कं ततोऽधिकं वा संप्रेष्य ग्राहकत्वमङ्गीकुर्युरिति ।

## क्षात्रिः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

क्षात्रिशब्दस्य को वार्थः ? St. Petersburg Lexicon ग्रन्थे दृश्यते—der Sohn eines Mannes aus der zweiten Kaste (wohl von einer unebenbürtigen Frau) P. 4, 1, 138, Sch. Monier-Williams महोदयेन लिखितम्—the son of a man of the second caste, Pāṇ, IV, 1, 138, Kaś. Apte-महोदयेन विलिखितम्—the son of a Kṣatriya by a woman of another caste; P. IV. 1.138 Kāśi. क्षत्राद्घः [४।१।१३८] इति सूत्रस्य काशिकायां दृश्यते—क्षत्रशब्दादपत्ये घः प्रत्ययो भवति। क्षत्रियः। अयमपि जातिशब्द एव। क्षात्रिरन्यः। इति। अत्र क्षात्रिमधिकृत्य न्यासकृता विशिष्य किमपि नोक्तम्। पदमञ्जर्यां दृश्यते—अयमपि जातिशब्द एवेति। राजन्यजात्यभिधाने घो भवति वैश्याशूद्रयोरुत्पादिते त्विञेवेत्यर्थः। बालमनोरमायामुक्तम्—क्षत्राच्छूद्रादावुत्पन्न इति।

हेमचन्द्रलघुन्यासे [ ६।१।९३ ] दृश्यते—यदि जातिरपत्यस्य न गम्यते, किन्तु क्षत्रस्यापत्यमित्येतावदेव तत इयाभावे अत इञ् इति इञिति।

यथास्माभिर्दृश्यते तथा लोके प्रयुक्तस्य क्षत्रियशब्दस्यान्वाख्यानमात्रं कृतं मुनिप्रवरेण, अत एव क्षात्रिशब्दस्य प्रयोग एव नोपलभ्यते। एवमेव राजपुत्र इत्यर्थे राजनशब्दस्यापि प्रयोगो न दृश्यते। घाभावे क्षत्रशब्दादपत्यार्थे इञ् न भवति, यदभावे च राजन्शब्दादणपि न भवति। यदि क्षात्रिशब्दस्यार्थः करणीय इत्याग्रहः, तर्हि क्षत्रो नाम कश्चित् तस्यापत्यं पुमान् क्षात्रिरिति गृह्यताम्।

कवीन्द्र-रवीन्द्रनाथस्य

# स्वामिलाभः

[ श्रीफटिकलालदासकृतस्तात्पर्यानुवादः ]

भागीरथीतीरमनु स्थितेन श्मशानमार्गेण गृहं कदाचित् ।
निवर्तमानस्तुलसीमहात्मा जगौ स्वगीतं हृतचित्तवृत्तिः ॥१॥
काञ्चित् सतीं सोऽत्र परेतभूमौ मृतस्य पत्युश्चरणे निषण्णाम् ।
ददर्श तेनैव समं चिताग्नौ तनूं स्वकीयामपि दग्धुकामाम् ॥२॥
क्षणे क्षणे चक्रुरशेषहृष्टास्तत्सङ्गिवर्गा जयशब्दमुच्चैः ।
परिष्ठितैर्विप्रपुरोहितैश्च सम्भाविता सा बहुसाधुवादैः ॥३॥
निरीक्ष्य साधुं सहसा पुरस्ताज्जगाद नारी प्रणतिं विधाय ।
"मृतेन नाथेन सह प्रयाणे प्रभोरनुज्ञां स्वमुखात् प्रयाचे ॥४॥
चख्यौ स तां "यास्यसि कुत्र मातर्यदर्थमायोजनमेतदस्ति ।"
सा प्रत्यवादीच "मयाद्य पत्या स्वर्गं प्रयातुं विहितोऽभिलाषः" ॥५॥
जगाद साधु"र्धरणीं विहाय स्वर्गः कथं स्यात्तव वाञ्छनीयः ।
यस्यैव पुण्यत्रिदशालयः स वसुन्धरैषा वद किं न तस्य ॥"६॥
बोद्धुं ह्यशक्ता वचनस्य मर्म स्थित्वा क्षणं विस्मयनष्टवाक्या ।
तमाचचक्षे विहिताञ्जलिः सा "दूरेऽस्तु नाकः पतिराप्यते चेत् ॥"७॥
हसन्नवादीत् तुलसीमहात्मा "निवृत्यतां तर्हि गृहं स्वकीयम् ।
मासात् परं मद्वचनेन ते स्याद् भूयोऽपि लभ्यो निज एव भर्ता ॥८॥
आशाविमुग्धा वचसास्य बाला त्यक्त्वा श्मशानं भवनं प्रयाता ।
स देवनद्याश्च तटे महात्मा जाग्रद् वितष्ठे निशि नीरवायाम् ॥८॥
यतात्मने शून्यगृहस्थितायै तस्यै रमण्यै तुलसीमहात्मा ।
मन्त्रं ददौ कञ्चन कर्णमूले दध्यौ सदा सा यमनन्यचित्ता ॥१०॥
पूर्णे च मासे प्रतिवेशिवृन्दैस्तद्द्वारमागम्य यदा हि पृष्टम् ।
"प्राप्तस्त्वया किं पतिरेव भूयो" विहस्य सोचे "ननु लब्ध एषः ॥"११॥
तद्वाक्यकौतूहलिभिः पुनस्तैः पृष्टा ततः सा "वद कुत्र सोऽस्ति ।"
उवाच नारी "दिवसे निशायां स वर्तते मे हृदयेऽसुनाथः ॥"१२॥

———

# परमहंस-कथावलिः

## [ शिरोमणिः सन्निधानम्-सूर्यनारायण-शास्त्री ]

### ( १ ) साक्षात्कारः

"भगवत्साक्षात्कारः कथं भवेत् कथ्यतां कृपया ।"
भगवन्नित्याचार्यम् प्रवचनकालेऽब्रवीच्छिष्यः ॥
"अनुसर माम्" इत्युक्त्वा सान्तेवासी गुरुः कियद्दूरम् ।
गत्वा प्रविश्य सरसीं तमादिशद् "अत्र मज्जे"ति ॥
आत्माज्ञया निमग्नस्य शीर्षे न्यस्य करं गुरुः ।
यथा नोद्गच्छति जलात् तथा बाढं न्यपीपिडत् ॥
गुरुणा मुक्तः शिष्यः शिर उत्थाप्योद्गतः सलिलात् ।
पृष्टोऽम्बुनिमग्नस्य स्वस्यावस्थां न्यवेदयत् तस्मै ॥
"प्रतिरुद्धश्वासेन हा ! धिक् ! कालासहेन निर्गन्तुम् ।
क्षुभ्यच्चित्तेन मया क्षपितो युगवत् क्षणः सलिले ॥
आकर्ण्य गुरुरवोचद् भगवान् साक्षाद्भवेदित्थम् ।
संक्षुब्धमानसानामनुक्षणं दर्शनायानिष्टपताम् ॥

### ( २ ) वनपालिका धीवरी च

उद्यानपालिकायाः सख्याः स्वस्या गृहं गता काचित् ।
मत्स्याजीवा रात्रौ कृतातिथेया तयाऽवसत् तत्र ॥
कृतभोजने उभे ते एकान्तसंलापगोष्ठिनिविष्टे ।
अविदितयामाऽऽर्धं निशि सुषुप्सयाऽऽस्तरणयोश्शायिते ॥
पार्श्वस्थपुष्पपुटिकासुरभिलगन्धोऽन्तरे कुटीरस्यं ।
विसरत्यलब्धनिद्रा जाग्रत्येवास्ति दाशवधूः ॥
शयनीयोभयतटयो विलुठति बहुशः समुपविशति ।
खिन्ते, पुनरपि शेते सा किंकर्तव्यतामूढा ॥
विलुठस्यसुप्तभावा, शय्यायां तप्यसेऽत्र को हेतुः ?
इति पृष्टा सख्या "हुँहुँ हुंहुं" कुर्वत्युवाच भुग्नमुखी ॥
"मह्यं न रोचतेऽयं सुरभिलगन्धः स एव मे निद्राम् ।
अपहरति ; कुवेणीं मे गच्छ शिरसि निधेहि"ति ॥

मत्स्याधानीं दत्तां गृह्णात्याघ्राय तद्गन्धम्।
प्रापत् सा सुखनिद्रां यावदुषां न प्रबुद्धैव॥
विनिन्दन्नैश्वरं भावं पद्मगन्धं जडो बत।
संसारस्याऽस्य दुर्गन्धमाघ्रातुं धिगपेक्षते॥

(३) प्रेक्षकः

कक्षाकटो जगाम सन्द्रष्टुं वीथिनाटकं कश्चित्।
प्रारप्स्यते विलम्बेनेत्यज्ञासीज्जनैस्स तत्रत्यैः॥
नाट्यारम्भं यावत् स्वप्स्याम्यत्रेति चिन्तयित्वाऽयम्।
सुप्तश्च प्रतिबुद्धः श्रुतवांस्तन्नाटकं समाप्तमिति॥
विवृतकटं संवृत्य कक्षे धृत्वा पुनर्गृहं यातः।
यातायातैर्जीवः प्रयस्यति हि वेद्यमविदित्वा॥

(४) धनमदः

मन्दभाग्येन केनापि हारितं रूप्यकं क्वचित्।
लब्ध्वा कश्चन मण्डूको जुगोपात्मबिलान्तरे॥
योऽपक्रान्तो भयभ्रान्तः पुरा दृष्ट्वा गतागतान्।
अधुना स मदोन्मत्तस्तान् रटन्नभिधावति॥
उपगच्छन्तं दृष्ट्वा निकषात्मबिलं प्रमत्तगजमस्थात्।
उद्धृतचरणः सज्जस्तं निर्हन्तुं कृतभ्रुकुटिः॥

---

# वेदान्तविमर्शः

[ श्रीचारुकृष्णदर्शनाचार्यः ]

यद्यप्यबाधितप्रत्यक्षानुमानोपोद्बलितानां "द्वा सुपर्णा सयुजा सखाया" "ऋतं पिबन्तौ सुकृतस्य लोके" इति भेदग्राहिश्रुतीनां प्राबल्याज्जीवब्रह्मणो भेद एव प्राप्यते सूत्रैश्च पारमर्षैस्तथा, "भेदव्यपदेशाच्चान्यः" "सुषुप्त्युत्क्रान्त्योर्भेदेन" "अधिकन्तु भेदनिर्देशादि"ति, तथापि "यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः" "निःसरन्ति यथा तप्ताल्लोहपिण्डात् स्फुलिङ्गकाः" इति स्फुलिङ्गदृष्टान्तेन स्पष्टतया ब्रह्मांशत्वप्राप्तेः "ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवाः" "नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता" इत्यादिश्रुतिभिरभेदस्यापि प्राप्ते गवाश्वादिवद् भेदो न भवितुमर्हतीति

"द्विविधश्रुतीनां प्रामाण्याय वज्रवैदूर्यकणस्यापि वज्रवैदूर्यत्ववत् ब्रह्मकणस्यापि जीवस्य ब्रह्मत्वव्यपदेशाद् भेदाभेद एव समीचीनो न त्वभेदः, तदेतत् सूत्रितम् "अंशो नानाव्यपदेशादन्यथा चापी"ति । उक्तं च विवर्त्ताचार्येण "अतो भेदाभेदावगमाभ्यामंशत्वावगम" इति । न च "सदेव सौम्येऽदमग्र आसीदि"त्यादिश्रुतिप्रपञ्चो जीवब्रह्मणोरभेदपरः परमसतः कारणत्वव्युदासेन सत्कारणत्वपर एवेति दर्शितमधस्तात् । अत"स्तत्त्वमसी"त्यस्य हे श्वेतकेतो त्वमपि सत्यमसीत्येवार्थः, न ब्रह्म त्वमसीति, प्रकरणेऽस्मिन् ब्रह्मशब्दाभावाच्च। विवृतं सूत्रभाष्ये । न च धीवृत्तिकर्तृत्वमात्मन्यारोपितं सांख्यनयापातात्, किन्तु आत्मन एव कर्तृत्वम् "आत्मानं रथिनं विद्धि" "स्वर्गकामो यजेते"त्यादिश्रुतिभ्यः। "कर्ता शास्त्रार्थवत्त्वादि"ति न्यायाच्च ।

प्रयोजनं तावदिष्टलाभ इष्टं च सुखं दुःखाभावश्च । यावच्छरीरस्थितिस्तावन्न दुःखात्यन्तनिवृत्तिरारब्धकर्मवशात् प्रियवियोगरोगादिजनितदुःखानामवश्यम्भावाद् वशिष्ठस्य ज्ञानिनोऽपि पुत्रवियोगातुरत्वदर्शनाद् बादरायणस्य च भगवतः शुकवियोगातुरत्वदर्शनाच्चेति, नात्मज्ञानादपि दुःखोच्छेदः । विषयसङ्गजन्यं च सुखं नैवात्यन्तिकं देहादत्यन्तविभागेनात्मनो दुःखात्यन्तनिवृत्तिरैन्द्रियकसुखानुद्भवश्च स्यादेव। यथाह श्रुतिः "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत" इति । तस्माद् देहात्यन्तवियोग एव काम्यः सर्वथा, सति च तस्मिन् यथा दुःखात्यन्तनिवृत्तिस्तथा निरतिशयसुखप्राप्तिश्चानन्दमयब्रह्मलाभात्, देहात्यन्तवियोगश्च ब्रह्मज्ञानात् "ब्रह्म वेद ब्रह्मैव भवति नास्याब्रह्मवित् कुले भवति तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवती"ति श्रुतौ ब्रह्मज्ञानाद् ब्रह्मप्राप्तेः शोकनिवृत्तेर्हृदयगुहाग्रन्थिभ्यो विमुक्तेश्च दर्शनात्, हृदयगुहातो मुक्तिश्च हृदयस्य शताधिकया मूर्द्धन्यनाड्यात्मन ऊर्ध्वगमनादेव, ततश्च ब्रह्मलोकगत्या ब्रह्मप्राप्तिः । तथाच श्रुत्यन्तरं "शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेती"ति । ततश्चोर्ध्वगत्युत्तरमेवामृतत्वप्राप्तिर्न ततः प्रागिति प्राप्तम् । तस्माच्छरीरादत्यन्तविभाग एवात्मनो मुक्तिरित्यायातम् ।

न च केवलं दुःखाभाव एव प्रयोजनं स्वापमूर्छयो र्दुःखाभावेऽपि तयोश्चिरकालिकयोरपि काम्यत्वाभावात् । निरतिशयसुखं च काम्यं तच्च ब्रह्मप्राप्तावेव तस्यैव निरतिशयसुखरूपत्वात्, पापाभावाच्च दुःखात्यन्तनिवृत्तिः, पुण्याभावाच्चैन्द्रियकसुखस्यापि निवृत्तिः । न च दुःखाविमिश्रं निरतिशयं नित्यं सुखं दुःखसंपृक्तायां जगत्यां कुत्रापीति स्थानमपि तादृशं किञ्चन वाच्यं तच्च ब्रह्मलोक एव पारमेश्वरं नित्यं धाम । तदुक्तं भगवता—

"तमेव शरणं गच्छ सर्वभावेन भारत।
तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥"
"यत् सांख्यैः प्राप्यते स्थानं तद् योगैरपि गम्यते॥"
"यद् गत्वा न निवर्त्तन्ते तद्धाम परमं मम।" इति।

श्रुतयश्चाहुः—"ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते" "तान् वैद्युतान् पुरुषो मानसः एत्य ब्रह्मलोकान् गमयति" "तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः" "तयोर्ध्वमायन्नमृतत्वमेती"ति। न च तिष्ठन् गायतीति तिष्ठति-गायत्योरव्यवधानवत् "ब्रह्म वेद ब्रह्मैव भवती"त्यादिश्रुतिभ्यो ब्रह्मज्ञानानन्तरमेव ब्रह्मसम्पत्तिः, "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" "भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते" इति श्रुतिस्मृतिभ्यां देहपातादूर्ध्वमेव मुक्तौ ब्रह्मसम्पत्तेः सिद्धान्तितत्वात्। "गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति" "तयोर्ध्वमायन्नमृतत्वमेति" "अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" "अस्माल्लोकात् समुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवदि"ति श्रुतिषूर्ध्वगत्युत्तरमेवामृतत्वप्राप्तेरुक्तेश्च। अत्र स्वर्गलोकश्च परब्रह्मलोक एव, "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"ति श्रुत्यन्तरात्। "अहं ब्रह्मास्मि" "अहं मनुरभवं सूर्य्यश्चे"ति च ध्यानमहिम्ना तन्मयताप्राप्तौ समाधौ च ब्रह्मणैकीभावात् तात्कालिक एव तथा प्रत्ययः, "मन्मया मामुपाश्रिता" इत्युक्तेः, क्वचित् तद्भावनायुक्तस्तन्मयोऽनुचकार ह"ति "यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे" इति श्रीभागवतपद्याभ्यां, "शास्त्रदृष्ट्या तूपदेशो वामदेववदि"ति सूत्राच्च। व्युत्थाने च यथायथं व्यवहारो दृष्टो यथा प्रह्लादस्य यथा च जनकस्य।

यथा सुषुप्तौ जीवस्य सदात्मब्रह्मणैकीभावस्तथा समाधावपि। तथाहि सुषुप्तौ जीवो नाडीभिर्गत्वा पुरीतत्स्थिते सदाख्ये ब्रह्मण्येकीभवति, तथापि दिव्यचक्षुषो विशुद्धान्तःकरणस्याभावान्न पश्यत्यहं ब्रह्मणा भवाम्येकीभूत इति, "ताभिः प्रत्यवसृप्य पुरीतति शेते" "सति संपद्य न विदुः सति संपद्यामहे" "अहरह र्गच्छन्त्यः प्रजा एतं ब्रह्मलोकं न विन्दन्ती"ति श्रुतिभ्यः। तथा समाधावपि जीवो हृत्पुण्डरीके सदाख्ये दहरे ब्रह्मण्येकीभवति तस्योपास्यत्वात् "तदन्वेष्टव्यं तद् वाव विजिज्ञासितव्यमि"ति, तस्यैव च सर्वव्यापित्वमुक्तम् "यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश" इति। हृदयच्छिद्रावच्छिन्नत्वाच्चास्य दहरत्वमिति। ब्रह्मण एव हृदयच्छिद्रावच्छिन्नत्वं दर्शितमाचार्येण व्योमदृष्टान्तेन, "व्योमवच्चे"ति न तु जीवस्य, तस्य ब्रह्मांशत्वादिति ज्ञेयम्। आह च विष्णुपुराणम्—

"आत्मभावं नयत्येवं तद् ब्रह्म ध्यायिनं मुने ।
विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा ॥" इति ।

यथा चायस्कान्तोऽश्मा लोहमाकृष्य स्वात्मनैकीकरोति तथैव ब्रह्मापि ध्यानैकनिष्ठं विशुद्धसत्त्वं जीवं स्वात्मनैकीकरोतीत्यर्थः। हृदयस्थस्य ब्रह्मण उपास्यत्वमुक्तं भागवते "यतो भजध्वं हृदये हृदीश्वरमि"ति ।

---

# कालिदासस्य सूक्तयः

हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा । १।६

The purity or alloy of gold is discovered in the fire.

सुवर्णं जात्यम् अपि भवति, धात्वन्तरेण संमिश्रमपि भवति। तस्य शुद्धत्वं वा मिश्रत्वं वा दर्शनमात्रेण न प्रतीयते। अनले निक्षिप्तं सुवर्णपिण्डं शुद्धं चेत् समुज्ज्वलतरं शोभते, अशुद्धं चेत् तत्संसृष्ट-निकृष्ट-धातूनां भस्मीभावो भवति। एवमेव कवेः काव्यस्य विमर्शो विमलधियः सज्जना एव प्रभवन्ति, न पुनर्हालिकादयः।

प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः। १।७९

Failure to honour those to whom honour is due stands in the way of one's well-being.

ये तावत् पूजामर्हन्ति तेषां पूजा सर्वथास्माभिर्विधातव्या। मान्यानां माननं न क्रियते चेत् प्रत्यवायो भवति, चेतसश्च सङ्कोचः सञ्जायते। प्रत्यवायस्य चास्य फलेन श्रेयो व्याहन्यते। पूज्यानां पुनः कापि हानिर्न भवति। अत एवोक्तं श्रीहर्षेण —यावदर्हकरणं किल साधोः प्रत्यवायधुतये न गुणाय [नै० ५।१] इति। (क्रमशः)

---

# मूलं मृग्यते

१। कुमारसम्भवसञ्जीवन्यां (३।३६) मल्लिनाथेनोक्तम्—द्वौ रेफौ वर्णविशेषौ यस्य स द्विरेफो भ्रमरः। उपचारात् तदर्थोऽपि भ्रमर उच्यते। यथाह कैयटः— शब्दधर्मेणाप्यर्थस्य व्यपदेशो दृश्यते। यथा भ्रमरशब्दस्य द्विरेफत्वाद् द्विरेफो भ्रमर इति।

कैयटेन क्वेदमुक्तम् ?

२। किरातार्जुनीय-घण्टापथे (८।११) दृश्यते—द्वौ रेफौ वर्णविशेषौ येषां ते द्विरेफाः। भ्रमरशब्देन तदर्थो लक्ष्यते। द्व्यक्षरं मासमिति विदधातीति भाष्यकारः।

भाष्यकारेण क्वेदं कथितम् ? कश्चायं शुद्धः पाठः ?

३। शिशुपालवध-सर्वङ्कषायां (१।१७) मल्लिनाथसूरिणोक्तम्—अर्थनम् अर्थोऽभिलाषः स एषामस्तीति मत्वर्थ इनिर्न तु णिनिः। कृद्वृत्तेस्तद्धितवृत्तिर्बलीयसीति भाष्यकारः।

भाष्ये क्वेदं वर्तते ? को वास्याशयः ?

४। कुमारसम्भवसञ्जीवन्यां (६।२) मल्लिनाथेनोक्तम्—अथवा, भृद् भरणम्। सम्पदादित्वात् क्विप्। परैर्भृद् यस्याः तया परभृता...। पदमञ्जरीकारस्तु परैर्भ्रियत इति कर्मणि क्विपमाह।

को वायं पदमञ्जरीकारः, क्व वा तेनेदमुक्तम् ?

---

## अपेक्ष्यते

वहोः कालात्पूर्वं स्वर्गतकृष्णमाचार्यैः सम्पादितायां सहृदयापत्रिकायां कुमारसम्भवविमर्शाख्याः केचन प्रबन्धाः प्रकाशिताः। वाचकमहोदयेषु कैश्चिच्चेत् सहृदयायास्ताः सञ्चिकाः प्रेष्येरन्, चिराय कार्तज्ञ्यमावक्ष्यामः, सत्यामपेक्षायां मूल्यमपि प्रदास्यामः। 8 Bhupendra Bose Avenue, Calcutta 4 इत्यत्र मञ्जूषाकार्यालय एव प्रेषणीयास्ताः सञ्चिकाः।

---

## रसमञ्जरी

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

### सौष्ठवं सौरभोपेतं सौष्ठभं व्यपदिश्यते !!!

अध्यापकः। अरे श्वन्, अरे उक्षन्, अरे प्लीहन्, अरे अनड्वन्, किमिति पुनः पुनर्देहसौष्ठभमिति विलिखितम् ?

भ्रमरः। आर्य, सम्यगेव मया विलिखितम्। किमिवात्राशुद्धम् ?

अध्यापकः। अरे वानर, अरे वृषभ, अरे ऋषभ, अरे रासभ, सौष्ठवमित्येव शुद्धम्, न पुनः सौष्ठभमिति।

भ्रमरः। आर्य, वङ्गीयकथाशिल्पिप्रवरेण गुप्तमहोदयेनासकृद् आख्यायिकायां देहसौष्ठभमिति लिखितम्।

भूमिपः। आर्य, देहसौष्ठभमित्यत्र भकार एव युज्यते। पशुनामसु भप्रत्ययो भवतीति शब्दशास्त्रविद आचक्षते। अत एव सौष्ठभगतो भकार ऋषभ-वृषभ-रासभ-

गर्दभादीन् स्मारयन् देहशोभायाः पशुसाधारणत्वमत एवानित्यतां जुगुप्सिततां च प्रत्याययति।

भूधरः। आर्य, अपरञ्च दृश्यताम्—

शोभा-शब्दे भकारोऽस्ति भकारोऽस्ति च सौरभे।
कथं वा न भकारः स्यात् सौष्ठभेऽप्यतिसुन्दरे॥

अध्यापकः। कुशलिनः शिल्पिनो भवन्तः, कुशली च कथाशिल्पी द्विरेफगुप्तमहोदयः। भवतामेव वचः प्रमाणम्। मम मतेन तु—

लेखकस्य मनश्चक्रे संयोगे सौरभस्य च।
सौष्ठवस्य च सञ्जाते सौष्ठभं ह्युदितं पदम्॥

वृत्तिरेषा पाश्चात्त्यैः contamination इति व्यपदिश्यते। एवञ्च सौष्ठभ-शब्दस्यार्थः सौरभोपेतं सौष्ठवम् इति। (सौष्ठवम्+सौरभम्=सौष्ठभम्।)

---

## पुस्तक-परिचयः

**अष्टकवर्गः** by Chandulal S. Patel, B.A. and C. A. Subramaniya Aiyar, B. Sc. Pp. 36+286+40+4. Price : Rupees Ten only.

अत्र पराशरप्रभृतीनां बहूनामृषीणां वचनानि सुबोधाङ्गलभाषामयविशदव्याख्यानैरुदाहरणैश्च साकं सन्निविष्टानि कस्य वा ज्योतिषशास्त्राध्यायिनश्चेतो न चमत्कुर्युः। ग्रहाणां बलाबलादिविज्ञानमष्टवर्गादिविचारमन्तरेण न सिध्यति। अत एव ज्योतिषशास्त्रानुरागिणामष्टकवर्गविज्ञानमत्यावश्यकमेव। तच्च विज्ञानं ग्रन्थस्यास्य साहायकेन विनैव बहुलायासं सम्पादयितुं शक्येत। त्वरन्तां वाचकमहोदया ग्रन्थस्यास्य संग्रहणाय। 8, Bhupendra Bose Avenue, Calcutta 4 इत्यत्रावस्थितमञ्जूषाकार्यालयादपि लब्धुं शक्यते। (क्रमशः)

---

## आगामिनि मासे (३२ पृष्ठानि)

कथाशिल्पिचूडामणेः "नावं निगरीष्यामि"। प्राचीनभारते जनसंख्यानायोगः (Census in Ancient India)। चिपिटकचर्वणम् (प्रहसनम्)। कारकाणां सुबोधः सरलः पाणिनिकातन्त्राद्यनुसारी विचारः। महाभारतरत्नम्। "मा फलेषु कदाचन"। So-called solecisms of Kālidāsa. etc. etc. etc.

# Manjusha

Vol. IV (about 400 pages)—29 storiettes, hymn from the Rigveda with commentary, छात्री versus छात्रा, पतत्र versus पत्र, Goethe's maxims ( original German with Sanskrit translation), Saratchandra's Niṣkṛti, on Pāṇini's म्रु, महाभाष्य, विश्रम versus विश्राम, सेवका versus सेविका, अन्योन्य, 11 humorous skits. Rs. 6/8/-.

Vol. V (about 400 pages) 16 storiettes, 4 long stories, 12 poems, humorous skits, discussions on परःशत, भ्रातृव्य, सूनृता, आसो दोऽनास्यविहरणे, on the Anubandhas, on grammatical gender, Sanskrit equivalent of "horse-power", Tagore's poems, Language as fossil history, on Sāyaṇa's Bhāṣya. The Śivasūtras and the Sanskrit Alphabet, Patañjali's Mahābhāṣya, Hymns from the Avesta, etc., etc. Rs. 6/8/-

Vol. VI (about 400 pages) 5 storiettes, 2 long stories, 1 Bhāṇa, Derivations of अश्वतर and पुत्र, आनोभद्रीयसूक्त with various commentaries, explanation of the Madhusūkta, Kālidāsa and Bhavabhūti, Mahābhāṣya (pp. 33-136), Rasamañjarī, etc., etc. Rs. 6/8/-

Vol. VII (about 400 pages) **Technical Terms and Technique of Sanskrit Grammar—Samāsa, Kāraka and Vibhakti.** Kālidāsa and Bhavabhūti (5 instalments). Was Pāṇini a Communist? Kālidāsa and Shakespeare. Greek Proverbs (64 pages). On तरप् and तमप्. On सूनृत and भ्रातृव्य. Meaning of शफोरू. 9 storiettes, 3 long stories, मृगया in Sanskrit Drama, etc., etc. 6/8/-.

Vol. VIII (about 200 pages) Short stories, long stories, humorous skits, महाभाष्यरत्नमञ्जूषा. Meanings of Sanskrit proper names. Sanskrit stanzas and their parallels from European languages. Sanskrit equivalent of bread. Notes and Queries. Tagore's short story. On देवानांप्रियः. On the derivation of कार्मुक, On Abhinavagupta. **On Śārṅgarava and Śāradvata.** Tagore's Urvashi. Common Errors. **So-called Solecisms of Kālidāsa.** Rs. 3/8/-.

Vol. IX (nearly 300 pages). **So-called Solecisms of Kālidāsa.** Literary Parallels. Common Errors. Technical Terms of the Mugdhabodha. Tagore's story and poems. Contradiction in Terms. On the correct derivation of प्रवीण, सिकता etc. वाग्मी vs. वाग्ग्मी. बिभीषण versus विभीषण. On फ, ढ, ख, छ, घ in Pāṇini. A new stanza from Vyāḍi's Saṁgraha. Meaning of रद विलेखने. सतीर्थ्य versus सतीर्थ. The Anubandhas र, क, प, उ, ष in Pāṇini, **The Technical Terms—Upasarga, Nipata, Karmapravacaniya, Gati,** etc. **Apurva in Mimamsa.** In Defence of the Padapāṭha. On ऊकालोऽज्ह्रस्वदीर्घप्लुतः. On सामवेदे साम. रेफ versus रकार. Rs 5/.

MANJUSHA ( Sanskrit Monthly Magazine )
*Registered No. C. 3278*

# রঘুবংশঃ—৫ম সর্গ

## শ্রীক্ষিতীশচন্দ্র শাস্ত্রী বিদ্যাবাচস্পতি সম্পাদিত

ইহাতে মূল, দণ্ডান্বয়, খণ্ডান্বয়, বঙ্গানুবাদ, ইংরাজী অনুবাদ, প্রত্যেক শ্লোকের প্রত্যেক শব্দের সার্থকতা দেখাইয়া বিশদ তাৎপর্য, শ্লোকগুলির ইংরাজী ব্যাখ্যা, মল্লিনাথের টীকা, নাথ ও নারায়ণের টীকা, word-notes ও প্রত্যেক শ্লোকের শেষে অনুশীলনী সন্নিবিষ্ট হইয়াছে। এই অনুশীলনী অপূর্ব বস্তু। ইহাতে পরীক্ষার্থী ছাত্রগণের যেরূপ উপকার হইবে, আবার সাধারণ পাঠকেরও সেইরূপ উপকার হইবে। কালিদাসের লেখা হইতে ভূরি ভূরি অনুরূপ প্রয়োগ উদ্ধৃত হইয়াছে, বেদবেদাঙ্গাদি হইতেও বচন উদ্ধৃত হইয়াছে, উদ্ধৃত অংশগুলির বঙ্গানুবাদও দেওয়া হইয়াছে। কালিদাস কাব্যের রসাস্বাদনেচ্ছুর ইহা অবশ্যপাঠ্য। মূল্য তিন টাকা বার আনা মাত্র।

TECHNICAL TERMS AND TECHNIQUE OF

# SANSKRIT GRAMMAR

**A Critical, Comparative and Historical Study**

By

**KSHITISH CHANDRA CHATTERJI, SASTRI, M. A., D. LITT.**

*Formerly Editor, Calcutta Oriental Journal, Surabharati, Oriental Literary Digest, etc., etc.*

"We have nothing but admiration for this masterpiece of scholarship." *Modern Review.*

Part I: *Price Rupees Twelve only.* Part II Rs. 1/4/-, Part III : (Manjusha Vol. VII.) Rs. 6/8/-.

# आनोभद्रीयं सूक्तम्

The most inspiring hymn in the Rigveda (i 89) with five commentaries in Sanskrit including a modern one unfolding the significance of each word and expression, English translation, copious English notes etc., etc. Rs 2/8/-

**VISVANATH CHATTERJI**
**8, Bhupendra Bose Avenue,**
**CALCUTTA—4**
**Phone : 55-4049**



Printed and published by Sri Visvanath Chatterjee, M.A. from 8 Bhupendra Bose Avenue (formerly 81, Shyambazar Street), Calcutta-4, Printed at the Gupta Press, 37/7 Baniatola Lane, Calcutta-9.

चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर पाहि माम्।
चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्ष माम्॥

श्रीशिवः शरणम्

चतुर्दश-वर्षे ] July, 1960 [ एकादशी संख्या

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## Principal Contents



The Mañjūṣā will be greatly helped if each subscriber secures for the Mañjūṣa one or two new subscribers.

*Office :* 8, Bhupendra Bose Avenue, Calcutta—4.
Minimum Annual Subscription : Rupees Six only.
Foreign—Twelve shillings.
Single copy : One Rupee.

# Manjusha

Vol. IV (about 400 pages)—29 storiettes, hymns from the Rigveda with commentary, छात्री versus छात्रा, पतत्र versus पत्र, Goethe's maxims ( original German with Sanskrit translation), Saratchandra's Niṣkṛti, on Pāṇini's क्त, महाभाष्य, विश्रम versus विश्राम, सेवका versus सेविका, अन्योन्य, 11 humorous skits. Rs. 6/8/-.

Vol. V (about 400 pages) 16 storiettes, 4 long stories, 12 poems, humorous skits, discussions on परःशत, भ्रातृव्य, सूनृता, आज्ञो दाऽन्नास्यविहरणे, on the Anubandhas, on grammatical gender, Sanskrit equivalent of "horse-power", Tagore's poems, Language as fossil history, on Sāyaṇa's Bhāṣya. **The Śivasūtras and the Sanskrit Alphabet.** Patañjali's Mahābhāṣya. Hymns from the Avesta, etc., etc. Rs. 6/8/-

Vol. VI (about 400 pages) 5 storiettes, 2 long stories, 1 Bhāṇa, Derivations of अश्वतर and पुत्र, आनोभद्रीयसूक्त with various commentaries, explanation of the Madhusūkta, Kālidāsa and Bhavabhūti, Mahābhāṣya (pp. 33-136), Rasamañjarī, etc., etc. Rs. 6/8/-

Vol. VII (about 400 pages) **Technical Terms and Technique of Sanskrit Grammar—Samāsa, Kāraka and Vibhakti.** Kālidāsa and Bhavabhūti (5 instalments). Was Pāṇini a Communist? Kālidāsa and Shakespeare. Greek Proverbs (64 pages). On तरप् and तमप्. On सूनृत and भ्रातृव्य. Meaning of शफोरु. 9 storiettes, 3 long stories, मृगया in Sanskrit Drama, etc., etc. 6/8/-.

Vol. VIII (about 200 pages) Short stories, long stories, humorous skits, महाभाष्यरत्नमञ्जूषा. Meanings of Sanskrit proper names. Sanskrit stanzas and their parallels from European languages. Sanskrit equivalent of bread. Notes and Queries. Tagore's short story. On देवानांप्रियः. On the derivation of कार्मुक, On Abhinavagupta. **On Śārṅgarava and Śāradvata.** Tagore's Urvashi. Common Errors. **So-called Solecisms of Kālidāsa.** Rs. 3/8/-.

Vol. IX (nearly 300 pages). **So-called Solecisms of Kālidāsa.** Literary Parallels. Common Errors. Technical Terms of the Mugdhabodha. Tagore's story and poems. Contradiction in Terms. On the correct derivation of प्रवीण, सिकता etc. वाग्मी vs. वाग्ग्मी. बिभीषण versus विभीषण. On फ, ढ, ख, छ, घ in Pāṇini. A new stanza from Vyāḍi's Saṃgraha. Meaning of रद विलेखने. सतीथ्य versus सतीर्थ. The Anubandhas र, क, प, उ, ष in Pāṇini, **The Technical Terms—Upasarga, Nipata, Karmapravacaniya, Gati, etc. Apurva in Mimamsa.** In Defence of the Padapāṭha. On ऊकालोऽज्झस्वदीर्घप्लुतः. On वामदेव्यं साम. रेफ versus रकार. Rs 6/.

MANJUSHA ( Sanskrit Monthly Magazine )
*Registered No. C. 3278*





Printed and published by Sri Visvanath Chatterjee, M.A. from 8 Bhupendra Bose Avenue, Calcutta-4. Printed at the Gupta Press 37/7 Beniatola Lane, Calcutta-9

चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर पाहि माम्।
चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्ष माम्॥

श्रीशिवः शरणम्

षष्ठदश-वर्षे ] September, 1961 [ प्रथमा संख्या

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## सूचिः



———

येषां सविधे राशिवडेकरमहोदयस्य पत्राणि वर्तन्ते ते कृपया मञ्जूषायां प्रकाशनार्थं तेषां प्रतिलिपिप्रेषणेनानुगृह्णन्तु नः।

**Please send your renewal subscription with donation at once.**

**Office : 8, Bhupendra Bose Avenue, Calcutta—4.**
**Minimum Annual Subscription : Rupees Six only.**
**Foreign—Twelve shillings.**
**Single copy : Three Rupees.**

मञ्जूषाया वार्षिकं मूल्यमवरतो रूपकषट्कम् । आश्विन (September)-मासतो वर्षारम्भः । ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम्।

२। प्रतिसौरमासं दशमदिने (आङ्गलमासस्य चतुर्विंशे दिवसे) 8, Bhupendra Bose Avenue, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते। मासस्य प्रारम्भे न लभ्यते चेदस्मभ्यं निवेदनीयमन्यथा पुनः प्रेरणं न सम्भवेत् ।

३। मञ्जूषायास्तावद् भागत्रितयं वर्तते। तत्र प्रथमे भागे देवभाषां प्रविविक्षूणां कृते सरलाः श्लोका आभाणका आख्यानानि नाटकानि च सन्निवेश्यन्ते। द्वितीये भागे दार्शनिका निबन्धा व्याकरणालङ्कारादीनां विमर्शः पाठविचारो जिज्ञासा मीमांसा च प्रकाश्यन्ते। तृतीये भागे सानुवादाः पारसीकानां गाथाः साङ्गलानुवादं निरुक्तं च प्रकाश्यन्ते।

*वामनस्य काव्यालङ्कारसूत्रवृत्तिः* (प्रयोगाधिकरणम्) विविधकाव्योदाहरणमण्डितविविधव्याकरणमतसमन्वितामिनवसुविस्तृतटीकोपेता (अतिदुर्लभा) २॥)

**सिद्धान्तकौमुदी**—लीलावतीसहिता (प्रथमो भागः) । मूल्यं १)

| | |
|---|---|
| Upasarga and other Technical Terms | Rs. 1/4/- |
| Convocation Address in Ancient India | As. 12 |
| Popular Etymology— | Re. 1/- |

**ECONOMY IN SPEECH**—(Manjusha, May 1958). It is indispensable to students of languages. Re. 1/-

**Patanjali's MAHABHASHYA (Paspasha or Introduction) with English Translation, exhaustive critical and explanatory notes, commentaries etc. Second Edition. Rs. 4/-**

**ऋग्वेदीयम् आनोभद्रसूक्तम्** (पञ्चभाष्यसमन्वितम्) २॥०

**শব্দকথা**—সরস, সরল ভাষাতত্ত্ব ২

**উষার আলো**—ছোট ছোট হাসির গল্পের সমষ্টি— ৸০

**নক্ষত্রমালা**—ধর্মবিষয়ক শ্লোক, সরল ব্যাখ্যা ও অনুবাদ ১৷০

Several sets of Vols. IV, V, VI (lese one no.), VII, Rs. 10/- per volume, Vols. X, XI, XII, XIII and XIV (400 pp. each) of the Manjusha are still available for Rs. 6/8/- per volume and only a few sets of Vol. VIII (200 pages) Rs. 3/8/- only. Vol. IX Rs. 6/-. Only a few sets in stock. Order at once.



**श्रीविश्वनाथ-चट्टोपाध्यायः**

Phone :—55-4049

८, भूपेन्द्र वसु आभेन्यू, कलिकाता ४

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

September, 1961. | १८८३-शकीयाश्विनस्य १६श-वर्षस्य प्रथमा संख्या | Vol. XVI No. 1

## मङ्गलाचरणम्

शिवं शङ्करं शम्भुमीशानमीडे ।

## आशीः

सर्वस्तरतु दुर्गाणि सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु न कश्चिद् दुःखमाप्नुयात् ॥

## सर्वतोमुखकल्याणस्य मन्त्रः

French. Tous les jours, à tous points de vue, je vais de mieux en mieux. Emile Coué.

Day by day, in every way, I am getting better and better.

प्रतिदिनं प्रतिविषयमहं भद्राच्छ्रेयान् भवामि ।

दिवसे दिवसे देव सर्वभावेन सर्वतः ।
भवामि श्रेयसः श्रेयान् प्राप्नोमि श्रेयसः श्रेयः ॥

[ कूयेमहोदयस्य मतानुसारिणः प्रतिदिनं निद्रात उत्थाय निद्रां गमिष्यन्तश्च प्रातः रात्रौ च मन्त्रमिमं विंशतिकृत्वो जपन्ति । तावता तेषां सर्वाङ्गीणं मङ्गलं भवति । ]

## उपदेशरत्नानि

सहजोऽपि गुणः पुंसां साधुवादेन वर्धते ।
कामं सुरसलेपेन कान्तिं वहति काञ्चनम् ॥

[ श्रीमत्या अन्नवासन्तीमहोदयायाः (Mrs. Annie Beasant) कर्मकरेषु वा सहायकेषु वा त्रुटिं कुर्वत्सु सा प्रशंसामुखराभवत्। तेन च स्खलितस्य प्रतीकारे प्रशंसितो जनो दत्तावधानोऽभवत्। एकदास्मदीयाचार्याः Dr. I. J. S. Taraporevala महोदयास्तया प्रशंसितः, तेन चेमेऽतीव विमनायमानमानसा अभवन्। ]

पठकाः पाठकाश्चैव ये चान्ये शास्त्रपाठकाः।
सर्वे व्यसनिनो ज्ञेया यः क्रियावान् स पण्डितः॥
षट्पदः पुष्पमध्यस्थो यथा सारं समुद्धरेत्।
तथा सर्वेषु शास्त्रेषु सारं गृह्णन्ति पण्डिताः॥
अनन्तपारं किल धर्मशास्त्रं स्वल्पं तथायुर्बहवश्च विघ्नाः।
सारं ततो ग्राह्यमपास्य फल्गु हंसैर्यथा क्षीरमिवाम्बुमध्यात्॥
अनर्घ्यमपि माणिक्यं हेमाश्रयमपेक्षते।
अनाश्रया न शोभन्ते पण्डिता वनिता लताः॥

---

# आभाणकमाला

१। The shortest answer is doing.
क्रिया खलु लघुतममुत्तरम्।

२। That is neglected by all which is possessed by all.
बहुस्वामिकं वस्तु सर्वैरुपेक्ष्यते।
(वङ्गीयः) भागेर मा गङ्गा पाय ना।
नहि बहूनां माता (अन्तिमेऽवसरे) गङ्गां लभते।

३। नासतो विद्यते भावः।
Nothing will come out of nothing.
Greek. Ouden ek denos genoito.
Latin. Ex nihilo nihil fit.
असतो न जायते सत्। असदेवासतो जायते।
[ अस्य व्यतिक्रमः कुसीदजीविषूपलभ्यते। बहवः खलूत्तमर्णा ऋणदानात्पूर्वमेव कुसीदं प्रार्थयन्ते। ]

४। A needle is not sharp at both ends.
न खलु सूचिरुभयोरग्रयोस्तीक्ष्णा।
[ न खलु तथाविधो मनुज उपलभ्यते यः सर्वत्र सर्वदा तीक्ष्णधीः। ]

---

# अनुबन्धः ककारः

[ श्रीक्षितीशचन्द्रचट्टोपाध्यायः ]

१। कृशकुण्ठादिशब्देषु ककारो देदीप्यते, अत एव गुणवृद्धि-प्रतिषेधार्थः, सम्प्रसारणाद्यर्थः, इयङाद्यादेशार्थश्च ककारोऽनुबन्ध आसज्यते। क्ङिति च [१।१।५], अनिदितां हल उपधायाः क्ङिति [६।४।२४], वचिस्वपियजादीनां किति [६।१।४५]।

अनुनासिकस्य क्विझलोः क्ङिति [६।४।१५] इति सूत्रेऽस्य व्यभि-चार उपलभ्यते।

२। शाक्तीक-याष्टीक-वार्षिकादिषु सुबहुषु तद्धितान्तेष्वादौ वृद्धिरन्ते च ककारो दृश्येते। अत एव तद्धितेष्वचामा-देर्वृद्ध्यर्थं ककार आसज्यते। [ तद्धितेष्वचामादेः ] किति च [ ७।२।११८ ]।

३। कप्रत्ययोऽन्ते भवति, अत एव कानुबन्ध आगमोऽप्यन्ते भवति। आद्यन्तौ टकितौ [१।१।४६]।

४। वुञ्छणादिसूत्रेण ऋश्यादिभ्यः कप्रत्ययो भवति। प्रागि-वात्कः, अज्ञाते, कुत्सिते, अवेः कः इति सूत्रैस्तद्धितः कप्रत्ययो विहितः। स चान्ते भवत्युदात्तश्च। अत एव ताद्धितोऽनुबन्धः ककारोऽन्तोदात्तत्वं सूचयति। [ तद्धितस्य। ] कितः [६।१।१६५]।

---

# कर्मधारयस्य मूलं धर्मधारयः

धर्मस्य धारकः पालक इत्यर्थे मैत्रायणीसंहितायां धर्मधारय-शब्द उपलभ्यते। अयमेव कर्मधारय-समासस्य जनक इति प्रतिभाति।

---

# व्यर्थताया उदाहरणम्

May 27 is the last date for casting of votes and counting will take place on May 28. Statesman, *June 2*, 1961.

---

( १० )

श्रीशिवः शरणम्

कोल्हापुर

७४ मेष १३

कोल्हापुरक्षेत्रविराजमानात् कार्यालयात् संस्कृतचन्द्रिकायाः ।

स्वस्ति श्रीयुतमुल्लसद्रसभरैः श्लोकैः प्रमोदप्रदं
राजद्राजयशोविलासमसमं मानातिगैर्वैभवैः ।
सम्भाव्यालघुमानविक्रमकविं केनापि कोल्हापुरा-
दाशीर्वादपुरस्सरं सविनयं सानन्दमावेद्यते ॥१॥

उपागतः पुस्तकसञ्चयस्त्वया विभो ! प्रणीतस्तनुतेऽद्य सम्मदम् ।
सुदुर्लभा कस्य मुदं न वर्धयेदुपस्थिता दिव्यरसा सुधासरित् ॥२॥

सरस्वती प्रायश आवहत्यसौ पराङ्मुखत्वं कमलानिकेतने ।
इदं वचः सव्यभिचारमद्य यच्छ्रियः पतिस्त्वं च गिरामधीश्वरः ॥३॥

अलङ्कृतिप्रोल्लसिता गुणाञ्चिता मनोहराभिर्मधुरा च गीतिभिः ।
स्फुरत्पदन्यासविशेषमञ्जुला विभाति योषेव नवा भवत्कृतिः ॥४॥

हठादपाकृष्य पदानि कानिचिद् भवन्तु केचित् कविभावगर्विताः ।
अहं गिरा किन्तु निसर्गकान्तया तवैव मन्ये कविभावयोग्यताम् ॥५॥

अहो नु दुर्भाग्यमिदं मदीयकं यदस्म्यहं विश्वसृजाद्य वञ्चितः ।
किमप्यलं केरलवर्णमुद्रितं न पुस्तकं यत् पठितुं प्रभूयते ॥६॥

अवैमि तैलङ्गलिपिं सवङ्गजां न किन्तु तत्तुल्यगुणाऽस्ति वो लिपिः ।
अतः कथं तामवबुध्य सत्वरं भवेयमास्वादयितुं रसं प्रभुः ॥७॥

विचिन्तयन्नित्यसकृच्च लक्षये कमप्युपायं विधिना विनाकृतः ।
बुभुत्सया किन्तु वशीकृतान्तरो विषादमन्यादृशमावहाम्यहम् ॥८॥

भवत्वलं किन्तु विचिन्तयानया न दुर्घटं जातु विधातुमीश्यते ।
समेधतां मय्यनिशं दयैव ते नतेन मूर्ध्ना त्वहमेतदर्थये ॥९॥

भवद्देशीयवर्णानामस्ति चेत् कोऽपि बोधकः ।
प्रबन्धः प्रेष्यतां येन तज्ज्ञाने प्रभवाम्यहम् ॥१०॥

देवनागरवर्णानामधस्तात् केरलाक्षरम् ।
प्रहीयेत लिखित्वा चेत् कृतज्ञः स्यां भवत्यहम् ॥११॥

व्यञ्जनानां च संयोगपद्धतिः प्रतिबोध्यताम् ।
लिपिद्वयं मया दृष्टं श्रीमत्प्रहितपुस्तके ॥१२॥
तच्चाववोद्धुमत्यन्तं मनः कामयते मम ।
उत्कण्ठे वलवद् यस्मात् पठितुं पुस्तकानि वः ॥१३॥
प्रकाश्यमानाथ मया नु मासि या समागता सा करपङ्कजं नु वः ।
गिराञ्चिता संस्कृतयैव पत्रिका नरेशितः ! संस्कृतचन्द्रिकाभिधा ॥१४॥
अलं समाक्रामयति भारतक्षितिं विदेशजास्पष्टपदा सरस्वती ।
उपैति च क्षीणतमां दशामसौ मनोहरा देवगिरा नराधिप ! ॥१६॥
अतः क्वचिद्दोषमियं प्रमादजं वहेद् विभो ! संस्कृतचन्द्रिका यदि ।
तदा समुद्धर्तुमलं प्रयत्यतां निसर्ग एवैष हि चेतसः सताम् ॥१६॥
विचक्षणोत्तंसमनोहरेषु नास्याः प्रचारः किल केरलेषु ।
कथं नु तत्तत्र चरिष्यतीयमिति प्रभो ! बोद्धमहं समीहे ॥१७॥
लब्धुं कामं प्रचारं प्रतिविषयमसौ मोदयेत् सूरिसङ्घं
कान्तिं काञ्चित् प्रविन्देदपि च परिहरेदात्मदोषानशेषान् ।
इत्थं मन्ये विशङ्कं घटितमयि यतः सौहृदं भूपते ! ते
किं नो कुर्यात् कथञ्चिद् विधिवलजनितः सङ्गमः सज्जनानाम् ॥१८॥
दूरेऽवभासि नरनाथ ! तथापि शश्वत्
प्रक्षिप्यतां मयि दयारसवान् कटाक्षः ।
दूरान्तिकत्वमिह दैवकृतं मनस्तु
सर्वान् समीपयति भूमिपते ! पदार्थान् ॥१९॥
अनुदिनमधिकाधिकं प्रभो ! ते
मयि विलसत्वसमा किलानुकम्पा ।
विधिजनितसुहृत्त्ववीरुदेषा
स्मृतिसलिलेन च सिच्यतामजस्रम् ॥२०॥

इति शिवम् ।

भूतेऽत्र वसुभूमाने शाके वर्षे विकारिणि ।
चैत्रादिमदले षष्ठ्यां पत्रमेतद् व्यलिख्यत ॥२१॥
सम्पादकः संस्कृतचन्द्रिकाया
उपाह्वयो राशिवडेकरो यः ।
अप्पाभिधानः स किल द्विजन्मा
पत्रीमिमां प्रेषयते नृपाय ॥२२॥

( ११ )

श्रीशिवः शरणम्,

कोल्हापुरवर्तिसंस्कृतचन्द्रिकाकार्यालयात्
श्रावण सुदि १८—२१

स्वस्ति प्रियसुहृद्वर्यान् कवीन्द्रकुलशेखरान् ।
सानुरागमिदं ब्रूमो मानविक्रमभूपतीन् ॥१॥
लिखितं प्रेरितपूर्वं मया भवद्भ्यो महीपकुलतिलकाः !
जानेऽधिगतं नो वा भवद्भिरिति तेन किमपि विमनाये ॥२॥
अहमिह सुतरां कुशली किन्तु भवत्कुशलवृत्तमविजानन् ।
विन्दति न स्वास्थ्यमिदं मनो मदीयं प्रियप्रवराः ! ॥३॥
तत् प्रेर्यतामजस्रं सुधारसस्यन्दि कुशलवृत्तमयम् ।
म्लानस्य चेतसो मे रसायनं कविवराः पत्रम् ॥४॥
अत्रावृष्ट्या त्वखिला आसन् विकलाः प्रजा महीपालाः !
वृष्टिः सम्प्रति किञ्चित् किन्तु मनः सम्प्रमोदयति ॥४॥
नात्रान्यो विशेषः, समेधतामनुदिनमधिकाधिकमनुराग इति शिवम् ।

विनयावनतः सखा,
राशिवडेकरः श्रीअप्पाशर्मा

———

( १२ )

श्रीशिवः शरणम् ।

प्रियसुहृत्तमविविधगुणगणप्रभासिताशेषदिगन्तरभूपालचूडामणिश्रीश्रीमानविक्रमकविराजकुमारेषु,

संस्कृतचन्द्रिकाकार्यालयात्
१८२३ शाकचैत्रवदि

साशीर्वचनं सविनयं सानुरागं चावेदनम्,

प्रेष्ठमहाराजाः ! समतिक्रान्तो बहुतिथः समयः समधिगतस्य श्रीमतां कृपापत्रस्य, किन्तु पत्रागमनावसरे प्रेयस्याः सहधर्मिण्या अतिमात्रमामयाभिभवेन व्याकुलितान्तःकरणस्तदुत्तरं मे दुर्भाग्यवशात्तस्याः परलोकप्रयाणेन दुःखाकुलहृदयो नाद्यावधि श्रीमत्पत्रिकायाः प्रत्युत्तरं प्रेरयितुं प्राभूवमिति क्षम्यतामिदमागः । प्रेष्ठाः ! यत्सत्यमुद्विग्नोऽ-

स्मीदानीं संसारात्। भार्यैव हि गुणवती प्रधानमवलम्बनं संसारवर्तिनां पुरुषाणाम्, विशेषतश्च मादृशानां दरिद्रधुर्याणाम्। सर्वथा हतोऽस्मि वामप्रवृत्तिना विधिहतकेन। का गतिः? प्रतिबन्धकाच्चास्मादेव नापारि यथावसरं पत्रिकां प्रकाशयितुम्।

अधिगतं मया श्रीमत्प्रेरितं चन्द्रिकाया मूल्यं रूपिकाष्टकम्, प्रकाशितान्येत्र श्रीमत्समस्यापूरणानि च चन्द्रिकायाश्चतुर्थसंख्यायाम्।

प्रेष्ठाः! क्वेदानीं श्रीकृष्णमाचार्याः? किं वानुतिष्ठन्ति? अपि कुशलिन एते सपरिवाराः? न जाने किमिति वा न प्रेर्यते मदीयपत्राणामुत्तरं प्रियसुहृद्भिरप्येतैरिति। अपीदानीं त्रिशिरःपुरमेवाधितिष्ठन्त्येते? निवेद्यतामेतत् कृपया। अहो युक्तं खल्वेतदभिधीयते श्रीमता भट्टबाणेन यत् सम्पत् सम्पदमनुबध्नाति विपद् विपदमिति। यद् विपद्यप्येवंविधायां प्रियसुहृद्भिः परित्यज्ये। निवेद्यतां मत्प्रणामः प्रियसुहृद्भ्यः श्रीनीलकण्ठपण्डितचरणेभ्य इति प्रार्थये।

समेधतां प्रतिदिनमधिकमनुराग इति शिवम्!

विनयावनतः सुहृत्,

श्रीअप्पाशर्मा राशिवडेकरः

---

# शाङ्करभाष्यपाठविमर्शः

## १। यावत्…नागमिष्यति

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

शरीरं भृशमस्वस्थम्। कस्मिन्नपि कर्मणि मनो न लगति। यदृच्छया बृहदारण्यकभाष्यमुद्घाटयतां नो नयनयोर्निपतितम्—

ईदृशः कष्टः खल्वयं संसारः। येनोत्क्रान्तिकाले मर्मसूत्कृत्यमानेषु स्मृतिलोपो दुःखवेदनार्तस्य पुरुषार्थसाधनप्रतिपत्तौ चासामर्थ्यं परवशीकृतचित्तस्य। तस्माद्यावदियमवस्था नागमिष्यति तावदेव पुरुषार्थसाधनकर्तव्यतायामप्रमत्तो भवेदित्याह कारुण्याच्छ्रुतिः। [ ४।३।३५ ] इति।

अत्र यावदियमवस्था नागमिष्यतीत्यत्र यावदियमवस्था नागच्छतीति पठनीयम्। यावत्पुरानिपातयोर्लट् इति सूत्रस्य जागरूकत्वात्। यावत्पुराशब्दयोर्निपातयोरुपपदयोर्भविष्यति काले धातोर्लट्प्रत्ययो भवतीति तदर्थः।

---

# मञ्जूषा

[ श्रीचिरंजीवी शर्मा शास्त्री ]

आद्या भारतभूमिजै विरचिता धर्मप्लुता संस्कृति-
र्नश्यत्यद्य परैर्हृता प्रतिपलं जारैः सतीव स्वयम् ।
पुंभिः सामरिकैरिवायुधकरैरुन्मोचयन्ती ततो
मञ्जूषैव निरन्तरं विचरतु क्षोणीतले केवलम् ॥१॥
शश्वन्नीरजचेतसोऽमलदृशो यां देववाणीं मुदा
सेवन्ते तनुवाङ्मनोभिरधुना तेषां मुखान्निःसृतम् ।
सन्देशामृतमुत्किरन्त्युभयतः प्राच्यां प्रतीच्यां तथा
मञ्जूषैव निरन्तरं विचरतु क्षोणीतले केवलम् ॥२॥
याते यत्र मनुष्यता दिशि न वा जेघ्नीयते पामरै-
राहोस्विन्न विषीदति व्रजति वा हास्यास्पदं यत्र न ।
आपन्नान्मनुजान्ममत्वजलधे स्तत्रोन्नयन्ती बला-
न्मञ्जूषैव निरन्तरं विचरतु क्षोणीतले केवलम् ॥३॥
रेका भूपतयः कृषीवलगणो विप्रश्वपाकादयो
यस्मिन्नुच्चलितेऽध्वनि क्षणमपि व्याधिक्षुधातृट्कुलैः ।
साद्यन्ते न, महात्मभिर्विरचितां पूतां दिशन्ती स्मृतिं
मञ्जूषैव निरन्तरं विचरतु क्षोणीतले केवलम् ॥४॥
एकेऽनीकयुताः परे सविभवा अन्येऽसिबाणैर्युता
अन्योऽन्यं मम मे ममेति नितरां वैरायमाणा इह ।
सक्ताः स्युर्मनुजा नरत्वहरणे तान्बोधयन्ती ऋताम्
मञ्जूषैव निरन्तरं विचरतु क्षोणीतले केवलम् ॥५॥
नानावादसमीरशुष्कहृदया ये भूतले साम्प्रतं
ज्ञानाभावनिदाघतापविहता दूनाः स्थले मीनवत् ।
सद्वाक्यामृतवर्षणैरविरलं तांस्तर्पयन्त्यन्वहं
मञ्जूषैव निरन्तरं विचरतु क्षोणीतले केवलम् ॥६॥
यावद् भास्वति भारते भगवती भागीरथी भूमिगा
यावत्तारकमध्यगो रजतवद्राजेत राकापतिः ।
तावत्संस्कृतसत्कथा-सुकवितासद्भारतीसंश्रिता
मञ्जूषैव मनीषिभिः सुमहिता जीवेन्महत्त्वं गता ॥७॥

—

## व्याकरणविमर्शः

नैषधचरिते दृश्यते [ १७।८९ ]

याचतः स्वं गयाश्राद्धं भूतस्याविश्य कञ्चन ।
ज्ञाना देशजनोपज्ञाः प्रत्येषि न कथाः कथम् ॥

इति । अत्र नानादेशजनोपज्ञाः कथाः इत्यत्र नानादेशजनोपज्ञाः-पदस्य साधुत्वं विचार्यते । उपज्ञोपक्रमं तदाद्याचिख्यासायामिति सूत्रेण नानादेशजनानाम् उपज्ञाः इति समासे नानादेशजनोपज्ञानीति पदेन भवितव्यम् । नानादेशजना विविधदेशवासिलोका एव उपज्ञा आद्यं ज्ञानं प्रमाणमिति यावत् यासां तादृशीः, तत्प्रमाणका इत्यर्थः इति मल्लिनाथः । नानादेशेभ्य आगता जनास्तेभ्य उपज्ञाः श्रुताः, तैर्वा ज्ञाताः, सत्यत्वेन सर्वेषां सम्मताः कथाः ।...नानादेशजन उपज्ञा अनुभविता यासां ताः । सर्वसाक्षिक इत्यर्थः । इति नारायणः । अत्रान्तिमोऽंशः प्रक्षिप्त इव प्रतिभाति, पूर्वेण साकमसामञ्जस्यात् । उभयोरपि व्याख्यानं निरतिशयं क्लिष्टम् ।

उपज्ञाशब्दस्य लोकवेदयोः सर्वत्र आद्यं ज्ञानमित्यर्थः प्रसिद्धः । उपज्ञाते इत्यत्र काशिकायामुक्तं विनोपदेशेन ज्ञातम् उपज्ञातं स्वयमभिसम्बद्धमित्यर्थः । इति । एषु समासेषु पूर्वपदस्यैव विशेषेण बुद्धावुपारूढत्वान् मात्रोपज्ञोपक्रमच्छाये नपुंसके [ ६।२।१९ ] इति सूत्रेण पूर्वपद-प्रकृतिस्वरत्वं विहितम् ।

---

## प्राचीनतमा निरुक्तग्रन्थाः

[ उडुपि वेङ्कटकृष्णरायः ]

अत्र स्फुटमेव प्रतीयते यद्व्यासमहर्षिर्निघण्टुमेकं प्रणिनाय, किन्तु महदिदं विषाद-स्थानमस्माकं यदयं निघण्टुरधुना लुप्तप्रचार इति । त्रयोदशशतकावधि निघण्टोरस्य प्रचार आसीदिति पूर्णप्रज्ञदर्शनप्रतिष्ठापनाचार्यैः प्रणीते ऋग्भाष्यव्याख्याने वयं सुस्पष्टं पठामः—

ऋक्संहितायां स्वाध्याये निरुक्ते व्यासनिर्मिते ।
अप्रणीत्वं यदग्नित्वमित्युक्तं नाम तद्भवेत् ॥
एवमेवाह भगवान् निरुक्ति बादरायणः ॥

वेदान्ताचार्येषु शङ्कररामानुजप्रभृतिष्वयमेव ऋग्वेदव्याख्यानमपि प्रणिनायेति सुस्पष्टं प्रतिजानीमेह । अस्मिन्नेव वर्ग भाष्ये किञ्चिदनन्तरं पठामः—

अन्यथात्वं च तत्र स्यादावापोद्वापतस्त्वृचाम् ।
वेदानां तत्त्वविज्ञप्त्यै तौ चक्रे बादरायणः ॥

ऋचः स ऋच उद्धृत्य ऋग्वेदं कृतवान् प्रभुः ।
यजूंषि निगदाच्चैव तथा सामानि सामतः ॥
एवं पुराणवचनादुद्धृता हि ततस्ततः ।
ऋचः शाखात्वमापन्नाः शिष्यतच्छिष्यकैरिमाः ॥
मा नः स्तेनेति पूर्वासु ह्यूनता दृश्यतेऽर्थतः ।
शुनश्शेपोदिताभ्यश्च पञ्चन्तेऽन्यत्र काश्चन ॥
संक्षेपं कृतवान् देवः शिष्याश्च तदनुज्ञया ।
अष्टकाध्यायवर्गादिभेदं च कृतवान् प्रभुः ॥
स्वाध्यायविश्रमार्थाय तस्मात्क्रमविपर्ययः ॥

अर्थात् बादरायणपरनामको व्यासः स्वशिष्याणां प्रवचनानुकूल्यार्थं वैदिकमन्त्रक्रमे तत्र तत्र विपर्यासं कृत्वाष्टकाध्यायवर्गादिभेदं नूतनतया प्रवर्तयामास। दृष्टान्तत्वेन शुनश्शेपर्षि-दृष्टा मन्त्राः शतसंख्याकाः प्रथममण्डले पूर्वमासन्, किन्तु त्रयो मन्त्राः पृथक्कृताः, अन्यत्र निवेशिताः, चतुर्थं मण्डल एका ऋक्, अन्ये द्वे पञ्चमे च संक्रामिताः। मध्वश्चार्थे किञ्चिदिवोनतां दृष्ट्वा तां परिहर्तुं प्रयतमानो ब्रह्मसूत्रभाष्ये तृतीयाध्याये चतुर्थपादे एकोनपञ्चाशत्तमसूत्रव्याख्यानावसरे 'मा नः स्तेनेभ्यो ये अभिद्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः' इति ऋचं पूरितवान्।

जैना बौद्धाश्च ईदृशान्येकार्थकानि पर्यायपदानि संगृह्य भारतवर्षे प्रथमतया कोशान्विरचयामासुः। जैनः कश्चिद्भद्रबाहुनामको दशवैकालिकनामिकां निर्युक्तिं क्रिस्तोरपि पूर्वस्मिन् काले तृतीयशतके प्रणिनायेति प्रतीयते। अत्राध्ययनवाचकाश्चत्वारः शब्दाः, द्रुमवाचका एकादश, पुष्पवाचकाः सप्त, प्रव्रजितवाचका विंशतिः, वाक्यवाचका एकादश, भिक्षुवाचका अष्टाविंशतिशब्दाश्चान्ये चेदृशाः संगृहीता इति ज्ञातुं प्रभवामः। अध्याया अत्र दश, निर्वचनप्रकारश्च सम्यक् प्रतिपाद्यत इति ग्रन्थपरिशीलनावसरे वर्ण्यते विद्वद्भिः। १३१तमे श्लोके आलंकारिकैः प्रदर्शितेन मार्गेणोपमावर्णनं समुपलभ्यते, यथा भामहदण्डिनौ गद्यपद्यादिकान् काव्यविभागान्वर्णयतः, तथैव गद्य-पद्य-चूर्ण-कथादिकानां वर्णनमपि पश्यामः। समार्धसमविषमात्मकं त्रैविध्यं वर्ण्यते १७८तमे श्लोके। तन्त्रीतालवंशग्रहलयात्मकाः पञ्च प्रभेदाः वर्ण्यन्ते गीतस्यानन्तरश्लोके। तदनन्तरं चूर्णप्रभेदाः प्रदृश्यन्ते। कथासु चातुर्विध्यं दृश्यते। शास्त्रीयविषयाणां प्रतिपादनं संदृश्यते अर्थकथासु, शृङ्गारविषयिण्यः कथा कामकथा इति कथ्यन्ते। नीतिबोधिकाः कथा धर्मकथा इत्युच्यन्ते, तासु चाक्षेपणी-विक्षेपणी-सञ्जीवनीनिर्वेदनीनामकाः चतुर्विधा उपलभ्यन्ते। मिश्रकथाभिरीदृश्यः सर्वाः कथाः श्लिष्यन्ते। अन्यादृशो विभागोऽपि संदृश्यतेऽत्र, यथा

अकथा विकथा कथा इति। अज्ञेन येन केनापि ग्रामवृद्धेन कथिता 'अकथा' इति प्रसिद्धा; परमहंसोपदिष्टा नीतिबोधिका 'कथा', 'विकथा' च केनाप्यवकीर्णिना पतितेन कथिता कथा। इत्थमेव बहूनामन्येषां विषयाणां प्रतिपादनमपि स्यादत्रेत्युक्त्वा विरम्यते।

अमरसिंहनामको बौद्धोऽमरकोशं प्रणिनाय खलु। अयं सर्वैरपि भारतीयैरधुनाप्याद्रियते जगत्पितृवदिति—अष्टाध्यायी जगन्मातामरकोशो जगत्पिता इत्यनेन श्लोकार्धेन सम्यक् प्रतीयते। Catalogus Catalogorum इत्यत्र Aufrecht नामकेन विदेशीयेनास्य ग्रन्थस्य चत्वारिंशद्व्याख्याः सन्तीति निर्दिश्यते, कविकाव्यकल्पनाख्येऽपरस्मिन् ग्रन्थ एकोनसप्ततिष्टीका विद्यन्त इत्यपि च पठामः। यथाकथंचिदपि सत्यमस्तु, व्याख्याबाहुल्यमेवास्य जनप्रियतानिवेदकमिति निश्चप्रचं साधयामः। क्रिस्तोः षष्ठशतकात्पूर्वमेवास्य परिवर्तनं चीनभाषायां कृतमिति यदा ज्ञायते तदैवास्याबालगोपालं लोकोपकारकता स्पष्टं ज्ञायते। पूर्वोक्तेषु कोषेष्वेकार्थानामेव संकलनमासीत्, अत्र चार्थप्रतिपादनं लिङ्गनिर्धारणमिति विषयद्वयमपि क्रोडीकृतमिदंप्रथमतयेति ग्रन्थस्यास्य वैशिष्ट्यं स्फुटमेव प्रतीयते। तथा चास्य कोशस्यापरमन्वर्थमाख्यानं नामलिङ्गानुशासनमिति। तस्य काले प्रसिद्धेभ्यो भाष्येभ्यस्तद्वाक्यं चोरयित्वात्मनः कोशं विश्वजनीनं कृतवान्। तथा चाभियुक्तोक्तिः—अमरसिंहो हि पापीयान् सर्वं भाष्यमचूचुरत्। प्राचीने च संप्रदायशिक्षणक्रमे बालानां सर्वेषां विनाप्यर्थज्ञानं कण्ठस्थकरणमवश्यकरणीयमासीत्। अस्योपकारस्येदृक्तेयत्ता नास्माभिः सम्यगवधारयितुं पार्यते। इति शम्।

---

# छात्रहितैषिणी

[ श्रीवेङ्कटाचार्यः ]

सुदेवो असि वरुण यस्य ते सप्त सिन्धवः।
अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव॥

अनेन ऋङ्मन्त्रेण वरुणस्य स्तुतिः क्रियते। "सत्यं वद" इति सत्यकथनं वेदविहितम्। तथा नानृतं वदेदित्यनेनासत्यकथनमपि प्रतिषिद्धम्। सत्यं च द्विविधं शब्दसत्यमर्थसत्यञ्च। तत्र यथैव यथावस्थिताविप्लुतार्थवचनं श्रेयःसाधनमेवं यथावस्थितशब्दसत्यवचनमपि। यथा चार्थसत्यविपर्ययः प्रत्यवायाय, एवं विनियोगकालप्रयुक्तशब्दानृतवचनमपि। "शब्दसाधुत्वज्ञानं च व्याकरणाभियोगविशेषात्" इति हि कुमारिलो वदति। साधवः शब्दाः शब्दसत्यपदेन विवक्षिताः। अपशब्दश्च शब्दानृतमित्युच्यते। जीवतः पुरुषस्य मृतत्वकथने यथा महाननर्थोऽनुभवसिद्धः,

तथा वस्तुसतः पदार्थस्यान्यथाप्रतिपादने दोषः सर्वत्रानपलपनीयः। तदिदमर्थानृतम् अत्यन्तं गर्हितम्। इत्थमेव विवक्षितार्थप्रतिपादनसमर्थं साधुशब्दम् अपहाय, अत्रानेन अन्यस्य तदसमर्थस्यापशब्दस्य प्रयोगे, सोऽयं कार्यकारी न स्यात्। अन्ततः शब्दानृतमिदं कदाचिदर्थानृते पर्यवस्येत्। तेन पूर्ववदेवानर्थः सम्भवेत्। क्वचिदर्थानृताऽपर्यवसानेऽपि विवक्षितार्थपर्यवसानं तु न स्यात्। तेनापि दोषः। स्वजनमात्मानं श्वजन इति कथयति चेत् परस्तर्हि शब्दानृतमर्थानृतं च विस्पष्टम्। गौरिति प्रयोक्तव्ये कौरिति वा कावीति वा केनचित् प्रयुक्त ईप्सितासम्पादकमिदं शब्दानृतम् भवति। तस्मात् केष्वर्थेषु के शब्दाः साधव इति ज्ञानं व्याकरणेन लब्धुं शक्यम्। विभक्त्यादिप्रत्ययविशेषज्ञानं तत्तदर्थविशेषज्ञानं रूपविशेषज्ञानं च व्याकरणेनैव शक्यम्। देवदत्ताय धनं देयमिति कथयितव्ये अज्ञ नेन देवदत्तेन धनं देयमिति कथने कीदृशी दशा भवेदिति स्वयमूहितुं शक्यम्। इदमेकम् उदाहरणम्। इत्थं विविधानि सम्भवन्ति। तस्माल्लोकक्षेमार्थं शब्दसत्यमवर्जनीयम्। व्याकरणज्ञानवशात् तादृशशब्दसत्यनिष्णातो वरुण इति सोऽयं सत्यदेव इति श्रूयते। अयमंश ऋङ्मन्त्रेण सचमत्कारं प्रतिपाद्यते। वायोस्ताल्वाद्यभिघातवशाद् वैखरीरूपशब्दस्य प्रवृत्तिः स्पष्टा। तत्र यदि ताल्वादिस्थानेषु शुद्धिः स्यात् तर्हि शुद्धस्य शब्दस्य प्रवृत्तिः ततश्शक्यसम्भवा। अशुद्धशब्दप्रवृत्तौ ताल्वादिस्थानेष्वप्यशुद्धिरस्तीति मन्तव्यं भवति। यथा मलिनादिकमशुद्धं जलसेकेन निराक्रियते, तथा लाक्षणिकं शब्दसम्बन्धि मुखमालिन्यं सप्तानां विभक्तिरूपाणां नदीनां तत्र प्रवहणेन निराकृतं भवति। अर्थात् यः सप्तापि विभक्तीः सम्यग् जानाति, तस्य मुखं शब्दविषये निर्मलं भवेत्। तेन शुद्धः शब्दस्ततो निस्सरेत्, शब्दसत्ये च स परिनिष्ठितः स्यात् इति फलति। इदं च व्याकरणज्ञानसाध्यम्। वरुणस्य तादृशज्ञानविशिष्टत्वात् स सत्यदेव इति स्तूयते। सप्तानां नदीनां प्रवहणेन मालिन्यशोधनस्य "सूर्म्यं सुषिरामिव" इत्यनेन उपमानं दर्शितम्। "सूर्मी स्थूलायःप्रतिमा।" सुषिरा सच्छिद्रा। यथा सच्छिद्राया अयःप्रतिमाया अन्तर्विद्यमानं लोहमलमग्निः प्रदह्य निष्कासयति तथा मुखमालिन्यं सप्तानां विभक्तिरूपाणां नदीनां प्रवहणेन निष्कासितं भवतीति तात्पर्यम्। इत्थं वरुणः सत्यदेवः सम्पन्नः। तथैव तादृशं सत्यदेवत्वमस्माभिरपि लब्धुमिष्यते चेत् तर्हि व्याकरणमध्येयमिति पतञ्जलिः प्रतिपादयति। अनेन सत्यदेवत्वसिद्धिः शब्दसत्यसिद्धिश्च व्याकरणाध्ययनस्य प्रयोजनमिति दर्शितं भवति। सुदेवो असि इत्यत्र वैदिकः प्रकृतिभावः प्रकृत्यान्तःपादमिति विहितः। तेन न पूर्वरूपम्। सूर्मीम् इति प्राप्ते सूर्म्यम् इत्यपि छान्दसं रूपम्।

---

रवीन्द्रनाथस्य

# अन्तिम-शिक्षा

## [ शेष शिक्षा ]

### [ श्रीफटिकलालदास-कृततात्पर्यानुवादः ]

गोविन्दसिंहः—समरेऽपि सिंहो गुरुः शिखानां प्रविविक्तदेशे
स्थित्वाऽद्वितीयो निजजीवनस्य वृत्तान्तजातं विगतं कदाचिद्
विचिन्तयामास निविष्टचित्तः। आशैकदा या हृदि सञ्चरन्ती
जघास सर्वं भरतस्य वर्षं, सङ्कल्पलेखा धृतपूर्णमूर्ति-
र्या यौवनस्वर्णपटे चकाशे, साद्यास्ति दीर्णा, शतधा विभक्ता,
विपन्निमग्ना, बहुसंशया च, सङ्कीर्णशीर्णा विरराज हन्त!
"भ्रान्तिः किमेषा मम चित्तसंस्था, व्यर्थं किमेतच्छ्वसितं ममासीत्?"
इत्याकुलः सन्नवसन्नदेहो द्विधाजडत्वं परमं प्रपन्नः
सन्ध्यान्धकारे विजने निषण्णो व्यचिन्तयत्तत्र यदैकदासौ
पाठान एकः समुपेत्य चख्यौ, "गच्छामि सद्यो निजदेशमद्य,
क्रीताश्वमूल्यं सपदि प्रदेहि।" गुरुः समूचे, "प्रणमामि, शेख।
त्वमद्य गेहं प्रतिगच्छ, बन्धो, श्वः प्रातरेव प्रददामि मूल्यम्।"
पाठान ऊचे कुपितस्ततस्तम्, "अद्यैव देयं भवतास्य मूल्यम्।"
इत्येवमुक्त्वा करमस्य धृत्वा तं चौरमाख्याय ददौ स गालिम्।
श्रुत्वा गुरुस्तच्चपला-स्यदेन निष्कास्य कोषात्तरवारिमेकं
पाठानमुण्डं निमिषेण कृत्वा रक्ताप्लुतां सर्पसृतां चकार।
दृष्ट्वा तु कार्यं सहसा कृतं तत् सञ्चाल्य शीर्षं गुरुराचचक्षे,
"वृद्धं मया हा, समयो गतो मे, पापः कृपाणोऽद्य ममैष पाणौ
भ्रष्टः स्वलक्ष्यात्कृतवान्नृशंसं निरर्थकं यद् रुधिरस्य पातम्।
चिराय लुप्तो मम नाम वाहौ विश्वास आसीदिह यः पुरा मे।
स्वरक्तदानेन यथाकथञ्चित् प्रक्षालनीयं मम पापमेत-
देषा च लज्जा परिमार्जनीया। अद्य प्रभृत्येव भवत्विदं
मेऽन्तिमं च कृत्यं ननु जीवनस्य।" पाठानशेखस्य बभूव पुत्र-
स्तत्रैव कश्चिद्वयसा नवीनः। गुरुस्तमाहूय समादरेण
निधाय नक्तन्दिवमात्मपार्श्वे पुपोष यत्नान्निजपुत्रकल्पम्।
तेनास्त्रविद्यां सकलं च शास्त्रमध्यापितोऽभूत्स्वयमेव बालः।

सायं प्रभाते प्रतिवासरं च तेनैव सार्धं लघुकौतुकेन
चिक्रीड वृद्धोऽपि स बालकल्पः। तदेव दृष्ट्वा गुरुमभ्युपेत्य
चख्युश्च भक्ताः, "कुरुषे प्रभो किम्? सदात्र शङ्का ननु विद्यते नः।
शार्दूलशावः किमु यत्नपुष्टो विमुञ्चते जातु निजस्वभावम्?
वयःप्रवृद्धस्य न किं भवेयुः खराणि घोरं नखराणि चास्य?"
चख्यौ गुरुस्तान्, "ननु कामये तत्। व्याघ्रस्य शावं यदि नालमस्मि
व्याघ्रं विधातुं—सकला हि शिक्षा निरर्थिका स्यान्मम नाम, वत्साः।"
गोविन्दहस्ते, समये प्रयाति, बालो युवत्वं समवाप नूनम्।
छायेव तिष्ठन् सततानुवर्ती गुरुं सिषेवे सुतवद् युवापि।
तं शासितारं नियतं स मेने स्वप्राणतुल्यं नितरां प्रियं च।
तस्यैव सव्येतरपाणिकल्पः स जागरूकोऽस्य चकार कार्यम्।
य एव गोविन्दसुता बभूवुस्त एव मग्नाः समरे शिखानाम्।
पाठानपुत्रः स युवाधिचक्रे प्रौढस्य शून्यं हृदयं गुरोश्च,
वज्रेण दग्धे वटकोटरान्तर्बहिष्प्रदेशात्पवनेरितं स-
न्निपत्य बीजं धृतवृक्षरूपं यथैकदा वृद्धिमुपेत्य दग्धं
शाखाभिराच्छादयते वटं तम्। नत्वा कदाचिद् गुरुपादपद्मं
पाठानपुत्रो निजगाद, "देव, भवत्पदानुग्रहलाभहेतोर्निष्ठां
गता मे सकलाद्य शिक्षा। भवेदनुज्ञा यदि सैन्यमध्ये
स्वबाहुवीर्योचितकर्मभारं ग्रहीतुमिच्छामि धनार्जनार्थम्।"
तमाचचक्षे गुरुर, "एकशिक्षा स्वपौरुषस्याप्यवशिष्यते ते।"
यावत्पराह्णे तपनोऽपराह्ण दिशि प्रतीच्या गगने रराज
गोविन्द एको बहिरागतः सन् पाठानमाहूय जगाद, "वत्स,
गृहीतशस्त्रो ह्यनुयाहि मां त्वम्।" भक्तांश्च सर्वान् सह गन्तु-
मिच्छूनुवाच, "यूयं भवनं प्रयात।" तूष्णीं प्रविष्टौ गहनं ततस्तौ।
पाषाणखण्डाचितकूलभूमिर्वर्षापधाराशतभिन्नकाया
तस्थौ वहाया घनरक्तवर्णा। विशालसालाः परितो विरेजुः
पङ्क्तिक्रमेणेव जनैः समुप्ताः। तेषामधस्ताच्छिशुपादपाश्च
परस्पराकर्षविकर्षणाभ्यां प्रयेतिरे मुक्तनभोऽशमाप्तुम्।
स्वल्पोदका सा नरजानुदघ्नी प्रोवाह सिन्धुः स्फटिकाच्छकाया
सुरक्तपीताः सिकता विभिद्य। प्राप्येङ्गितं स्वस्य गुरोः स शिष्यः

पारे वितष्ठे स्वगतिं निरुध्य। निर्वाणमाप्ता दिवसस्य शेषा
रक्ताभदीप्तिर्जतुकेव पक्षच्छायां सुदीर्घां गगने वितत्य
ययौ तदोड्डीय दिगन्तराले। आहूय शिष्यं गुरुराचचक्षे,
"निखन्यतां स्थानमिदं समेत्य।" तस्याश्च भूम्या सिकतासु गुप्ता
समुत्थिता कापि शिला सरक्ता। गुरुस्तदोचे, "शृणु, वत्स, गां मे।
अस्यां शिलायामवलोकसे यां प्रगाढवर्णाङ्कितरक्तलेखां
तां विद्धि कण्ठक्षतजं पितुस्ते। ऋणस्य शोधं ह्यविधाय तस्य,
न वापि दत्त्वा समयं च कश्चिन्न्यपातयं तस्य शिरोऽत्र भूमौ।
पाठानबाल, प्रतिशोधकालः पापस्य तस्यायमुपस्थितस्ते।
पितुः सुपुत्रो यदि चासि रे त्वं निष्कास्य कोषादधुनैव खड्गं
निहत्य तं ते पितृघातकं च तस्यैव तप्तैः रुधिरोपहारैः
प्रेतात्मनस्तस्य तृषातुरस्य कुरुष्व सन्तर्पणमेव सद्यः।"
उल्लम्फ्य शार्दूलसमः स वीरो हुङ्कारशब्देन सुरक्तनेत्रो
गुरोः शरीरोपरि सम्पपात। स्थिरं गुरुः स्थाणुरिवावतस्थे
निक्षिप्य दूरे तु तदैव शस्त्रं पाठानपुत्रश्चरणे लुलोठ।
जगाद, "मैवं, गुरुदेव, खेलां काषीर्मया त्वं सह दानवेन।
जानाति धर्मः पितृरक्तपातं विस्मृत्य कालो गमितो मयात्र।
त्वामेव बन्धुं जनकं गुरुं च सदैकसंस्थं भुवने ह्यजानाम्।
स्नेहः स आस्तां हृदि जागरूकः, पञ्चत्वमाप्नोतु चिराय हिंसा।
यच्छाङ्घ्रिरेणुं गुरुदेव, मूर्ध्नि।" एतावदुक्त्वा गहनाद् बहिः स
वेगेन धावन् प्रसभं जगाम गतिं न्यरुन्ध क्षणमेव नासौ,
न चापि पश्चात्स सकृद्ददर्श कपोलबाह्यि-स्रवदश्रुधाराः
चकार सिक्तं गुरुनेत्रयुग्मम्। तदा प्रभृत्येव युवा स वीर-
स्तस्थौ च दूरे सततं सयत्नम्। कल्येऽपि नायाति गुरोः स कक्षं
तत्सुप्तिभङ्गं प्रविधातुमेकः। द्वारे गृहस्यापि न तिष्ठति स्म
कदापि नक्तं विगृहीतशस्त्रः। नद्याश्च पारे गुरुणा सहैको
न याति जातु स्म मृगान्निहन्तुम्। आकारितः सन् गुरुणा विविक्तं
ददाति न स्म प्रतिवाचमस्मै। पाठानमाहूय गुरुः कदाचि-
त्प्रचक्रमेऽसौ चतुरङ्गखेलाम्। तस्यां क्रियायां सुनिविष्टचित्तो
वेलावसानं न विवेद कोऽपि। जेजीयमानो गुरुणा च तत्र

संक्षुब्ध आसीद् युवकः प्रकामम्। क्रमेण सन्ध्या समुपस्थिताभूत्
कठोरभूतां रजनीं विलोक्य गृहं प्रयाता अपरे जनाश्च ।
पाठानपुत्रः फलबद्धदृष्टिर्व्यचिन्तयत् सारिविचालनानि ।
क्षिप्त्वैकसारिं सहसाजघान रोषात्तदीयं गुरुरुत्तमाङ्गम् ।
तमाचचक्षे च समुच्चहास्यै-"यः पुत्रपाशो बलवीर्यहीनः
क्रीडां विधत्ते पितृघातकेन जयः कदा तस्य भवेद्धरण्याम् ?"
मुहूर्तमध्ये स तडिल्लताभां निष्कास्य कोपाच्छुरिकां सुतीक्ष्णा-
मामूलमेतां गुरुवत्समध्ये पाठानपुत्रो निचखान वेगात् ।
हसन् गुरुस्तं निजगाद सद्य "एतावतो वै समयात्परं ते
जातोऽद्य बोधः कथमत्र लभ्यः कृतप्रमादप्रतिशोध एव ।
एषान्तिमा मे, शृणु वत्स, शिक्षा त्वय्यन्तिमैषा भवतान्ममाशीः ।"

---

# विष्णुभक्तोऽम्बरीषः

[ वे० वेङ्कटरामशर्मा विद्याभूषणः, अनन्तशयनम् ]

पुरा भानुकुलाब्धिकौस्तुभमणि र्नाभागभाग्योदयोऽम्बरीष इति विश्रुतः कश्चन महीपतिरासीत्, योऽसुरान् निर्जित्य सुनासीरं निरुपद्रवं स्वस्थं चकार। सोऽयं पुण्यश्लोको नृपतिः सनातने भगवति वासुदेवे तद्भक्तेषु च साधुष्वतीव भक्तिमानभूत्। सागरमेखलां महीं प्रीत्या नीत्या च पालयन् स राजा देवाङ्गनागीतयशःकलापः पल्लवाङ्गीभि र्निजवल्लभाभिः कल्यैरमात्यैश्च परिवृतोऽव्ययां श्रियमतुलं विभवं चानुभवन् ससुखं जीवितमयापयत् ।

अथ वसन्तकालः समागतोऽभूत्। नगरोपान्तवर्त्ति काननकुलं प्रकृतिसौन्दर्यतरङ्गितं व्यराजत। मधुपरवशालि मल्लिकामृदुमुकुलं मदनजयशङ्खवत् कामिजनानां मनो विकारयन्नशोभत। रजनीमुखं चुम्बन्निन्दुरतिकुतुकीव व्यलसत्। मृदुलैश्चारुकिसलयैर्लसदुपान्तं चन्द्रमणिशयनमतीव कान्तमवर्त्तत। चूताङ्कुरास्वादकषायकण्ठः पुंस्कोकिलो मधुरमकूजत्। मल्लिकाक्षावलिः वल्लभाभिः साकं कल्हारकानने व्यलसत्। कमलाकरः काननमध्ये विमलमुकुर इव चार्वकासत। चूतेषु चूतशरनामलिपय इव मधुपपोता न्यवसन्, कलकण्ठगीतं कामदेवस्य चापगुणकलशिञ्जितमिवाश्रूयत।

एकस्मिन् वासन्तिके दिने स नृपतिः कनकरुचिरुचिराङ्गीभिः प्रेयसीभिः साकं

विविधक्रीडाविनोदनिदानं केलीवनं गतः। वनस्य रामणीयकं पश्यन् विकारतरलित-हृदयस्तत्रत्यं मञ्जुतरकुञ्जमञ्जसा समासाद्य ताभिः सहात्मानं विनोदयन् कियन्तंचन कालमतिष्ठत्।

ततो नातिदूरवर्त्तिनं त्यक्तवैरैर्मृगैर्निषेव्यमाणं नीरन्ध्रैः शाखिभिर्निह्नुतभानुतापं शान्तं तपस्विभिर्जुष्टं संयमिनो वसिष्ठस्य गुरोराश्रमं सप्रश्रयं प्रपेदे। प्रपद्य च यथार्हमर्हणां विधाय प्रस्तुतस्तुति वसिष्ठमृषिं ववन्दे।

"पद्मजनन्दन ब्रह्मध्याननिरत महामुने गुरो! कच्चित्तपांसि ते निर्विघ्नानि? तव हि पादपद्मं पद्मबन्धुवंश्यानामस्माकं दैवतम्। भूरिपुण्यवसतिस्त्वं पुरोहितोऽस्माकम्, सर्वासामापदां प्रतिहर्ता चासि, तव प्रसादादस्माभिर्वसुधातलेऽतिदुर्लभं किम्? तव ब्रह्मवर्चसमेवास्माकं सर्वसम्पदां हेतुः। तवैव हि कृपया भागधेयनिलयो भगीरथ-भूपालतिलकस्तपस्यया नाकवाहिनीं नरलोकमानयत्। महामुने! 'इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः।' पन्नगेन्द्रशयनो मुकुन्दो मयि यथा प्रसन्नो भवेत् तदर्थं मया कर्त्तव्यं किमित्यनुगृहाण" इत्येवं राज्ञा सविनयमुपश्लोकितो हृष्टमानसो गुरुर्वसिष्ठो राजानमनामयं पृच्छन् प्रत्युवाच—"भानुवंशावतंस सत्तम राजन्! शृणु मे भाषितम्। कच्चित् कुशली भवान्? अपि त्वं राज्याङ्गैः सर्वैं नित्यं सूत्थानोऽसि? इक्ष्वाकूणां कुलव्रतं लोकरञ्जनम् अविकलं वर्धते किम्? आदिपुरुषस्य भगवतो विष्णोः प्रसादसिद्ध्यै त्वं सादरं द्वादशीव्रतमाचर, निर्व्याजमाचरितेन तेन त्वयि भगवान् विना सन्देहं प्रसन्न आत्मानमपि दद्यात्" इति।

एवं गुरोर्वसिष्ठस्योपदेशं निशम्य नितरां प्रीतो भक्तो राजा स्वीयं वेश्म प्रतिन्यवर्त्तत। तस्य च भगवति विष्णौ भक्तिर्ववृधे। स भगवत्यधोक्षजे एकान्तभक्तिभावेन 'गृहेषु दारेषु सुतेषु बन्धुषु द्विपोत्तमस्यन्दनवाजिपत्तिषु अक्षय्यरत्नाभरणायुधादिषु अनन्त-कोशेषु' क्रमेणासक्तिरहितः समजायत। तस्य मनः कृष्णपदारविन्दध्याननिरतं, वचो वैकुण्ठगुणानुवर्णनपरं, करतलं हरेर्मन्दिरमार्जनादिपरिचरणनिपुणं, श्रोत्रमच्युतसत्कथा-श्रवणाधीनं, दृग् विष्णुविग्रहालयादिदर्शनाधीना, शिरो हृषीकेशपदाभिवन्दनव्यग्रं चाभवत्। अथ जातुचित् राजभवनमुपागतं सुमन्त्रं सचिवमपि नृपतिरम्बरीष एवमुपादिशत्—"मन्त्रिवर सुमन्त्र! वचनं मे निशमय। ईशे विमुखमिन्द्रियकुलं क्लेशावहमिति बुध्यस्व, वारिधिमेखलायामस्यां विश्वम्भरायां हरिचरणपरिचरणविमुखः कः? श्रीमन्नारायणस्य पादनलिनभजनं भवजलधितारकमिति गृहाण।" इति।

सुमन्त्र उवाच—"राजन्! अप्रतिमेन तव विक्रमेण त्वय्यनुरक्ताः सर्वा अपि प्रजाः सत्पथपरायणा एव वर्त्तन्ते। घर्मांशौ तपति तमः कथमाविर्भविष्यति, परन्तु पापा

यवना नीचैः कृत्यैर्जल्पितैर्दारुणैर्युद्धोद्यमैश्च परमुन्मदा वर्त्तन्ते। तांश्च समरभुवि निर्जित्य यमभवनं नेतुमुत्सहे" इति।

अथ यवनसङ्घं जिघांसुर्युद्धाय बद्धमतिरम्बरीषो राजा रुषा बभाषे—"मन्त्रिपुङ्गव! नरहतकास्त आहवायागच्छन्तु, कलेवरपोषणाय तैः क्रियमाणं हतमृगशतं पापकृत्यमिदं महितचरितं नैव भवति। तेषां वचस्सु व्यज्यमानमहङ्कारविजृम्भितं रणाङ्गनेऽप्यावश्यकमिति ते विदन्तु नाम। शिततराञ्छरान् धनुष्यायोज्य ते समरमद्य कुर्वन्तु। न वयं कान्दिशीकाः। अनादिनिधनं भगवन्तं वासुदेवं परिहसतः साहसिनस्तान् वासवानुजपरोऽहं शमनगेहं प्रापय्येदानीं निर्वृतो भवामि।" इति। एवं वदन् विशाम्पतिः सद्य एव युद्धसन्नाहाय मन्त्रिवरमादिदेश।

तत एतादृशेन नृपतेरुत्थानेन प्राप्तकर्णज्वरा यवनाः समरायोद्यता मिथो जगदुः—

"गोपुरद्वारे परुषः चापगुणघोषः श्रूयते, वीरपुरुषगर्जनमिलितस्ताडितपटहरवमांसलो गजनिवहबृंहितविवर्धितः अश्वहेषारवमेदुरः, यः संहाररुद्राट्टहासातिशायी कालमेघकोलाहलसन्निभश्चास्मान् तर्जयति।" इति।

"आहवायास्माभिः सार्धं सकुतुकं समागता देहिनस्ते नियतमस्तवीर्या नश्येयुः। बहुपञ्चाननकुलसञ्चारिणि विपिने करिणां शौर्यमवन्ध्यं भवेत् किम्?"

"अत्रागत्य विगीतैः कृत्यैरस्मान् क्षिपन्तः रणोन्मुक्ता महाकायाः कुमर्त्या एतेऽवश्यं प्रतिरोध्या एव। सत्यस्वरूपे भगवति भक्तिरहितान् भुजमदोद्धतानेतान् यवनान् दीर्घनिद्रां निनीषवो वयं दृढं क्षुरप्रशरप्रहारप्रमथितान् कुर्मः।"

"यदि दृश्योऽयं प्रपञ्चो नश्वरस्तर्हि नदृश्य ईश्वरः कथं विश्वासपात्रं भवेत्।"

"दुष्टेषु युष्मासु शिष्टवचनमरण्यरुदितमेव। धृष्टा यूयं समरधरणिवीथ्यामागच्छत।"

"युद्धभूमावस्माभिः सह युध्यमाना यूयं सपदि भूतधात्र्यां नाममात्रावशेषा भवेतेति विदाङ्कुरुत।"

"यूयं मदीयचण्डबाहुदण्डकलितमण्डलाग्रपतनदलितमुण्डा इदानीमवनिमण्डले पतिष्यथ नूनम्।"

"सशक्रं विबुधचक्रमेवागच्छतु। न वयं कथमपि प्रतिरोध्या भवामः।"

एवं परुषोक्तिप्रत्युक्तिविवृद्धरोषाणां यवनानां राजपक्षीयाणां च मिथस्तुमुलं युद्धमभवत्, ततश्च भुजवीर्यशाली अम्बरीषनृपतिः समिति कृपारहितं यवनकुलं निस्त्रिंशत्रुटितशीर्षं परेतभर्तुर्वशं विधाय गलद्रुधिरैः पिपासितानां भूतानां बलिं चकार।

यवनान् निहत्यातुलभुजसारः परमभागवतोऽवनिपतिरमलमतिरम्बरीषो मधुवनमगमत्। नानातरुप्रसवलीनालिनिवहगानातिमोहने निरवधिकसाले सज्जीकृतपर्णशाले तस्मिन् मधुवने कुहचित् कुसुमसुरभिणि कुटीरे सकुतुकं निविष्टः, भगवदाराधनमेव परमं जीवनफलमिति मन्वानः, स महीपतिर्नवाम्बुदश्यामलकोमलाङ्गमुत्तमं पुमांसमेकाग्रमानसो ध्यायन्नास्त। तस्य च चित्तं निरतिशयानन्दे मग्नमभूत्। आनन्दबाष्पस्रावि तदाननममृतनिष्यन्दिनश्चन्द्रस्य साम्यमुवाह। पुलकभरघनकवचमिलिततनुरवनिपतितिलकोऽमितसुखं विष्णावरमत।

अथ राजा वासतेये तस्मिन् मधुवने विष्णुमाराधयिषुः सांवत्सरं द्वादशीव्रतं दधार। व्रतावसाने त्रिरात्रमुपोषितः सन् द्वादशीतिथावभिषेकार्चादिभिरनन्यमनस्को विष्णुमपूजयत्। अनन्तरं भूसुरेभ्योऽसंख्यं गोदानमकरोत्। तांश्च भोजयित्वा स्वयं पारणां कर्तुं यावदुपाक्रमत तावद् दुर्वासाः सुलभकोपो महर्षी राज्ञो विष्णुभक्तिं परीक्षितुकामो मधुवनमाससाद, यो भस्मपरागपाण्डरतनुरेणाजिनं बिभ्राणो मौञ्जीमाकलयन्नुन्नतजटाभारो हिरण्यद्युतिः साक्षादपरस्त्र्यक्ष इवाशोभत। सम्प्राप्तं च तापसं तं क्षितिपतिः प्रत्युत्थानेन प्रणिपातेन स्वागतवचनैश्च सत्कृत्यानर्च। ततो हृष्टचित्तो व्याचष्ट—

"अनन्तकल्याणगुणनिलय भगवन्! नमस्ते। पाहि माम्। कुरु मे कुशलम्, भगवत्तत्त्ववेदिनामेव हि कैवल्यसौख्यं विध्यति। देव! तवैव हि मोहविलसितमिदं जगत्। भक्तकामदस्त्वं नाममात्रं जपतामपि परमं क्षेमं विदधासि। परमपदप्राप्त्यै त्वत्पदसेवापरमाय प्रसीद।

अत्रिनन्दन महामुने! अत्राहं तव दर्शनात् त्रिलोक्यामस्यामतीव पवित्रः संवृत्तोऽस्मि। मङ्गलाङ्गानां मुनिपुङ्गवानां सङ्गो गाङ्गं वारीव पापभङ्गकरो भवति। दासेन मया किं करणीयमित्यादिश्यताम्। सज्जोऽस्मि कृत्यनिर्वहणाय। द्वादश्यामस्यां तिथौ सादरं भवदागमनेनाहं निकामं सन्तुष्टो नितरामनुगृहीतोऽस्मि। पारणां कर्तुं तव पादयुगं प्रणम्य प्रार्थये। कारुण्यनिधे कामकल्पतरो भगवन्! कालिन्दीतटिन्यां काल्यं कर्म निर्वर्त्य विना समयातिक्रमं पारणाया आगम्यताम्" इति।

इत्थं नृपतेर्वचनमुपश्रुत्य प्रीतमानसो मुनिर्दुर्वासा राजानमेवं प्रतिनन्द्य प्राशंसत्—"दिनमणिकुलदीप राजेन्द्र! श्रूयतां मदीयं वचनम्। मनुकुलतिलकैः पूर्वैः राजभिः कृतस्य महितपुण्यस्य फलायितं मन्ये। अखिलमुर्वीतलं भरता भवता निजभाराद् विश्रामितः श्रीमन्नारायणोऽमलेऽतिमृदुलेऽहिशयनतले सानन्दं रमया समं विहरति। मखेषु भवता हुतं हविरास्वाद्याधुना पुष्टकायः पुरन्दरः ससुखं दिवमध्यास्ते। धात्री-

मण्डलेऽस्मिन् भवत्सदृशो वीरः पार्थिवः कोऽन्योऽस्ति ? नियमकृत्यमखिलं कृत्वाहं पारणाया आगच्छामि।" इति।

अथ माध्यन्दिनविधिं विधातुं यमुनाकूलं गतो मुनिः यामुनमम्बु पुण्यं व्यगाहत। ततो ब्रह्मध्याननिरतः स्वच्छन्दं चिरयति स्म, अम्बरीषश्च राजा मुहूर्ताधेन समाप्तिमत्यां द्वादश्यामेव नियमेन पारणां कर्त्तुकामो मुनेरागमनं प्रतीक्षमाणश्चिन्ताकुल एकान्ते न्यगादीत्—"अहो किं करवाणि ? भोजनायामन्त्रितो मुनिर्नैतावत्पर्यन्तमागतः। तत्र च किं कारणं भवेत्, मुहूर्त्तार्धेऽतिक्रान्ते द्वादशी तिथिर्व्यतीता भवेत्। द्वादश्यां तिथौ पारणाविध्यननुष्ठानं व्रतभङ्गकरं हि भवति। तापसातिक्रमणं च परं पापकरमेव। शौरे! पाहि माम्, तव चरणयुगलादृतेऽवलम्बभूतं किमपि मम नास्ति। कृष्ण! ईदृशेषु सङ्कटेषु सन्तप्तानां त्वच्चरणयुगलादपरं शरणं नैव लोके विलोके।" इति।

एवं कर्त्तव्ये विषये चिन्ताशबलितमतिः स राजाम्बरीषस्तावत् सभ्यैर्भासुरभूसुरैरभ्येत्य धर्म्यां वाचं जगदे—"राजन्! व्याकुलो मा भूः, प्रकाशभासुरं तवाननं विवर्णं विवशं च दृश्यते। अत्रिनन्दनोऽयं दुर्वासा गर्विष्ठः सर्वनिन्दकश्च, यः कोपेन सङ्क्रन्दनमपि शशाप। त्वं किमर्थं साहसकर्मशीलं तं भोजनायाहूतवानसि ? यद्यन्यस्तापस आमन्त्रितो भवेत् तर्हीदृशः क्लेशो नैव जायेत। अयं हि परेषां दुःखं नैव जानाति। तस्मात् तिथ्यतिक्रमेण व्रतभ्रंशो यथा न भवेत् तथा कश्चनोपायोऽनुष्ठीयताम्। केवलमम्भसैवेदानीं पारणां कुरु समयानतिक्रमेण, तेन च कृतेन द्वादशीव्रतस्य दुर्वाससः आमन्त्रणस्य वा भङ्गो न जायेत। तदिदमनुष्ठानं नैव गर्हितं परमभ्यर्हितमेव।" इति।

बहुश्रुतानां विप्राणामुपदेशानुसारं राजा अम्बरीषो जलमात्रेण पारणामनुष्ठाय महर्षेरागमनं प्रतीक्षमाणस्तस्थौ। अथ स मुनि नित्यकर्मादिकं समाप्य यमुनायाः प्रत्यागत्य ज्ञानचक्षुषा राज्ञानुष्ठितां पारणां विज्ञाय क्रोधान्धो राजानमम्बरीषमभ्युपेत्य साधिक्षेपमवोचत्—

"पार्थिवहतक! त्वया कृतमिदानीमतीव विचित्रमेव। कुटिलमते! अहमत्रिपुत्रो मुनिरिति विदाङ्कुरु। दुरात्मन्! श्रियोन्मत्तो नृशंसो विष्णुभक्तम्मन्यश्च त्वमतिथिं मामभ्यागतमातिथ्येन निमन्त्र्य पुनरदत्त्वा स्वयं भुक्तवानसि। अस्य धर्मव्यतिक्रमस्य नचिरेणानुरूपं फलं प्राप्स्यसि। ईदृशं विप्रावहेलनकृत्यं भगवतो विष्णोः सम्मतं किम्! अप्रतिहतेन मदेन मत्ताः पुरुषाः क्षिप्रं दण्ड्या एव। संहाररुद्रस्य भाललोचने हुताशविलासवद् विलासिनं करालकलेवरं कृत्याकालानलमहं सृजामि।" इति।

एवमुक्त्वा मुनिर्दुर्वासा रोषात् सद्य एव विकटतरां जटां भूमिपृष्ठेऽताडयत्। ततश्च कराला कृत्यावाधोदतिष्ठत्, या पदयुगलभराज् जगत् कम्पयन्ती, उन्नम्राताम्रकेशैर्नभसि

घनघटां घट्टयन्ती, तीव्रं खड्गं वहन्ती, नदन्ती प्रथिमानं दधानेन जघनेन घनेन भायन्ती च ददृशे। सा चोत्तिष्ठन्त्येव मुनेः सविधमेत्यैवं बभाषे—"भगवन् मुनीश्वर! किङ्करस्तवाहमधुना किं करवै। यदि मयि तव कृपा स्यात् तदाहं कमलासनमप्याहरामि। रणचतुरानमरानपि बलिष्ठान् निशितहेतिपातविपन्नान् पुरः पातयामि। पर्वतान् देवदन्तिनस्तरुषण्डानि शत्रुकुलानि च पिष्टपेषं पिनष्मि।" इति।

अथैवमुत्थितां कृत्यां किङ्करां मुनिरादिदेश—"कृत्ये! त्वं सहसा भुजमहसा प्रधनसीम्नि अहितं निहतं विधेहि। याहि। करधृतकरवाले कराले कृत्ये! रणाय गच्छ" इति।

ततो मुनिनिर्देशमनुसृत्य युद्धाय सज्जा नरवरं सम्प्राप्ता सा कपालमालभारिग्रीवाग्रा कुचगिरिशृङ्गभग्नमेघा विकटगिरिगर्तनेत्रा प्रथमदर्शने भीषणैवावर्त्तत। अथ सा क्षितिपतिमेवं चाटूक्त्याचचक्षे—"राजन्! अत्रिनन्दनेन तापसेन सृष्टा कृत्या नाम बाधाहमस्मि। रूक्षाणां विबुधविपक्षाणां गलवक्षोविक्षोदनदक्षैषाहमस्मि। शतधारैर्मम हेतिपातैर्युधि प्रेतनाथातिथिर्भविष्यसि। अहं चण्डाट्टहासेन जगदण्डकटाहं नादखण्डितं कुर्याम्। वृथा विकत्थनेनालम्।"

एवंवादिनी सा यावद् राजानमभिगच्छति तावच्छ्रीमन्नारायणैकतानो राजा धैर्यमवलम्ब्य पदात् पदमपि न चचाल। अथ भक्तवत्सलो राज्ञोऽचञ्चलेन भक्त्यतिशयेनात्यन्तं प्रीतो हरिर्भगवान् राजानमम्बरीषं रिरक्षिषन् दैत्यचमूचक्रच्छिदालम्पटं ज्योतिश्छटाडम्बरं प्रत्यनीकभयावहं सहस्रारं चक्रं प्राहिणोत्। तदिदं चक्रमट्टहासमुखरां दुर्वाससा निर्मितां बाधां वबाधेतराम्। ततश्च मूर्तिमद् भूत्वा तच्चक्रमेवं वक्तुं प्राक्रमत—"मामविगणय्य घोरवीर्यमदेन विष्णुभक्तानां विप्रियमाचरितुं झटित्यत्रागता केयम्? सेयं प्रलयदिनकरनिकररुचौ वरहुताशने विलयमुपैष्यति नूनम्। इदं हि पुण्डरीकाक्षस्य विष्णोर्भुजदण्डमण्डनं खण्डपरशुविधातृमुखसुरमण्डलेन निषेवितं बिसकाण्डखण्डवत् कण्ठं खण्डयितुं शक्तमायुधभूतं सुदर्शनमिति बुध्यताम्।"

अथ सुदर्शनचक्रं दारुणे रणे कृत्यां तां कृतान्तस्य गेहमनयत्। पश्चाद् दुर्वाससं मुनिमन्वधावत्। स्वीयं प्रयत्नमवकेशिनं चक्रायुधस्यानुगमनं च समुद्वीक्ष्य भयोत्कम्पिताङ्गो मुनीन्द्रो निजक्षेमकाङ्क्षी त्रिष्वपि लोकेषु बभ्राम, पुनरपि दुष्प्रसहस्य विष्णुचक्रस्यानुधावनं पश्यन्, अनाथोऽतिभीतो मुनिर्जवाद् ब्रह्मलोकं जगाहे। गत्वा च ब्रह्माणं देवं स्तुवन् शरणं प्राप्त एवमस्तावीत्—"लोकेश! कृपालय! विभो! इन्द्रादिदेवविनुत! पादपतितं मां पालय। विधे! सुदर्शनचक्रस्यैवाग्निसदृशेन दुर्वारतेजसा नितरां दूयमानोऽस्मि" इति।

ब्रह्मदेवश्च सनातनं श्रीमन्नारायणं सेवितुं दुर्वाससं मुनिं प्राणोदयत्, एवमबोधयच्च—"मुनीन्द्र ! शरणागतार्तजनभरणनिपुणं श्रीमन्नारायणं शरणं भज। परमकल्याणमूर्तिर्भगवान् नारायणश्चारुचिल्ली[1]लताचालनेनैव केवलं समस्तचराचरं रक्षति। सुदर्शनाख्यं चक्रमिदं श्रीमन्नारायणस्य पाणौ धृतमस्त्रम्। तव रक्षायै तदुपशमयितुं स एव भगवान् भजनीयः" इति।

एवं विरिञ्चेन प्रत्याख्यातो विष्णुचक्रोपतापितो मुनिर्दुर्वासा अनन्तरं कलायकुसुमोपमं गलं दधानं निजवामभागधृतसर्वमङ्गलं जगतां क्षेमङ्करं शङ्करं शशिखण्डमौलिं शरणं जगाम। दुर्वारसुदर्शनदूयमानमानसम् आत्मनो रक्षणाय प्रार्थयामास पार्वतीनाथं शम्भुम्।

"सत्यस्वरूपिणो भगवतो मायाशक्तीर्विज्ञातुं सिद्धा वयमपि मुग्धाः स्मः। त्वं कञ्जनाभं कलयाञ्जनाभम्। स एवाञ्जसा तव भयभञ्जनचतुरः। विष्णुकरतलरोचिष्णु सुदर्शनं विष्णुभक्तवैरसहिष्णु न भवति। लक्ष्मीकान्तं विना तव सन्तापं हर्तुं न कोऽप्यन्यः प्रभवति। केवलानन्दरूपी केशवः निजपदसेवकानामधीनः।" इत्येवं शम्भोर्वचनमुपश्रुत्य स मुनिः वैकुण्ठाख्यं विष्णुलोकमगमत्। गत्वा च भगवन्तं हरिं शरणं प्राप्तवान्।

. "करुणानिधे कमलनाभ ! सपदि शरणागतं मां पाहि। अज्ञाननिमित्तं मया कृतमपराधं क्षमस्व। विभो ! मयि करुणां वितर, तव हि नामैकवारमपि जपन् नारकोऽपि पुरुषः धन्यतामापद्यत इत्येतदखिलविदितम्। तव हि पदनलिननिस्सृतजलेन नीलकण्ठोऽपि निर्मलोऽभवत्।" इत्येवं दुर्वाससाभिष्टुतः श्रीमन्नारायण एवमुवाच— "मुने ! अहमस्मि भक्तपराधीनः। भक्तविरोधं कथमहं कुर्याम् ? मत्परायणान् मत्परमान् मत्कर्मकृतो भृत्यान् कथमहं त्यजेयम् ? साधुशीलैः साकं विरोध आधिहेतुर्भवतीति बुध्यस्व। तस्मात् त्वं सद्य एव गत्वा राजानमम्बरीषं भक्ताग्रगण्यं दर्शनपथे सम्भावय।

"ब्रह्मंस्तद् गच्छ भद्रं ते नाभागतनयं नृपम्।
क्षमापय महाभागं ततः शान्तिर्भविष्यति ॥" इति।

एवमुक्त्वा हरिणा लोकत्रयैकगुरुणा विसृष्टः शोकत्रपापरवशश्चक्रातुरो मुनिवरः करुणानिधिमम्बरीषं शरणं प्रपेदे। एवमस्तौच्च—दीनबन्धो महाराज ! जय जय। मयि कृपां कुरु। कृपयापराधं सहित्वा तापं मे शमय। महापुरुषाणां केवलमाश्रयभावेन कोपशमनं भवति हि।" इति।

---

१ चिल्लीलता भ्रूलता।

एवं मुनिवचनमाकर्ण्यातीव कृपापरवशो विलज्जितश्च राजाम्बरीषो मुनिपीडापरिहाराय सुदर्शनं चक्रमेवं प्रार्थयामास—"भोश्चक्र ! उत्तमपुरुषस्य हस्ततलमुक्तो भवान् रणशिरसि विलसति। दुग्धाब्धिमध्ये मुग्धाहिवरशयनमध्यासितः पद्मनाभो बद्धादरं यदि मयि प्रीतः स्याद् अत्रितनयोऽयं मुनिस्तापमुक्तो भवतात्।" इति।

अनन्तरं सुदर्शनं चक्रमशाम्यत्। सुदर्शनपीडाया मोचितो मुनिर्दुर्वासा अतीव सन्तुष्टोऽभूत्। अम्बरीषश्च मुनिं चरणावुपसङ्गृह्य प्रसाद्य समभोजयत्। मुनिश्च विष्णुभक्तानां पारम्यं प्रशंसन् राजानमम्बरीषमाशीर्भिरेधयामास। ब्रह्मलोकं जगाम च।

———

# प्रत्ययाद्यनुबन्धविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

[ पूर्वतोऽनुवर्तते ]

आमु—किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे [ ५।४।११ ] इति सूत्र आमु दृश्यते। तत्र उकारो मकारपरित्राणार्थः।

*मकारस्यौष्ठ्यत्वादोष्ठ्य उकार आसञ्जितः।*

आरक् ( तद्धितः )। चटकाया ऐरक्। गोधाया ढ्रक्। आरगुदीचाम् [ ४।१।१२८-१३० ] इति चतुर्थेऽध्याये सूत्रक्रमः। एषु च प्रत्ययगतः ककारः 'क्ङिति च' इत्यादेरचो वृद्ध्यर्थः, कित इत्यन्तोदात्तार्थश्च।

*ककारस्तावद् व्यञ्जनानामादौ वर्तते, वृद्धिश्च पाणिनितन्त्रे प्रथमा संज्ञा, अत एवादेरचो वृद्ध्यर्थः ककारोऽनुबन्ध आसज्यते। किञ्च कप्रत्ययः प्रातिपदिकस्यान्त उपलभ्यते, अतोऽन्तोदात्तत्वार्थः ककार उपयुज्यते। अस्मादेव कारणात् ककारेणागमस्यान्ते स्थितिः सूच्यते।*

आल्—सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः [ ७।१।३९ ] इत्यत्रालो लकारः लिति [ ६।१।१९३ ] इति सूत्रेण प्रत्ययात् पूर्वस्योदात्तार्थः।

*भौवादिकानां धातूनां शपः पित्त्वात्सार्वधातुकानां चानुदात्तत्वात् पूर्वस्योदात्तत्वमुपलभ्यते। अत एव प्रत्ययात्पूर्वस्योदात्तताख्यापनाय लकारोऽनुबन्ध आसज्यते।*

आलच्— [ वाचो ग्मिनिः । ] आलजाटचौ बहुभाषिणि [ ५।२।१२५ ] इति सूत्र आलच आटचश्च चकारोऽन्तोदात्तार्थः ।

आलुच्—स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् [ ३।२।१५८ ] इत्यत्रालुचश्चकारोऽन्तोदात्तार्थः ।

## इ

इक्—प्रत्याहारः ।

ठस्येकः [ ७।३।५० ] इति सूत्रे चकारो नानुबन्धः ।

इच्—प्रत्याहारः ।

इच्—समासान्तः । इच् कर्मव्यतिहारे [ ५।४।१२७ ] इत्यादिष्विचश्चकारोऽन्तोदात्तार्थः ।

इञ् (कृत्) । विभाषाख्यानपरिप्रश्नयोरिञ् च [ ३।३।११० ] इत्यत्रेञो ञकारोन्त्यस्याच उपधाया अकारस्य च अचो ञ्णिति । अत उपधायाः [ ७।२।११५-११६ ] इति वृद्ध्यर्थः, ञ्नित्यादिर्नित्यमित्याद्युदात्तार्थः ।

प्राञ्च शब्दे ञकारो वर्तते, अत एव ञकारेणाद्युदात्तत्वं सूच्यते ।

इञ् ( तद्धितः ) । अत इञ् [ ४।१।९५ ] इत्यादिषु ञकारः तद्धितेषु तद्धितेष्वचामादेः [ ७।२।११७ ] इत्यादेरचो वृद्ध्यर्थः, पूर्ववत्स्वरार्थश्च ।

इट् ( विभक्तिः ) । उत्तमपुरुषैकवचनविभक्तेरिटष्टकार इटोऽत् [ ३।४।१०६ ] इति विशेषणार्थः ।

इट् ( आगमः ) । आर्धधातुकस्येड्वलादेः [ ७।२।३५ ] वतोरिड् वा [ ५।१।२३ ] रुदादिभ्यः सार्वधातुके [ ७।२।७६ ] इत्यादिषु टकार आदिसन्निवेशसूचनार्थः ।

इण्—प्रत्याहारः । अकारवर्जं स्वरा अन्तस्था हकारश्च ।

इत्—ह्रस्व इकारः । तपरस्तत्कालस्य [ १।१।७० ] ।

इतच् । तदस्य सञ्जातं तारकादिभ्य इतच् [ ५।२।३६ ] इतीतचश्चकारोऽन्तोदात्तार्थः ।

इथुक् । वतोरिथुक् [ ५।२।५३ ] इतीथुकः ककारोऽन्ते सन्निवेशसूचनार्थः ।

इन् । स्तम्बशकृतोरिन् [ ३।२।२४ ] इत्यत्रेनो नकार आद्युदात्तार्थः ।

निपाता आद्युदात्ता इति नकार आद्युदात्त एव । अत एव नकारेणाद्युदात्तत्वं सूच्यते । किञ्च पुरस्तादुपचारस्तस्य

यः प्रतिषेधतीति निषेधार्थकस्य नशब्दस्यादौ प्रयोगादाद्युदात्तार्थो नकारो योज्यते।

इनङ्। कल्याण्यादीनामिनङ् [ ४।१।१२६ ] इति सूत्रेण कल्याणीप्रभृतीनां शब्दानां ढक्-प्रत्ययस्य सन्नियोगेनेनङादेशो विहितः। इनङो ङकारो ङिच्च [ १।१।५३ ] इत्यन्तादेशार्थः।

ङकारस्य प्रथमवर्गस्यान्तेऽवस्थानात्, प्रथमोपस्थितस्य च परित्यागे कारणाभावात्, ङकारेणान्त्यादेशः सूच्यते।

इनच् ( तद्धितः )। इनच्पिटच् चिक चि च [ ५।२।३३ ] इति सूत्रे निशब्दान्नासिकाया नतेऽभिधेये इनच् पिटच् इत्येतौ प्रत्ययौ विहितौ, तत्सन्नियोगेन च निशब्दस्य यथासंख्यं चिक चि इत्येतावादेशौ। अत्र चकारोऽन्तोदात्तार्थः।

इनिः (कृत्)। प्रजोरिनिः। जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च [३।२।१५६-७] कर्मणीनि विक्रियः [ ३।२।९३ ]. इति सूत्रैः कृत्प्रत्ययो विहितः। अत इनिठनौ [ ५।२।११५ ] प्रभृतिभिस्तद्धित इनिर्विहितः। इनेरिकारो नकारपरित्राणार्थः।

पूर्वाचार्य इर्वर्तत इति इनिविनिप्रभृतिष्वनुबन्ध इकारः।

इनुण्—अभिविधौ भाव इनुण् [ ३।३।४४ ] इति सूत्रेणेनुण्-प्रत्ययो विहितः। तत्र णकार तद्धितेष्वचामादेः [ ७।२।११७ ] इत्यादिवृद्ध्यर्थः।

णकारस्य मूर्धन्यत्वादादिना सम्बन्धः स च पञ्चदशखण्डस्य २९८ पृष्ठे प्रतिपादितः।

---

## शारदा-प्रशस्तिः

[ स्वर्गत-गजानन-लक्ष्मण-रेगे-रचिता ]

अचिरादेव समाप्तोऽयं वर्षाकालः। प्रवृत्ता शरत्। रथ्याश्चत्वराणि च पङ्कविनिर्मुक्तानि भवन्ति। इन्द्रः पर्जन्यं स्थगयति। वरुणोऽप्युपशाम्यति। वृद्धस्त्री तरुणबालकाश्छत्राणि गृहे निधाय रथ्यासु सानन्दं स्वच्छन्दं श्रीदेव्याः कालिकाया दर्शनाय सायंकाले परिभ्रमन्ति। वकुलादिसुगन्धीनि पुष्पाणि सुदूरं परिमलेन युवयुवतीनां मनांस्यावर्जयन्ति। अङ्गानि सुललितं स्पर्शयन्ति। तेषां चेतांसि परस्परानुकूलानि कुर्वन्ति।

समयेऽस्मिन् वर्तते सर्वत्रानन्दातिशयः। वर्तते सुकालोऽयं द्वादशमासेषु। गोधूमतण्डुलादीनां राशिसंग्रहः प्राङ्गणे वर्तते। कृषीवला विपुलधान्यसंग्रहं दृष्ट्वा स्त्रीपुत्रैः सह मोदन्ते सुखातिशयेन।

अम्बरं रिक्तमेघं भवति। सृष्टिः प्रसन्नतां व्रजति। तरुणाः परदेशगमनोत्सुका द्रव्यसम्पादनार्थं समुद्रप्रवासमङ्गीकुर्वन्ति। सञ्चरति सर्वत्रोत्साहः। मनुष्या उत्सवप्रियाः।

कोंकणप्रान्ते पर्जन्यबाहुल्ये सति भाद्रपदारम्भे तण्डुलानामुपस्थितिर्दृश्यते। तत्र प्रथमो महोत्सवो गणेशपूजनं महता समारम्भेण भवति। तदनन्तरं नवरात्रे सरस्वत्याः पूजनं सम्पद्यते। लक्ष्मीसरस्वत्योरेकसंश्रयो दुर्लभः। तदपि सरस्वती-महालक्ष्म्योरेकत्र विधीयते पूजनं दुर्गाष्टम्यामिति विचारणीयम्।

आश्विनमासस्य प्रथमनक्षत्रे घटस्थापना त्रिकालपूजा सप्तशतीजपो नन्दादीपः सुवासिनीभोजनं होम इत्यादिनैकविधैः कार्यक्रमैः सानन्दं सोत्साहमेव महोत्सवो महता समारोहेण जनसंमर्दैः समाप्यते भक्तिभावपुरस्सरम्। अनन्तरशुक्लपञ्चम्यामुपाङ्ग-ललितदेवतायाः पूजनं संपद्यते। देव्युपासकैः रथ्योत्फुल्ला दृश्यते। शरदृता अयं सारपूर्णो मनोहारी भव्यः कार्यक्रमः प्रसन्नचेतसा जनसमूहेन सम्पादयितुं शक्यः।

शरदृतोरधिष्ठात्र्या देवतायाः प्रीत्यर्थमावाहनं पूजनं चास्मिन् समये विधीयेते।

अस्मिन्नेव काले निम्नगानिर्झरस्य जलं तीव्रं वेगवत् प्रपातादुत्तुङ्गगिरिशिखराद्वि-पतत् पङ्कविरहितं भूत्वाऽधो निस्तब्धं प्रवहत् संजातो जलौघः सरस्वतीनाम्ना प्रख्यातः। अच्छोदकेन प्रसन्नतां धारयन्ती नदी निर्भरं स्वच्छन्दं मध्येभारतं प्रवहन्ती प्रभास-क्षेत्रस्य सविधे पश्चिमसमुद्रमुपतिष्ठते। अत एव नदी सरस्वतीति नाम्ना प्रख्यातिं गता। ऋग्वेद इमां सरस्वतीमुद्दिश्य सिन्धोर्नद्याः प्रशस्तिः कृता स्थाने स्थाने इति सन्दरीदृश्यते।

आश्विनमासे शुक्लपक्षे मूलनक्षत्रे सरस्वत्या आवाहनं विधीयते। पूर्वाषाढयुते सूर्ये तस्याः पूजनं क्रियते। उत्तराषाढे आहुती दत्त्वा श्रवणनक्षत्रे च तस्याः पूजनं कृत्वा तस्मिन्नेव दिने तस्या विसर्जनं सम्पाद्यते। बहुधा मूलनक्षत्रमशुभमिति मन्यते जनैः। मूलनक्षत्रे जातस्य बालकस्य तथा गोवत्सस्य जन्माशुभदायीति लोकैर्मन्यते। सरस्वत्या आगमप्रीत्यर्थं मूलनक्षत्रमेव कल्याणप्रदायकमिति शास्त्रज्ञानां मतम्। ब्राह्मणकाला-नन्तरं मूलनक्षत्रमशुभप्रदमिति कैश्चिच्छास्त्रकारैरमन्यत। तैत्तिरीयब्राह्मणे मूलनक्षत्रं वाण्या सम्बद्धम् सरस्वती विद्याया अधिष्ठात्री देवतेति प्रसृते मते, ततश्च सरस्वत्या आवाहनं मूलनक्षत्रे विधीयत इति सम्प्रदायः सञ्जातः।

तैत्तिरीयब्राह्मणे दृश्यते—

मूलं प्रजां वीरवतीं विदेय। * * *
गोभिर्नक्षत्रं पशुभिः समक्तम् ॥ * * *
पराचीं वाचा निर्ऋतिं नुदामि।
शिवं प्रजायै शिवमस्तु मह्यम् ॥३।१।२

मूलनक्षत्रस्याधिष्ठात्री देवता प्रजापति र्गाः पशूंश्च ददाति। सरस्वत्याः पूजनं मूलनक्षत्रे विहितं तेन निर्ऋतीनामुग्रदेवता संतुष्टा भवति। पुत्रपौत्रांश्च ददाति। पूर्वाषाढा-नक्षत्रं पर्जन्यस्य मूलदेवता। प्रवाससौकर्यार्थं परदेशगमनार्थं चैतद् नक्षत्रद्वयमार्याणां प्रशस्तमासीत्। तैत्तिरीयब्राह्मण इदं वचनं दृश्यते। तन्नक्षत्रं प्रयतां पशुभ्यः। कृषिर्वृष्टिर्यजमानाय कल्पताम्। तै० ब्रा० तृतीयकाण्डे प्र० पा० १ अनु २।

सरस्वतीपूजनस्य प्रारम्भकाले वर्षारम्भ आश्विनमासाद् गण्यते प्राचीनैः शास्त्रज्ञैरित्य-नुमीयते। ऋग्वेदकाले शरदृतुर्वर्षारम्भ आसीदित्यत्र बहूनि प्रमाणान्युपलभ्यन्ते।

यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश्यां शरद्यन्वविन्दत्। ओजायमानं यो अहिं जघान दानुं शयानं स जनास इन्द्रः॥ ऋ०. २।१२।११ पर्वतगुहायां निहितं चत्वारिंश्यां शरदि वहिराकृष्य पराक्रमशालिनं सर्पराजं जघान। शतपथब्राह्मणकाले वर्षारम्भ उत्तरायणे विहितः।

वसन्तो ग्रीष्मो वर्षा वा। ते देवभूतयः॥

तैत्तिरीयसंहितायाः काले वर्षारम्भः संवत्सरसत्रस्य कोऽपि मासविशेषो नागण्यत इति दृश्यते। एकाष्टका संवत्सरस्य पत्नीत्यभ्यधीयत। यजुर्वेदकाले कृत्तिकानक्षत्रस्य भूरि महत्त्वं सञ्जातम्। वेदाङ्गकाले तु धनिष्ठानक्षत्रे तदेव वैशिष्ट्यं संक्रान्तम् तदनन्तरं तदेव महत्त्वं पाणिनिकाले आग्रहायणीनक्षत्रस्य आसीदिति तस्य सूत्रेभ्यः सुस्पष्टम्। आग्रहायण्यश्वत्थाट्ठक् ४।२।२२।

अग्रे हायनं ( वर्षम् ) अस्याग्रहायणीयम्। महाभारतकालेऽपि वर्षारम्भस्य कालः मार्गशीर्ष आसीदिति तत्कालीनैरगण्यतेति भगवद्गीताया दशमाध्यायान्तर्गतात् "मासानां मार्गशीर्षोऽस्मि" इति वचनात् सुस्पष्टं प्रतीयते। अधुनाऽपि उत्तरभारते कार्तिक-मासाद् वर्षारम्भो भवति। दक्षिणभारते तु चैत्रादेव संवत्सरोऽगण्यतेति वयमेव पश्यामः। प्रत्यक्षमधुना सरस्वत्या विसर्जनं श्रवणनक्षत्रे विधीयत इति घटना विचारणीया।

सरस्वती विद्याया देवता। उपाकर्मणः कालो यथाशाखं भिन्नोऽस्ति। उपाकर्म नाम श्रावणी। श्रावणमासे हस्तनक्षत्रे पञ्चम्यामुत श्रवणसंयुतायां पौर्णमास्यामुपाकर्म-संपादनस्य समयः। ऋग्वेदकाल आश्विनमासाद् वर्षारम्भस्य तथा स्वाध्यायारम्भस्याऽपि

गणना संमतेत्यनुमीयते। अष्टम्यां तथा नवम्यां च सरस्वतीपूजनं कृत्वा तदनन्तरं श्रवणनक्षत्र उपाकर्म कृत्वा स्वाध्यायारम्भस्य प्रथास्ति।

तच्छ्रोणैति (श्रवण) श्रव इच्छमाना।
पुण्यं श्लोकं यजमानाय कृण्वती।
तै० ब्रा० ३।१।२

सरस्वत्याः कालः ऋग्वेदकालात् प्राचीनतरः। ऋग्वेदस्य प्रथमे मण्डले सरस्वत्या वर्णनं दृश्यते। पावका नः सरस्वती वाजेभिर्वाजिनीवती। यज्ञं वष्टु धियावसुः॥ चोदयित्री सूनृतानां चेतन्ती सुमतीनाम्। यज्ञं दधे सरस्वती॥ ऋ० २।३।१०-११

सूक्ष्मैकदृष्टिः समृद्धा कर्मघना सरस्वती उत्तमगायनकलाप्रेरिका जाड्यापहा। साऽस्माकं यज्ञं प्रचारयति। सरस्वती (स्वपराक्रमेण) स्ववीर्येण प्रचण्डाञ्जलौघान् चालयति। साऽखिलबुद्धिसर्वस्वस्याधिष्ठात्री सरस्वती नैकविधैर्नामभिरभिधीयते। अध्यात्मशास्त्रेषु सा ब्रह्मविद्यासंज्ञिता। तन्त्रे च सा विद्येति प्रसिद्धा। पुराणेषु शारदा सरस्वती गायत्री सावित्र्यादिभिर्नामभिर्विख्याता। मत्स्यपुराणे तस्या माहात्म्यं विशेषेण वर्णितम्। अस्मिन् पुराणे सा चतुर्मुखसुता इति स्मृता। यत्र यत्र ब्रह्म-तत्र तत्र शारदाप्युपवर्णिता। तत्र सा मायासंज्ञितेति दृश्यते। दिव्येयमादिसृष्टिस्तु रजोगुणसमुद्भवा।

पुराणोत्तरकाले सरस्वत्या माहात्म्यं वर्धिष्णुरेव दृश्यते। अभिजातसंस्कृतवाङ्मये स्थाने स्थाने भक्तिपुरस्सरमुपवर्णिता दृश्यते। "तुषारहारधवला या शुभ्रवस्त्रावृता" इत्युपाधिभिस्तस्याः शुभ्रत्वस्यात्यन्तं हृदयंगमशैल्या वर्णनं सुभाषितकारेण स्वकृत-श्लोके कृतमस्तीति सर्वेषां परिचितमेव। एतदुद्दिश्य विदर्भस्थेन कविना भणितं यदि कविर्दण्डी विदर्भस्थां कवयित्रीं (विजयाङ्काम्) अज्ञास्यत् तर्हि स एतच्छ्लोकं नारचयिष्यत्। कृष्णवर्णया विजयाङ्कया शुभ्रवर्णायाः शारदाया अङ्क आसीनया तत्राल्पाल्पतिलकत्वेन विराजमानया भवितव्यम्। सरस्वत्याः प्रियतमकन्याया विद्वत्तामधिकृत्य किमन्यत् प्रमाणम्।

उत्तरोत्तरकाले महाराष्ट्रीयग्रन्थस्य प्रारम्भः सरस्वत्या नमनादृिना न क्रियते। यदि क्रियते तर्हि अशुभकरमिति श्रद्धा। भावार्थदीपिकायां श्रीज्ञानदेवः ग्रन्थारम्भ उपन्यस्यति।

"अधुना अभिनव वाग्विलासिनी।
चातुर्य कलाकामिनी। श्रीशारदा
विश्व मोहिनी। नमिली म्यां (नमाम्यहं)।"

दासबोधस्यारम्भे साधुशिरोमणिः श्रीरामदासः श्रीशारदास्तवनार्थ्येवं स्तौति ।

"आतां ( इदानीं ) वंदिन वेदमाता ।
श्रीशारदा ब्रह्मसुता । शब्दमूल
वाग्देवता महामाया ॥१॥"

आधुनिककाले रचिते शनिमाहात्म्येऽपि शारदायाः सुमनोहरं वर्णनमुपलभ्यते ।

"आतां ( अधुना ) नमू ब्रह्मकुमारी ।
हंसारूढ वागीश्वरी । वीणा शोभे
दक्षिण करीं । विजयमूर्ति सर्वदा ॥

ख्यातनाम्ना महाराष्ट्रीयकविना गोविन्देन प्राकृतभाषायां श्रीशारदाया अतीव सुन्दरं मनोहारि च वर्णनं कृतमस्ति । तस्याशयो गीर्वाणभाषायाम्

"आत्मलतोपरि स्फूर्ति सुममिदं ।
वसन्तरूपाऽपरा बुद्धिः । आविष्कारः
शब्दब्रह्मणो ज्ञानगर्भरूपः ।
चित्तमयूरासना दीप्तिरियम् । सा दीप्तिः
ज्ञप्तिरेव सा कथ्यते वागीश्वरी ।
किरीटरञ्जितशीर्षेऽमूल्य-
तत्त्वानां स्फुरन्ति तस्माद्
रक्तरागाः खलु सद्गुणरत्नानाम् ।
लुण्ठति माला षट्शास्त्राणां दिव्या
रत्नानां वक्षसि । तस्माज् ज्ञानात्
सुन्दरतरः केवल एकः परमेशः ।"

एवमादिभिः स्तुतिभिरनेकाभिः श्रीशारदायाः प्रशस्तिः कृता । यत्र सहस्रजिह्वः शेषोऽपि शारदां याथार्थ्येन वर्णयितुमसमर्थस्तत्र मादृशस्य पामरस्य का कथा ।

———

## वेदार्थविमर्शः

( पूर्वतोऽनुवर्तते )

दग्धिभावापत्तेरूर्ध्वं तस्य तेजसो मूलानुगा गतिरस्माभिरूर्ध्वगतिरुच्यते । तदुक्तं माघे—प्रसिद्धमूर्ध्वज्वलनं हविर्भुज इति । सा च मूलानुगा गतिरयनाभिभावेन व्यपदिश्यत इति विवृतं स्थलान्तरे । एवं च पृथिव्या

प्रतिबन्धस्थले या रीतिः साकाशेऽन्यान्यप्रतिबन्धस्थलेऽपि भवितुमर्हति। तेजश्चादित्यस्यातिदूरातिसामीप्याद्विशतः समूहाकारं भासमानं वीचीतरङ्गन्यायेन प्रसरतीति वचनं समूहाकारस्यौपाधिकत्वेन मुख्यशलाकाकारता रश्मिरूपेण व्यवह्रियते। तादृशरश्मीनां संगणनस्याशक्यतया असङ्ख्यार्थकसहस्रशब्देन व्यवहारेण सहस्रकरः सहस्ररश्मिरित्यादिशब्दैरादित्यस्य व्यवहारः। वेदे सहस्रशब्देन बहुलं तस्य व्यवहारः। सा चोभयविधता यजुर्वेदे त्रिसुपर्णानुवाके स्पष्टं प्रतिपाद्यते। तत्रोच्यते "रुचे त्वा रुचे त्वा समित्स्रवन्ति सरितो न धेनाः। अन्तर्हृदा मनसा पूयमाना घृतस्य धारा अभि चाकशीमि। हिरण्ययो वेतसो मध्य आसाम्। तस्मिन्सुपर्णो मधुकृत्कुलायी भजन्नास्ते मधु देवताभ्यः। तस्यासते हरयस्सप्ततीरे स्वधां दुहाना अमृतस्य धाराम्।" इति। अत्र रुचे त्वेत्यस्याम्रेडनेन रुग्बाहुल्याय समित् समिधः स्रवन्ति। समिच्छब्देन आदित्यमण्डलभागा गृह्यन्ते। तदुक्तं परस्तात्तत्रैव 'शरीरमिध्मम्' इति। तत्र यज्ञस्य तद्रूपापन्नस्यादित्यस्य शरीरं शरीरस्थानापन्नं मण्डलमिध्मशब्देनोच्यते। एवं सति इध्मशरीरयोरभेदेन शरीरग्रहणे वाक्यार्थानुसारेणेध्मस्यापि ग्रहणमिध्मग्रहणे चार्थानुसारेण शरीरस्य ग्रहणमिति भवति। इध्मशब्दस्यैधनादिध्मता। तच्चैधनं स्वरूपस्यार्थात्तेजस इति तस्य समेधनरूपता तद्बोधनात्समिच्छब्दोऽपि समेधनसाधनत्वान्मण्डलरूपशरीरभागानाह। प्रकृते समिच्छब्दः समिध इत्यर्थे लुप्तविभक्तिकः। अत एव तत्र वाक्ये बहुवचनान्तक्रियापदस्य स्रवन्तीत्यस्योपपत्तिः। उपमानभागस्य च "सरितो न धेना" इत्यस्यानुगुण्यम्। स्रु धातोर्गतिरर्थः। समिधो यथायथा गच्छन्ति गमनशीला उदयनशीला भवन्ति तथातथा रुचो बाहुल्यं भवति। यथा सरितां बाहुल्याय धेना उदकानि गतिमन्ति भवन्ति तद्वत्। अत्र सरितोऽपि रश्मिभावानापन्ना व्यक्ततेजांस्युच्यन्ते नदीरूपेण धेनाःशब्देन प्रीणनेन हेतुनाऽव्यक्ततेजोरूपा आप उच्यन्ते। अव्यक्ततेजसां प्रसरणेन तद्बहलरूपनदीरूपता। इदं चेन्द्रकृतमिति मन्त्रान्तरे उच्यते "इन्द्रो अस्माँ अरदद्वज्रबाहु ...तस्य वयं प्रसवे याम उर्वीरित्यत्र। इन्द्रेण वयं भिन्ना भेदनेनोत्पादिता वज्रबाहुना अतस्तस्यानुमोदनानुसारेणोर्व्यो" महत्यस्सत्योऽयामेति नदीनामुक्तिः। इन्द्रस्यादित्याभेदेनेन्द्रेण भेदनमर्थात्तमसां कृत्वोत्पादितानि जलानि तेजोरूपाण्येव तेषां बहुलीभावेन नदीरूपतेति मन्त्र उक्तमिन्द्रेण वयं भित्वा निर्मितास्तन्मतानुसारेण नदीनां गमनोक्तिसङ्गता। किञ्च सरितो न सरित इव नद्य इव धेना वाचोऽपि गच्छन्ति इत्यर्थोऽपि। वाचां धेनापदबोध्यत्वं निघण्टुषु वाग्बोधकेषु नामसु धेनाशब्दस्य पाठात्। वाक्यमण्डलासत्त्वदशायां स्थितिरिति विस्तरेणान्यत्र निरूपितम्।

( क्रमशः )

---

मध्वादिष्वसम्भवादनधिकारं जैमिनिः ।१।३।३१

अस्ति देवानामप्यधिकारो ब्रह्मविद्यायामिति स्थिते इदानीं चिन्त्यते मध्वादिविद्यायां नास्त्यधिकारो देवानां, तेषामादित्यवस्वादिभ्योऽन्येषामादित्यवस्वादीनामुपास्यानामभावात् प्राप्याणां वस्वाद्यन्तराणामभावाच्च। मधुविद्यायां तावदादित्ये मध्वारोपेणोपासनाद् भवति वस्वादित्वप्राप्तिरिति दृश्यते श्रुतिषु, "असौ वा आदित्यो देवमधु" [ छा० ३।१।१ ] इत्यारभ्य "स य एतदेवामृतं वेद वसूनामेवैको भूत्वाग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति" [ छा० ३।६।३ ] इति जैमिनिराचार्यो मन्यते इत्यर्थः। प्रकारान्तरव्याख्यायां च मध्वादिषु तदसम्भवादेव देवानामनधिकारात् ॥३१॥

ज्योतिषि भावाच्च ।१।३।३२

ब्रह्मोपासनायां देवमनुष्ययोस्तुल्येऽप्यधिकारे "तद्देवा ज्योतिषां ज्योतिरायुर्होपासते" [ बृ० आ० ३।४।४।१६ ] इति श्रुतौ विशेषेण देवानुल्लिख्य तेषां ज्योतिषि ब्रह्मणि उपासनाऽधिकारभावाच्च देवतान्तरोपासनायां तेषामनधिकारः सूचित इत्यर्थः ॥३२॥

भावं तु बादरायणः सम्भवात् ।१।३।३३

सिद्धान्तमाह भावम् इति। मध्वादिविद्यासु वस्वादीनामप्यधिकारभावं बादरायण आचार्यो ब्रूते, यतो मध्वादिषु ब्रह्मण उपासनासम्भवोऽस्ति देवानाम्। तथाहि मधुविद्यायां कार्य्यावस्थं कारणावस्थं च द्विविधमेव ब्रह्मोपदिष्टमुपास्यत्वेन तादृशब्रह्मोपासनया कल्पान्तरे वस्वादित्वप्राप्त्या परब्रह्म प्राप्स्यते "न ह वा अस्मा उदेति न निम्लोचति सकृद् दिवा हैवास्मै भवति य एतामेव ब्रह्मोपनिषदं वेद" [ छा० ३।११।३ ] इति मधुविद्यामात्रस्यैव ब्रह्मोपनिषत्त्वदर्शनात् वस्वादित्वप्राप्त्या ब्रह्मप्राप्तिफलदर्शनाच्च वस्वादिभोग्यादित्यंशस्योपासनं तद्रूप्यापन्नस्य ब्रह्मण एव प्रतीयते इति। अत्र ज्ञानकर्म्मसमुच्चयापातभियव व्याख्यान्तरकल्पनं बोध्यम् ॥३३॥

शुगस्य तदनादरश्रवणात् तदा द्रवणात् सूच्यते हि ।१।३।३४

यद्यध्ययनाभावेऽप्यर्थित्वसामर्थ्यवशादधिकारो देवतानां तदा तत एवानध्ययनवतोऽपि शूद्रस्य स्यादधिकारो ब्रह्मविद्यायाम्, "तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः [यजुःकाण्ड ७।१।१।१] इति चाग्निसाध्यकर्म्मानधिकारापादकं वाक्यं नत्वग्निनिरपेक्षब्रह्मविद्यानधिकारापादनायालम्। श्रुतिश्च शूद्रमपि विद्यार्थिनं गुरुशुश्रूषुं दर्शयति "अहहारेत्वा शूद्र तवैव सह गोभिरस्तु" [ छा० ४।२।३ ] इति। विदुरादीनां च शूद्रशरीराणां विद्यावत्त्वं भारतादिष ज्ञायते, इत्यस्ति शूद्रस्याप्यधिकारो ब्रह्मविद्यायामिति प्राप्ते आह—शुगस्येति। यतो निशि शयानस्य "कंवरे एनमेतत् सन्तं संयुग्वानमिव रैक्कमात्थ" [ छा० ४।१।३ ] इति हंसवाक्याद् रैक्कतः

स्वख्यातिनिकर्षश्रवणात् संजातशुचस्तदैव रैक्वं प्रति द्रवणाच्छूद्रत्वं पौत्रायणस्य जानश्रुतेः सूच्यते न जात्येति न श्रुतिरस्ति लिङ्गं शूद्रस्य विद्याधिकारे। शूद्रस्याध्ययनाभावाच्च नाधिकारो विद्यायां तदभावश्चोपनयनाभावात् "उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः" इति स्मृतौ तयोः पौर्वापर्य्यदर्शनादलौकिके च विषयेऽलौकिकस्यैवाधिकारस्यावश्यकत्वान्नार्थित्वसामर्थ्यमधिकारापादकं भवेदिति यज्ञवद् ब्रह्मविद्यायामप्यनधिकारः शूद्रस्य। विदुरादेस्तु प्रागभवीयज्ञानप्रकर्षादेव ज्ञानवत्त्वमिति न निदर्शनमिति ॥३४॥ (क्रमशः)

---

## रसमञ्जरी

### मर्कटः=मकरलग्नः+कर्कटराशिः

अध्यापकः। वत्स परमानन्द ! संपाठः पठ्यताम्।

परमानन्दः। (पठति—)

मर्कटस्य सुरापानं ततो वृश्चिकदंशनम्।
तन्मध्ये भूतसञ्चारो यद्वा तद्वा भविष्यति॥

अध्यापकः। मर्कटशब्दस्य को वार्थः ?

परमानन्दः। आर्य ! मर्कटलग्ने जातस्य पुरुषस्य चन्द्रो यदि कर्कटराशाववतिष्ठते स मर्कट इत्युच्यते। मकर-कर्कटयोः सङ्करेण मर्कटशब्दस्य निष्पत्तिः।

अध्यापकः। समीचीना व्युत्पत्तिः श्रीमता प्रदर्शिता। प्राचीनपुस्तकेष्वपि "मृदून् कुर्वन्ति गच्छन्तो मृगास्तेन प्रकीर्तिताः" "उपादायापि ये हेयास्तानुपायान् प्रचक्षते।"

Half of wish, half of fear
And so a partner will appear.

इत्यादि सन्दृश्यते। वत्स ! चिरं जीव। तव सम्माननार्थं मद्य दानीमेवावकाशो भवतु।

---

सम्पादकस्य बलवदस्वस्थशरीरतया कदाचित् प्रमादा दृश्येरन्। कृपया मर्षयन्तु वाचकमहाभागाः।

# Manjusha

Vol. IV (about 400 pages)—29 storiettes, hymns from the Rigveda with commentary, छात्री versus छात्रा, पत्त्र versus पत्र, Goethe's maxims ( original German with Sanskrit translation), Saratchandra's Niṣkṛti, on Pāṇini's क्ङ, महाभाष्य, विश्रम versus विश्राम, सेवक्का versus सेविका, अन्योन्य, 11 humorous skits. Rs. 10/-.

Vol. V (about 400 pages) 16 storiettes, 4 long stories, 12 poems, humorous skits, discussions on परःशत, भ्रातृव्य, सूद्दता, आजो दाऽन्नास्यविहरणे, on the Anubandhas, on grammatical gender, Sanskrit equivalent of "horse-power", Tagore's poems, Language as fossil history, on Sāyaṇa's Bhāṣya, The Śivasūtras and the Sanskrit Alphabet, Patañjali's Mahābhāṣya, Hymns from the Avesta, etc., etc. Rs. 10/-

Vol. VI (about 400 pages) 5 storiettes, 2 long stories, 1 Bhāṇa, Derivations of अश्वतर and पुत्र, आनोभद्रीयसूक्त with various commentaries, explanation of the Madhusūkta, Kālidāsa and Bhavabhūti, Mahābhāṣya (pp. 33-136), Rasamañjarī, etc., etc. Rs. 10/-

Vol. VII (about 400 pages) **Technical Terms and Technique of Sanskrit Grammar—Samāsa, Kāraka and Vibhakti.** Kālidāsa and Bhavabhūti (5 instalments). Was Pāṇini a Communist? Kālidāsa and Shakespeare. Greek Proverbs (64 pages). On तरप् and तमप्. On सूद्दत and भ्रातृव्य. Meaning of शफोरु. 9 storiettes, 3 long stories, मृगया in Sanskrit Drama, etc., etc. 10/-.

Vol. VIII (about 200 pages) Short stories, long stories, humorous skits, महाभाष्यरत्नमञ्जूषा. Meanings of Sanskrit proper names. Sanskrit stanzas and their parallels from European languages. Sanskrit equivalent of bread. Notes and Queries. Tagore's short story. On देवानांप्रियः. On the derivation of कार्मुक, On Abhinavagupta: On Śārṅgarava and Śāradvata. Tagore's Urvashi. Common Errors. **So-called Solecisms of Kālidāsa.** Rs. 3/8/-.

Vol. IX (nearly 300 pages). **So-called Solecisms of Kālidāsa.** Literary Parallels. Common Errors. Technical Terms of the Mugdhabodha. Tagore's story and poems. Contradiction in Terms. On the correct derivation of प्रवीण, सिकता etc. वाग्मी vs. वाग्ग्मी. बिभीषण versus विभीषण. On फ, ढ, ख, छ, घ in Pāṇini. A new stanza from Vyāḍi's Saṁgraha. Meaning of रद विलेखने. सतीथ्य versus सतीर्थ. The Anubandhas र, क, प, उ, ष in Pāṇini, The Technical Terms—Upasarga, Nipata, Karmapravacaniya, Gati, etc. Apurva in Mimamsa. In Defence of the Padapāṭha. On ऊकालोऽज्झस्वदीर्घप्लुतः. On वामदेव्यं साम. रेफ versus रकार. Rs 6/-

MANJUSHA ( Sanskrit Monthly Magazine )
*Registered No. C 3278*



Printed and published by Sri Visvanath Chatterjee, M. A. from 8 Bhupendra Bose Avenue, Calcutta-4. Printed at the Gupta Press 37/7 Baniatola Lane, Calcutta-9.

चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर पाहि माम्।
चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्ष माम्॥

श्रीशिवः शरणम्

षोडश-वर्षे ] October, 1961 [ द्वितीया संख्या

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## सूचिः



---

येषां सविधे राशिवडेकरमहोदयस्य पत्राणि वर्तन्ते ते कृपया मञ्जूषायां प्रकाशनार्थं तेषां प्रतिलिपिप्रेषणेनानुगृह्णन्तु नः।

**Please send your renewal subscription with donation at once.**

*Office* : 8, Bhupendra Bose Avenue, Calcutta—4.
Minimum Annual Subscription : Rupees Six only.
Foreign—Twelve shillings.
Single copy : Three Rupees.

# मञ्जूषाया नियमावली

मञ्जूषाया वार्षिकं मूल्यमवरतो रूपकषट्कम् । आश्विन (September)-मासतो वर्षारम्भः । ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम्।

२। प्रतिसौरमासं दशमदिने (आषाढमासस्य चतुर्विंशे दिवसे) 8, Bhupendra Bose Avenue, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते। मासस्य प्रारम्भे न लभ्यते चेद्स्मभ्यं निवेदनीयमन्यथा पुनः प्रेरणं न सम्भवेत् ।

३। मञ्जूषायास्तावद् भागत्रितयं वर्तते । तत्र प्रथमे भागे देवभाषां प्रविविक्षूणां कृते सरलाः श्लोका आभाणका आख्यानानि नाटकानि च सन्निवेश्यन्ते। द्वितीये भागे दार्शनिका निबन्धा व्याकरणालङ्कारादीनां विमर्शः पाठविचारो जिज्ञासा मीमांसा च प्रकाश्यन्ते। तृतीये भागे सानुवादाः पारसीकानां गाथाः साङ्लानुवादं निरुक्तं च प्रकाश्यन्ते।

**वामनस्य काव्यालङ्कारसूत्रवृत्तिः** (प्रयोगाधिकरणम्) विविधकाव्योदाहरणमण्डितविविधव्याकरणमतसमन्वितामिनवसुविस्तृतटीकोपेता (अतिदुर्लभा) २॥)

**सिद्धान्तकौमुदी**—लीलावतीसहिता (प्रथमो भागः) । मूल्यं १)

| | |
|---|---|
| Upasarga and other Technical Terms | Rs. 1/4/- |
| Convocation Address in Ancient India | As. 12 |
| Popular Etymology— | Re. 1/- |

**ECONOMY IN SPEECH**—(Manjusha, May 1958). It is indispensable to students of languages. Re. 1/-

**Patanjali's MAHABHASHYA (Paspasha or Introduction) with English Translation, exhaustive critical and explanatory notes, commentaries etc. Second Edition.** Rs. 4/-

**ऋग्वेदीयम् आनोभद्रसूक्तम्** (पञ्चभाष्यसमन्वितम्) २।

**शब्दकथা**—সরস, সরল ভাষাতত্ত্ব २

**ঊষার আলো**—ছোট ছোট হাসির গল্পের সমষ্টি— ॥

**নক্ষত্রমালা**—ধর্মবিষয়ক শ্লোক, সরল ব্যাখ্যা ও অনুবাদ ।/

Several sets of Vols. IV, V, VI (lese one no.), VII Rs. 10/- per volume, Vols. X, XI, XII, XIII and XIV (400 pp. each) of the Manjusha are still available for Rs. 6/8/- per volume and only a few sets of Vol. VIII (200 pages) Rs. 3/8/- only. Vol. IX Rs. 6/- Vol. XV Rs 8/-. Only a few sets in stock. Order at once.

**श्रीविश्वनाथ-चट्टोपाध्यायः**

Phone :—55-4049 ८, भूपेन्द्र बसु आवेन्यू, कलिकाता।

शरणं तरुगेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

October, 1961. | १८८३-शकीय कार्त्तिकस्य १६श-वर्षस्य द्वितीया संख्या | Vol. XVI No. 2

## आभाणकमाला

स्वभावशुद्धः स्फटिको न संस्कारमपेक्षते । काव्यादर्शे ३।१७८

तीर्थोदकञ्च वह्निश्च नान्यतः शुद्धिमर्हतः । उत्तररामचरिते १

त्वत्पादनखरत्नानां यदलक्तकमार्जनम् ।
इदं श्रीखण्डलेपेन पाण्डरीकरणं विधोः ॥ अलङ्कारसर्वस्वे

तपस्विवेषक्रिययापि तावद्यः प्रेक्षणीयः सुतरां बभूव ।
राजेन्द्रनेपथ्यविधानशोभा तस्योदितासीत् पुनरुक्तदोषा ॥

रघुवंशे १४ ।

To gild refined gold, to paint the lily,
To throw a perfume on the violet,
To smooth the ice, or add another hue
Unto the rainbow, or with taper-light
To seek the beauteous eye of heaven to garnish,
Is wasteful and ridiculous excess. SHAKESPEARE

"नितान्तरम्यभावानां परिष्कारो विडम्बना ।"
स्वर्णे प्रयुक्तसंस्कारे सौवर्णरसलेपनम् ॥
शोभार्थं विविधैर्वर्णैररविन्दस्य रञ्जनम् ।
पाटले मधुरामोदे गन्धाढ्यद्रवसेचनम् ॥

तुषारसंघातशिलामसृणीकरणं मुधा ।
सुचारुणेन्द्रचापेन नवरङ्गस्य मिश्रणम् ॥
दिवोऽभिरामनेत्रस्य क्षुद्रदीपेन मण्डनम् ।
हन्त हास्या वृथा चेयं संस्कारपुनरुक्तता ॥

सीतारामविष्णुगोखले-महोदयस्य ।

२। It is a principle of human nature to hate those whom you have injured.

स्वो हि धर्मो मर्त्यानाम् आत्मना विप्रकृतेषु प्रद्वेषो नाम ।

Forgiveness to the injur'd doth belong,
But they ne'er pardon who have done the wrong.

क्षमा खलु निकृतेष्वायतते । यैरनिष्टमाचरितं ते कदापि न मृष्यन्ति ।

The offender never pardons.

He that does you an injury will never forgive you.

---

## उपदेशरत्नमञ्जूषा

दुःखान्धा हि पतन्त्येव विपच्छ्वभ्रेषु कातराः ।
धीरास्तु दृष्टसन्मार्गा विवेकामलचक्षुषः ।
न पतन्त्यवटे प्राप्यमवश्यं प्राप्नुवन्ति च ॥

[ श्वभ्रम् अवटो गर्त इत्यनर्थान्तरम् । तथा चामरः—छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा सुषिः । गर्तावटौ भुवि श्वभ्रे । इति ।

विपदि धैर्यमाधाय प्रतीकारपरो भवेत्, लेशतोऽपि कातरताया वशं न गच्छेत्। व्याकुलप्रलपितानां कण्ठशोषमन्तरेण फलं न दृश्यते । अधैर्येण धियः प्रसरोऽप्यवरुध्यते । उक्तं च भारते—

विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ इति ।]

"If thou faint in the day of adversity, thy courage is small."

---

# श्रीमदप्पाशास्त्रिणां पत्ररत्नमञ्जूषा

( १३ )

श्रीशिवः शरणम् ।

कोल्हापुरक्षेत्रविराजमानात् कार्यालयात् संस्कृतचन्द्रिकायाः ।

स्वस्ति श्रीयुतमानविक्रमकवे ! भूपालचूडामणे !

साशीर्वादमिदं निवेदयति सस्नेहं च कश्चित् सखा ।

प्रेमैवाकृतिमत् प्रमोदनिलयं पत्रं प्रभो ! तावकं

ह्यः प्राप्तं वितनोति कामपि मनस्यप्राप्तपूर्वां मुदम् ॥१॥

प्रेमपूर्णमनसः प्रियंवदा

चन्द्रिका नरपते ! समापतेत् ।

मासि मासि तव पाणिपङ्कजे

पङ्कजे सुरुचिसम्पदा यथा ॥२॥

समालोच्यैतस्यां प्रियवर ! भवत्पुस्तकचयो

यतो दृष्टश्चित्तं सुखमयमयं मे वितनुते ।

यदि स्यात् किन्त्वस्मिन् कथमपि विलम्बो मम कृतो

ह्यवश्यं क्षन्तव्यः प्रणय इति मेऽयं त्वयि विभो ! ॥३॥

आयात एव सविधे मम भूमिपाल !

चिन्तामणिः* स्फुरदनेकरसप्रबन्धः ।

आनन्दथुं च गतवत्तदवेक्षणेन

चेतो मुहुर्मुहुरिहेक्षितुमीहते तम् ॥४॥

लक्ष्मीकल्याणमेतत् प्रहिणु नरपते ! नाटकं त्वत्प्रणीतं

नानाभावैर्मनोज्ञं क्रमश इह च तन्मुद्रये चन्द्रिकायाम् ।

को वा भावत्ककाव्यं प्रवर ! रसविदां नैव सम्मन्तुमिच्छेद्

दृष्टा कच्चित् कदाचित् क्वचिदपि विबुधैर्गौस्तनी यु(त्य ?)ज्यमाना ॥५॥

पत्रं व्यसर्जि किल पूर्वतरेऽह्नि राजन् !

तुभ्यं तथा च भवताधिगतं भवेत्तत् ।

कुत्राप्यनन्यगतिरेव विधावहं त्वां

व्यापारयामि सुहृदां प्रवरात्मनीने ॥६॥

न स्यात् प्रयासकृदिवैष विधिः सखे ! चे-

ल्लभ्येत चात्रभवता यदि भूप ! कालः ।

---

* विज्ञानचिन्तामणिनामिका संस्कृतपत्रिका ।

सम्पूर्यतां ननु विधाय तदाशुमेषा
वाञ्छा मनस्युदयमाप्तवती मदीये ॥७॥

पत्रान्तरे मया वर्णा लिखिता देवनागराः ।
लिख्यतां निम्नतस्तेषां केरलीयं लिपिद्वयम् ॥८॥

प्रतिप्रेर्यं च तत्पत्रं यद् दृष्ट्वा केरलाक्षरम् ।
पठतो हृदयं किञ्चिदावहेत् सम्मदं मम ॥९॥

यत्किञ्चिदत्र नरनाथ! घटेत वृत्तं
पत्रान्तरेण तदहं विनिवेदयिष्ये ।
यत् सम्भवेच्च विषये भवदीयके तद्
भूयो निवेद्य मुदमातनु चतसो मे ॥१०॥

इन्दुनेत्राष्टभूशाके चैत्रिकस्यादिमे दले ।
दशम्यां शुक्रवारेऽयं सख्ये लेख्यः प्रहीयते ॥११॥

अप्पाशास्त्री राशिवडेकरः

( १४ )

श्रीशिवः शरणम् ।

फाल्गुनवदि, १२-१८-२०

कोल्हापुरवर्तिसंस्कृतचन्द्रिकाकार्यालयात्

स्वस्ति । सविनयं सप्रणामं सानुरागं चावेदकः—

प्रियप्रवरमहाभागाः, समधिगतः श्रीमद्भिः प्रेरितो विज्ञानचिन्तामणिः । श्रीमन्नामाक्षरमुद्रितानि कानिचिच्च चेलानि, किन्तु पत्रं नाम नाधिगतम् । तत् प्रेर्यतामुत्तरं कृपया ।

अपि दृष्टाः श्रीमद्भिः संस्कृतचन्द्रिकाः ? अपि निवेशनीयं मया चन्द्रिकाया ग्राहकश्रेण्यां श्रीमतां नाम ? यथाहं पश्यामि तथा मन्ये भवन्त एनां सम्मन्यन्ते, तदादिश्यतां यन्मयानुष्ठातव्यम् ।

आगामिनो वत्सरात् प्रभृत्यस्या आवरणपृष्ठस्याभ्यन्तरे देशवृत्तान्तं निवेशयितुमिच्छामि । अन्यश्च योऽस्यां विशेष आवश्यकः स कृपया निवेदनीयः । सन्ततं च प्रेर्य पत्राणि ज्ञाप्यतामात्मनः सर्वाङ्गीणं मङ्गलम् । मङ्गलमिदानीमस्माकम् । एधतामनुदिनमधिकाधिकमनुकम्पेति ।

विनयावनतो वशंवदः
श्रीअप्पाशास्त्री राशिवडेकरः
संस्कृतचन्द्रिकायाः सम्पादकः प्रकाशकश्च ।

( १५ )

श्रीशिवः शरणम्

गगनवावडानगराद्

१८२३ कार्त्तिकसुदि

स्वस्ति ।

श्रीमदशेषभूपालमौलिमालालालनीयचरणारविन्दद्वन्द्वेषु निखिलकविचूडाचक्रमण्डनायमानेषु प्रियसुहृत्प्रवरेषु श्रीमन्मानविक्रमकविराजराजतिलकेषु सविनयं साशेषसौहार्दं साशीर्वादं चावेदकः—

अयि भूपतिमणयः !
लिखितस्य वः करतलागतस्य मे
व्यतियातवान् बहुतिथः समयः(?) ।
विधिदुर्विपाकवशतस्तदुत्तरं
प्रियमित्रभूपमणयो ! व्यलम्बत ॥१॥
कमनीयशीलकलिता यदा दिवं
समलञ्चकार सहधर्मिणी मम ।
दृढरागपाशविनिबद्धमन्तरं
गतवद्दशां नृपवरेण्य ! कामपि ॥२॥
व्यसनं व्यसनानुबन्धि नणा-
मिति यद् भूमिपते ! वदन्ति सन्तः ।
न मृषा किल तद्वचो यतोऽहं
समयेऽस्मिन् व्यसनान्तरे न्यपप्तम् ॥३॥
ज्वरेण मे कालसहोदरेण
प्रेयान् समाक्रम्यत तातदेवः ।
व्यथां यदीयामनुपश्यतोऽभू-
न्ममान्तरात्मा शतधा विदीर्णः ॥४॥
शनैः शनैर्व्याधिरमुष्य सोऽयं
यदा प्रशान्त्युन्मुखतामवापत् ।
सुहृद्भिर्निर्बन्धवशात् तदा मे
नवो विवाहो जघटे नृपेन्द्राः ! ॥५॥

निर्वृत्ते ननु तत्र मित्रमणयस्तातः पुनर्मामकः
कासश्वासमुखैर्नितान्तमभवत् पर्याकुलो व्याधिभिः ।
हा धिक्कष्टमिदं नितान्तमिह यत्त्वारोग्यमेकान्ततो
नैवामुष्य विलोकितुं नयनयोरद्यापि भाग्योदयः ॥६॥

यावत् स्वास्थ्यमयं मनाक् समयते तावत्तु कोल्हापुरे
संवर्तैकसहोदरः समजनि ग्रन्थिज्वरो भीषणः ।
येनाक्रान्तमुपागमत् पुरमिदं सन्त्यक्तकल्पं जनैः
क्वापि क्वापि परेतराजनगरीशाखापुरैकप्रभाम् ॥७॥

येन ह्यः समभाषि नाद्य स पुनर्येनाद्य सम्भाष्यते
नायं श्वः समवेक्ष्यते विधिवशात् कालालयं प्रस्थितः ।
इत्येवं पवनेरिताम्बुजदलान्तःस्थाम्बुबिन्दूपमा-
मायुर्भूपकुलावतंस ! भजतेऽद्यत्वे पुरेऽस्मिन् नृणाम् ॥८॥

कियन्त्यो वा नार्यः पतिविरहविक्लान्तनयनाः
कियन्तो बाप्याम्बाविघटनहता हन्त शिशवः ।
कियन्तो वा कान्ताविधुरिमपरित्रस्तमनसः
पुमांसः कालेऽस्मिन् नरपतिमणे ! शोकपिहिताः ॥९॥

मन्दिरमयि सुरमन्दिरसुन्दरमपहाय साम्प्रतं लोकाः ।
निवसन्ति भीतभीता अगणितशिशिरातपाः कुटीरेषु ॥१०॥

व्यतिकरेऽत्र महीपशिखामणे !
पुरमिदं व्यजहां सकुटुम्बकः ।
बहुषु सत्स्वपि वस्तुषु देहिनां
प्रियतरं ननु जीवितमेव यत् ॥११॥

सह्यशैलशिखरैकमण्डने चारुनीरसुसमीरराजिते ।
सम्प्रतीह निवसामि पत्तने सत्सुहृद् ! गगनवावडाभिधे ॥१२॥

अत्र दैववशतस्तु मत्पितुः शान्तिमामयमुपागतः प्रियाः ! ।
मङ्गलं च सकुटुम्बकस्य मे दुर्विधिः कथमपि प्रवर्तते ॥१३॥

लाभः शरद्यत्र सुहृत्प्रकाण्ड ! स्तोकोऽपि नो जातुचिदाविरस्ति ।
हानिस्तु दुर्दैवहतस्य कामं पदे पदे मे घटते नृपाल ! ॥१४॥

कवयः सुहृद्धुरीणाः ! पण्डितमणयो महाभागाः ! ।
श्रीनीलकण्ठमुख्याः कच्चित् कुशलान्विताः प्रेष्ठाः ॥१५॥

सर्वाङ्गीणं मङ्गलं वोऽवबोद्धुं
भूयो भूयो वाञ्छति स्वान्तमेतत् ।
आवेद्यैतत्तद्विधेयं नितान्तं
प्रीत्युत्फुल्लं शान्तनिर्विण्णभावम् ॥

इति प्रार्थयते विनयावनतो वशंवदः सुहृत्
अप्पाशर्मा राशिवडेकरः,
स० च० सम्पादकः ।

---

# पुराणरत्नमञ्जूषा

## शरद्वर्णनम्

### विष्णुपुराणम् ५।१०

तयोर्विहरतोरेवं रामकेशवयोर्व्रजे ।
प्रावृड् व्यतीता विकसत्सरोजा चाभवच्छरत् ॥१॥
अवापुस्तापमत्यर्थं शफर्यः पल्वलोदके ।
पुत्रक्षेत्रादिसक्तेन ममत्वेन यथा गृही ॥२॥
मयूरा मौनमातस्थुः परित्यक्तमदा वने ।
असारतां परिज्ञाय संसारस्येव योगिनः ॥३॥
उत्सृज्य जलसर्वस्वं विमलाः सितमूर्तयः ।
तत्यजुश्चाम्बरं मेघा गृहं विज्ञानिनो यथा ॥४॥
शरत्सूर्यांशुतप्तानि ययुः शोषं सरांसि च ।
बह्वालम्बममत्वेन हृदयानीव देहिनाम् ॥५॥
कुमुदैः शरदम्भांसि योग्यतालक्षणं ययुः ।
अवबोधैर्मनांसीव समत्वममलात्मनाम् ॥६॥
तारकाविमले व्योम्नि रराजाखण्डमण्डलः ।
चन्द्रश्चरमदेहात्मा योगी साधुकुले यथा ॥७॥
शनकैः शनकैस्तीरं तत्यजुश्च जलाशयाः ।
ममत्वं क्षेत्रपुत्रादिरूढमुच्चैर्यथा बुधाः ॥८॥
पूर्वं त्यक्तैः सरोऽम्भोभिर्हंसा योगं पुनर्ययुः ।
क्लेशैः कुयोगिनोऽशेषैरन्तरायहता इव ॥८॥

निभृतोऽभवदत्यर्थं समुद्रः स्तिमितोदकः ।
क्रमावाप्तमहायोगो निश्चलात्मा यथा यतिः ॥१०॥
सर्वत्रातिप्रसन्नानि सलिलानि तथाभवन् ।
ज्ञाते सर्वगते विष्णौ मनांसीव सुमेधसाम् ॥११॥
बभूव निर्मलं व्योम शरदा ध्वस्ततोयदम् ।
योगाग्निदग्धक्लेशौघं योगिनामिव मानसम् ॥१२॥
सूर्यांशुजनितं तापं निन्ये तारापतिः शमम् ।
अहंमानोद्भवं दुःखं विवेकः सुमहानिव ॥१३॥
नभसोऽब्दं भुवः पङ्कं काल्युष्यं चाम्भसः शरत् ।
इन्द्रियाणीन्द्रियार्थेभ्यः प्रत्याहार इवाहरत् ॥१४॥
प्राणायाम इवाम्भोभिः सरसां कृतपूरकैः ।
अभ्यस्यतेऽनुदिवसं रेचकाकुम्भकादिभिः ॥

---

## सुभाषितम्

[ श्रीवे वेङ्कटरामशर्मा विद्याभूषणः ]

श्रीमद्वसन्त ! भवदभ्युदयेन के वा
वृक्षाः सुपुण्यफलपल्लवशालिनः स्युः ।
अस्माकमल्पतपसां बदरीतरूणां
भ्रष्टं फलं निजशिखाश्च जनैर्विलूनाः ॥
भेको धावति गर्जिते नवघने हृष्टः पतङ्गं प्रति
भेकं धावति कालकूटगरलः सर्पो द्विजिह्वं शिखी ।
तं चाखेटिक एव धावति मुहुर्व्याघ्रस्तमाखेटिकं
चेत्यन्योन्यपरापकाररसिको नात्मक्षयं पश्यति ॥
( आखेटो मृगया, तेन चरतीत्याखेटिको व्याधः )

---

## तत्र तत्र विसर्गः स्यात्तकारो यत्र वर्तते

युगान्तरपत्रिकायां ( 25-6-1961 ) दृष्टम्—आपातः दृष्टिते इति ।
अत्र भाषान्तरकृता भुवनवरेण्यस्य सुनीतिकुमारचट्टोपाध्यायमहोदयस्य लेख आपातशब्दे विसर्जनीयः संयोजितः ।

---

# काश-महीरुह-कथा

[ श्रीफटिकलालदासः ]

आसीद्वनान्ते सरितः प्रतीरे समुच्चशीर्षः सुविशालकायः।
सुच्छायपत्रः शतवर्षदेश्यो न्यग्रोधनामा तरुराजिराजः ॥१॥
कदाचिदाहूय पदावलेपान्नीचं सकाशस्थितकाशमेकम्।
उच्चैरवादीत्स वटः सहासं, "कथं स्थितस्त्वं चिरवेपमानः ॥२॥
कथं च दभ्रं वहति प्रवाते पुनः पुनस्त्वं प्रणतिं विधत्से।
मत्पत्रसञ्चालनमात्रकृत्यो ममोष्णतापं कुरुते स दूरम् ॥३॥
त्वदीयमूलानि मृदूनि सन्ति दूरं मृदन्तर्न गतानि तानि।
अतोऽसि भूमौ न दृढप्रतिष्ठो बिभेषि तस्मान्निजनाशहेतोः ॥४॥
अभ्रंलिहं वीक्ष्य शिरो मदीयं करप्रदा मे रविचन्द्रताराः।
प्रक्षालयत्येव सुदूरगामिपदानि मेऽन्तःसलिलैर्धरित्री ॥५॥
तनुस्तनूस्ते न भरं सहेत लघोः खगस्यापि गतागतस्य।
शाखाः सुपत्रास्तु समाश्रयन्ति विशालपत्रा अपि ते शकुन्ताः ॥६॥
अमूलमूलं प्रकृतिर्मता या दुःखस्य मूलं तव नाम सा हि।
तयैव सृष्ट्वा तनुतां तनोस्ते गतं तु निन्दापदमत्र लोके ॥७॥
मा त्वं बिभैषीः सविधे स्थितो मे सदाश्रितानामहमस्मि पाता।
शाखाः प्रशाखाः परितो वितत्य रक्षामि नित्यं स्वजनैः समं त्वाम् ॥८॥
युष्माकमेकोऽस्ति महांस्तु दोषः प्रायेण यूयं विजनार्द्रभूमौ।
कृताधिवासाः, प्रबला हि यत्र वाता भृशं वः परिपीडयन्ति ॥९॥
वनस्पतीनामपि मादृशानां तत्रास्ति बाहुप्रभवा न शक्तिः।
भुजाश्रये नो निवसन्ति ये तु न वायुवेगाद्भयमस्ति तेषाम् ॥"१०॥
अन्तं गतायां वचनप्रवृत्तौ न्यग्रोधवृक्षं समुवाच काशः।
"यन्मङ्गलार्थी प्रतिभासि मे त्वं कृतज्ञतां मे सदयं गृहाण ॥११॥
स्थास्यामि नीचः सकलस्य निम्ने न तत्र दुःखं मम चास्ति किञ्चित्।
कृता प्रकृत्या खलु या दशा मे दृष्टो मया तत्र न कोऽपि दोषः ॥१२॥
क्षुद्रो नतश्चेन्महतां समीपे न क्वापि निन्दा भवतीह तस्य।
यत्कर्मभुक्त्यै जननं जनस्य तत्सिद्धिपूर्वं मरणं न तस्य ॥१३॥
आहन्ति वातः स यथा भवन्तं न मां तथा स प्रबलोऽपि गत्या।
भुग्नोऽपि नाहं तु कदापि भग्नः क्षणाच्च कायः सरलत्वमेति ॥१४॥

भवानियन्तं समयं हि यावत् स्थितोऽक्षतोऽभुग्नशिराः समर्थः।
कालोऽन्तकारी सकलस्य किन्तु प्रतीक्ष्यतां तर्हि तदन्तचेष्टाम् ॥"१५॥
इत्येवमुक्त्वा विरते हि तस्मिन् वचो गृहीत्वेव तदेव तस्य।
प्रचण्डवातः श्रुतिभेदिशब्दैः समागतोऽभूद्दिश उत्तरस्याः ॥१६॥
काशो नतः सञ्छयितश्चकम्पे वटस्तु तस्थौ चलपत्रशाखः।
प्रवृद्धरंहाः पुनरेव वातस्तमाजघान प्रसभं वलेन ॥१७॥
यस्यास्त शीर्षं गगनेऽभ्रभेदि मूलानि दूरं नितलं गतानि।
अहो सशब्दं निपपात सोऽपि संत्यज्य पृथ्वीं निजपादपीठम् ॥१८॥
महत्त्वमेकं नहि कारणं स्यात् कदापि मर्त्ये चिरजीवनस्य।
क्षुद्रो महान् वा सममेव याति पूर्णे हि काले शमनस्य वेश्म ॥१९॥

---

# छात्रहितैषिणी

कथासरित्सागरे दृश्यते [ १२।२५५-५९ ]—

वरं हालाहलं भुक्तमहिर्वद्धो वरं गले।
न पुनः स्त्रीषु विश्वासो मणिमन्त्राद्यगोचरः॥
कलङ्कयन्ति सन्मार्गजुषः परिभवन्त्यलम्।
वात्या इवातिचपलाः स्त्रियो भूरिरजोभृतः॥
तत्तासु न प्रसक्तव्यं धीर सत्त्वैः सुबुद्धिभिः।
शीलमभ्यसनीयं तु वीतरागपदाप्तये॥

इति। अत्र प्रसक्तव्यमिति पदं न प्रमाणपदवीमधिरोहति। वैयाकरणैः सञ्जधातुः पठ्यते। किति ङिति च तस्यानुषङ्गलोपो भवति। तव्यप्रत्ययस्तु नैव कित् वा ङित्, अत एव प्रसङ्क्तव्यमित्येव पदं साधु।

---

# कुञ्चिकयैनं भाययति

हेतुभये किम्? कुञ्चिकयैनं भाययतीत्युदाहरणम् महाभाष्ये कौमुद्यादिषु च दृश्यते। अत्र कुञ्चिकाशब्दस्य कोऽर्थ इति जिज्ञासा समुदेति बहूनां मानसे। प्राचीने काले शब्दस्यास्य सुप्रसिद्धत्वात् प्रायेण टीकाकृद्भिरस्य व्याख्यानं न कृतम्। कुञ्चिका केशवन्धविशेष इति वालमनोरमा। कुञ्चिका मत्स्यभेद इति मुग्धवोधव्याकरणस्य टीकाकृतः। अन्येषामपि टीकाकृतां व्याख्यानानि वाचकमहोदया विज्ञापयन्तु।

---

## वक्ष्यमाण-

भो भोः पाठकमहाभागाः, स एवायं वक्ष्यमाणशब्दो यस्य क्रियां रूपं शिरःशूलमजनयद् भवतां बाल्ये। इदानीमस्यार्थः कौतुकमेवोपजनयेत्। बहोः कालात्पूर्वं प्रसिद्धतम-"प्रवासि"पत्रिकायां रामानन्दचट्टोपाध्यायमहोदयेन विषयविशेषस्यालोचनप्रसङ्गेन कतिचित्कारणानि निर्दिश्योक्तं वक्ष्यमाणयुक्तिबलेनेति। सम्प्रति "रविवासरीय आनन्दबाजारपत्रिका"यां (March 12, 1961) पुस्तकपरिचयप्रसङ्गेन पुस्तकस्य नामादिकं निर्दिश्य प्रथमत एवोक्तम्—वक्ष्यमाण ग्रन्थेर इति। ततश्च कतिभ्यश्चित् पङ्क्तिभ्योऽनन्तरमुक्तम्—चण्डीदास ओ विद्यापति सम्पर्के दुटि स्वतन्त्र स्वयंसम्पूर्ण प्रबन्ध वक्ष्यमाण ग्रन्थे स्थान पेयेछे इति। वर्तमान-विद्यमान-प्रभृतिषु शब्देषु वर्तमानकाले मानांशो दृश्यते, अत एव वक्ष्यमाणशब्देऽपि तथैव स्यात्। 'आलोच्यमान'-शब्दोऽतीव साधारणः पामराणां प्रियः, मनीषिभिस्तदर्थे वक्ष्यमाणशब्द उपासनीय इत्यभिमानः।

---

## विक्रीतगवीरक्षणम्

### मनोस्ताप

You can both eat your cake and have it.

महादानसमाख्यस्य कथाग्रन्थस्य दशमपृष्ठे दृष्टम्—पत्नीओ शोके दुःखे मनोस्तापे भाङ्गिया पडियाछिलेन (पत्न्यपि शोकेन दुःखेन मनस्तापेन भग्ना संवृत्ता) इति। मनः ताप इति स्थिते युगपद् विसर्जनीयस्य सकारश्चोकारश्च।

---

## मूलं मृग्यते

जननी जन्मभूमिश्च स्वर्गादपि गरीयसी।

किमेतस्य मूलम्? बहुभिरेतस्य प्रथमार्धं पठ्यते—

इयं स्वर्णपुरी लङ्का न मे लक्ष्मण रोचते।

इति। तेन च रामायणगतोऽयं श्लोक इति प्रतीयते। रामायणस्य युद्धकाण्डे पुनर्नैवोपलभ्यतेऽयं श्लोकः। वाचकमहाभागाः कृपयास्याकरं निर्दिशन्तु।

---

# संस्कृतं गीतम्

महर्षिदेवेन्द्रनाथठाकुरविरचितसंस्कृतसङ्गीते दृश्यते ।

परिपूर्णमानन्दं
अङ्गविहीनं स्मर जगन्निधानं
श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो वाचं,
वागतीतं प्राणस्य प्राणं परं वरेण्यं । इति ।

( "देश"पत्रम्, रवीन्द्रजन्म शतवर्ष, १३६ पृः )

स्वरवर्णे परे मकारस्यानुस्वारादेशो न भवति, नाप्यवसाने । अतो गानस्य शुद्धं शरीरम्—

परिपूर्णमानन्दम्
अङ्गविहीनं स्मर जगन्निधानम् ।
श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो वाचं
वागतीतं प्राणस्य प्राणं परं वरेण्यम् । इति ।

———

# सम्यक्

केनचन सहृदयेन विलिखितम्—"अविस्मरणीयमिदं काव्यं भवभूतेरस्मिन् प्रसङ्गे यत्—

विद्वांसो वसुधातले परवचःश्लाघासु वाचंयमा
भूपालाः कमलाविलासमदिरोन्मीलन्मदाघूर्णिताः ।
आस्ये धास्यति कस्य लास्यमधुना धन्यस्य कामालस-
स्वर्वामाधरमाधुरीं विधुरयन् वाचां विलासो मम ॥" इति ।

पण्डितराजजगन्नाथेनाप्युक्तं—

उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्ययं निरवधि र्विपुला च पृथ्वी ॥ इति ।

———

# श्रद्धाञ्जली

श्रीमता सत्यजितरायेण चलच्चित्रेषु रवीन्द्रनाथाय श्रद्धाञ्जली निवेद्यते । तत्राञ्जले र्विशालत्वार्थं दीर्घ ईकार उपासितः ।

———

# अनुबन्धो ञकारः

[ श्रीक्षितीशचन्द्रचट्टोपाध्यायः ]

१। ञकारस्तावद् द्वितीयवर्गस्यान्तिमो वर्णः। अत एव यत्र कार्यद्वयं भवति तत्र ञकारोऽनुबन्ध आसज्यते। अत एव स्वरितञितः कर्त्रभिप्राये क्रियाफल इति सूत्रे ञित उपादानम्। ञानुबन्धा धातवः कर्त्रभिप्राये क्रियाफल आत्मनेपदिनोऽन्यत्र परस्मैपदिन इति द्वैविध्यम्। नञुञ् सुञां ञकारोऽप्येवम्। नञ् कदाचिदकारो भवति कदाचिन्नकार एवावतिष्ठते। उञ् सुञ् च कदाचिद्ध्रस्वौ श्रूयेते कदाचित् पुनर्दीर्घत्वं भजेते इति द्वैविध्यम्। धातुपाठे ञ्यनुबन्धेभ्यो धातुभ्योऽपि वर्तमानेऽतीते च क्तप्रत्ययो भवतीति द्वैविध्यम्। अत एव ञीतो धातोर्वर्तमान एव क्तप्रत्ययो भवति न पुनर्भूत इति मतं नादरणीयम्।

२। अञ्चधातौ ञकारो वर्तते। अञ्चु गतौ इति धातुपाठ आम्नायते। गतिश्च वृद्धिं सूचयति। अत एव वृद्ध्यर्थं ञकार उपादीयते। अत एव अचो ञ्णिति अत उपधाया इति सूत्रद्वयम्। ञकारो वर्गस्यान्तिमो वर्णः। अत एवान्त्यस्योपान्त्यस्य च वृद्धिर्ञकारेण सूच्यते।

३। प्राञ्च शब्दे ञकारो वर्तते, अत एव ञकारेणानुबन्धेनादेरुदात्तत्वं सूच्यते, तद्धितेषु चादेर्वृद्धिः।

---

# उभयतोमुखाः शब्दाः

## उच्छ्वासित-

मेघसन्देशे दृश्यते—

यत्र स्त्रीणां प्रियतमभुजोच्छ्वासितालिङ्गनाना-
मङ्गग्लानिं सुरतजनितां तन्तुजालावलम्बाः।
त्वत्संरोधापगमविशदैश्चन्द्रपादैर्निशीथे
व्यालुम्पन्ति स्फुटजललवस्यन्दिनश्चन्द्रकान्ताः॥

इति। अत्र प्रियतमभुजोच्छ्वासितालिङ्गनानामित्यस्यार्थः—प्रियतमस्य भुजैः उच्छ्वासितानि श्रान्त्या जलसेकाय(?) वा शिथिलितानि आलिङ्गनानि यासां तासामिति मल्लिनाथः। प्रियतमानां भुजैः सञ्जातोच्छ्वासं यथा तथा गाढमुपगूढानाम् इति तु विद्युल्लता।

———

## समस्यापूर्तिः

[ श्रीवासुदेव-नागेशशास्त्री ]

अमरपतिरहल्यासुन्दरीसङ्गमागात्
कुशिकतनुजवर्यो मेनकायां च रेमे।
द्विजपतिरपि चन्द्रो गौरवीमाप पत्नी-
मुचितमनुचितं वा वेत्ति कः पण्डितोऽपि॥

———

## भरद्वाजसमासः

कथासरित्सागरे दृश्यते—

ततः स भोगान् भुञ्जानो ब्राह्मणेभ्यो ददद्वसु।
भृत्येभ्यश्च सुहृद्भ्यश्च यावदास्तेऽत्र सात्त्विकः॥३५।३९

इति। अत्र ददद्वस्विति पदद्वयं लक्षणीयम्। अनयोरेकपदीभावे ददद्वसुरिति वैदिको भरद्वाजसमासः ( Governing Compound ) स्यात्।

———

मिथ्या वदन्ति दोषं हि दुर्जना गुणमत्सराः।
उत्तमस्य विशेषेण कलङ्कोत्पादको जनः॥ कथासरित्सागर २४।२०५

———

## शब्दश्लेषस्योदाहरणम्

Is life worth living ?
That depends on the liver.

प्रश्नः। अपि प्राणा धारयितुं योग्याः।
उत्तरम्। तत् खलु धारयितरि ( यकृति ) आयतते।
अत्र श्लेषमहिम्ना liver शब्दतोऽर्थद्वयस्य प्रतीतिः।

———

# प्रत्ययाद्यनुबन्धविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

[ पूर्वतोऽनुवर्तते ]

इमनिच् ( तद्धितः )। पृथ्वादिभ्य इमनिज् वा। वर्णदृढादिभ्यः ष्यञ् च [ ५।१।१२२-१२३ ] इति सूत्राभ्यामिमनिच् प्रत्ययो विहितः। तत्र इकार उच्चारणार्थः प्रथमाक्षरानुरोधात्। चकारः स्वरार्थः।

इयङ् ( आदेशः )। अचि श्नुधातुभ्रुवां य्वोरियङुवङौ [ ६।४।७७ ] इति सूत्रेणेयङ् विहितः। तत्र ङकारोऽन्त्यादेशार्थः।

इरेच्—लिंटस्तझयोरेशिरेच् [ ३।४।८१ ]। चकारः स्वरार्थः।

इलच् ( तद्धितः )। फेनादिलच। लोमादिपामादिपिच्छादिभ्यः शनेलचः [ ५।२।९९-१०० ] देशे लुविलचौ च [ ५।२।१०५ ] तुन्दादिभ्य इलच [ ५।२।११७ ] वनिलचौ च [ ५।३।७९ ] इति सूत्रैरिलच्प्रत्ययो विहितः। चकारः स्वरार्थः।

इश्। ( आदेशः )। इदम इश् [ ५।३।३ ]। शकारः सर्वादेशार्थः।

इष्ठन् ( तद्धितः )। अतिशायने तमविष्ठनौ [ ५।३।५५ ]। नकार आद्युदात्तार्थः।

इष्णुच् ( कृत् )। अलंकृञ् निराकृञ् प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतवृधसहचर इष्णुच् [३।२।१३६]। इष्णुचश्चकारोऽन्तोदात्तार्थः।

ईकक् ( तद्धितः )। शक्तियष्ट्योरीकक् [ ४।४।५९ ]। कर्कलोहितादीकक् [५।३।११० ]। ककार आदिवृद्धयर्थः, अन्तोदात्तार्थश्च।

ईकन् ( तद्धितः )। खार्या ईकन् [ ५।१।३३ ]। नकारः परिनिष्ठितपदस्याद्युदात्तार्थः।

ईट् ( आगमः )। ब्रुव ईट् [ ७।३।९३ ]। ब्रू इत्यस्मादुत्तरस्य हलादेः पितः सार्वधातुकस्येडागमो भवति। काशिका। टित्त्वाद् हलादेः पितः सार्वधातुकस्यादौ ईडागमः।

ईत्। ईदूदेद्द्विवचनं प्रगृह्यम् [ १।१।११ ]। तपरकरणमसन्देहार्थमिति काशिका।

ईत् ( अनुबन्धः )। श्वीदितो निष्ठायाम् [ ७।२।१४ ]। श्वयतेरीदितश्च निष्ठायामिडागमो न भवति। अस्य च प्रकृष्टमुदाहरणं दीप्तः दीप्तवान्।

दीपधातोरीकारमादायानुबन्धः कृत इति प्रतिभाति।

ईयङ् ( प्रत्ययः )। ऋतेरीयङ् [ ३।१।२९ ]। अत्र ङकारो धातोरात्मनेपदं सूचयति।

प्रत्यङ् ङात्मेति पदे ङकारद्वयं विलसति। अत एव ङकारेणात्मनेपदं बोध्यते।

———

# शाङ्करभाष्यपाठविमर्शः

## २। नासीद्···नावक्ष्यत् १।२।१

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

"नैवेह किञ्चनाग्र आसीन्मृत्युनैवेदमावृतम् आसीदि"ति बृहदारण्यकश्रुतिं व्याचक्षाणेन भाष्यकृतोक्तम् यदि हि किञ्चिदपि नासीद्येनाव्रियते यच्चाव्रियते तदा नावक्ष्यन्मृत्युनैवेदमावृतमिति। न हि भवति गगनकुसुमच्छन्नो वन्ध्यापुत्र इति। इति। अत्र लिङ्-निमित्ते लृङ् क्रियातिपत्तौ [ ३।३।१५९ ] इति सूत्रेण अवक्ष्यत् इत्यत्र लृङ्। परं तेनैव सूत्रेण आसीदित्यत्रापि लृङ् प्राप्नोति। यदि हि किञ्चिदेव नाभविष्यद् येनाव्रियेत यच्चाव्रियेतेति पाठः समीचीनतया प्रतिभाति।

शाबरभाष्ये दृश्यते—न स्यात् प्रमाणं यदि पञ्चैव प्रमाणान्यभविष्यन् [ चौखम्बा पृः १२ ]। अत्रापि नाभविष्यत् प्रमाणमिति समीचीनः स्यात्। एवं शाबर-भाष्येऽन्यत्र च दृश्यते—यदि स्यादुपलभ्येतेति। अत्रापि क्रिययोर्लिङ् न प्रशस्त इति प्रतिभाति।

नैषधचरिते [ ३।४० ] दृश्यते—

यदि त्रिलोकी गणनापरा स्यात्तस्याः समाप्तिर्यदि नायुषः स्यात्।
पारेपरार्धं गणितं यदि स्याद् गणेयनिःशेषगुणोऽपि स स्यात् ॥

इति। अत्र टीकाकृद्भिरुक्तं क्रियातिपत्तेरविवक्षितत्वाल्लिङ्। एवं—

दृशौ किमस्याश्चपलस्वभावे न दूरमाक्रम्य मिथो मिलेताम्।
न चेत्कृतः स्यादनयोः प्रयाणे विघ्नः श्रवःकूपनिपातभीत्या ॥२।२

इति नैषधपद्येऽपि टीकाकृद्भिर्लिङ्प्रयोगस्तथैव समर्थितः।

उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम्।
तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥

इत्यत्र माघेन [ ३।८ ] लिङ् प्रयुक्तः।

पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम्।
ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥

इति कालिदासपद्येऽप्येवम्। एवं काव्यादर्शेऽपि [२।२५]—

यदि किञ्चिद् भवेत्पद्मं सुभ्रु विभ्रान्तलोचनम्।
तत्ते मुखश्रियं धत्ताम्। इत्यत्र।

———

# ऋतुसंहारसमीक्षा

[ श्रीमुकुन्दमाधवशर्मा, एम० ए०, काव्यतीर्थः ]

प्रकृतिसौन्दर्याणि ललितपदावलीभिस्तूलिकाभिरिव मानसपटे यश्चित्रकर इव चित्रयति, लोकोत्तराह्लादरसेन स्नपयतीव यः सहृदयानां मनांसि, आकर्षयति यो भावान् नवनवविलाससमुल्लसितान् कोमलकान्तकविताकलरवेण, स एव महाकविः कालिदासः। तस्यैव कविकुलललामभूतस्य कालिदासस्यान्यतमा सुमनोहरा कृति ऋतुसंहारो नाम काव्यम्।

काव्येऽस्मिन् षट्सु सर्गेषु षण्णामृतूनां ग्रीष्मादीनां वर्णनोपलभ्यते। ऋतुवर्णनप्रसङ्गेन च प्रकृतिराज्यस्य भिन्ना भिन्ना समवस्था तथा तत्तद्तौ मानवानां मनोराज्यस्य भिन्ना भिन्ना प्रतिक्रिया, अथच प्रकृतिराज्यगतानां विभिन्नपशूनां व्यवहारविचित्रता महाकविसुलभकमनीयकथाभि र्वर्णितो वर्त्तते। एवंरीत्या ऋतूनां वर्णनमन्येष्वपि महाकाव्येषु प्रायशो लभ्यते। परन्त्वस्मिन् वर्णन एको विशेषः परिलक्ष्यते। अत्र खलु वर्णयिता कश्चन नायकः स्त्रीयनायिकामुद्दिश्य प्रकृतिं वर्णयंस्तामेव नायिकां नितरामनुरागवतीं विदधातीति प्रतिभाति। हृदयतन्त्रीं कम्पयितुमलं यः कोऽपि भावो रतिभावमेव पुष्णातितराम्। तथाचाङ्गलकविप्रवरेण कोलरिजेनाप्युच्यते—

All thoughts, all passions, all delights
Whatever stirs this mortal frame,
All are but ministers of Love,
And feed his sacred flame.

एवं चास्मिन्नपि काव्येऽनन्यसुलभा काचन सरसरमणीयता समुल्लसति।

कालिदासः खलु श्रृङ्गाररसपक्षपाती श्रृङ्गाररसप्रजापतिः सदैव स्वीयां सरस्वतीं श्रृङ्गाररसनिर्भरामेव विदधाति। अत्रापि च समग्र एव काव्ये श्रृङ्गार एव रसः। परन्तु प्रयोजनीयविभावादीनां साकल्येन वर्णनमत्र द्वित्रेषु पञ्चषेषु वा पद्येषु लभ्यते। तद्यथा—

पयोधरैर्भीमगभीरनिःस्वनैस्तडिद्भिरुद्वेजितचेतसो भृशम्।
कृतापराधानपि योषितः प्रियान् परिष्वजन्ते शयने निरन्तरम्॥

(वर्षा-२२) इत्यत्र।

परन्तु,

गात्राणि कालीयकचर्च्चितानि सपत्रलेखानि मुखाम्बुजानि।
शिरांसि कालागुरुधूपितानि कुर्वन्ति नार्यः सुरतोत्सवाय॥ (हेमन्त-५)

इत्यत्र यथा केवलस्यालम्बनविभावस्य वर्णनं तथैव यत्र यत्र विभावाद्यन्यतमस्य वर्णनं तत्र तत्र झटित्यन्यसमाक्षेपेणैव रसोपलब्धिः। यथाह दर्पणकारः—

सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत्।
झटित्यन्यसमाक्षेपे तदा दोषो न विद्यते॥ इति।

अथवैवंविधेषु स्थलेषु प्रबन्धरसेनैव रसवत्त्वमङ्गीकरणीयम्। प्रबन्धे च वक्ता दयित एव नायकः, नायिका च बोद्धव्या दयितैव। शृङ्गाररसोऽपि हि सहृदयानामभिमततमः। उच्यते चानन्दवर्धनाचार्येण "शृङ्गाररसो हि संसारिणां नियमेनानुभवविषयत्वात् सर्वरसेभ्यः* कमनीयतया प्रधानभूतः।" इति। तेनैव चोक्तं "शृङ्गार एव मधुरः परः प्रह्लादनो रसः" इत्यपि। एवं मधुररसान्वितम् ऋतुसंहारकाव्यमपि सहृदयानां मनांसि नितरामेवावर्जयति। तथाहि भीष्ममपि ग्रीष्मं कविः कालिदासः कान्ताकर्णकुहर आकलयति—

प्रचण्डसूर्यः स्पृहणीयचन्द्रमाः सदावगाहक्षतवारिसञ्चयः।
दिनान्तरम्योऽभ्युपशान्तमन्मथो निदाघकालोऽयमुपागतः प्रिये॥ इति।

पुनरपि वर्षावर्णनप्रसङ्गे कान्ताया मनस्यपि रतिभावमिव जागरयन् गायति—

कुवलयदलनीलैरुन्नतैस्तोयनम्रैर्मृदुपवनविधूतैर्मन्दमन्दं चलद्भिः।
अपहृतमिव चेतस्तोयदैः सेन्द्रचापैः पथिकजनवधूनां तद्वियोगाकुलानाम्॥ इति।

एवंक्रमेण षट्स्वेव ऋतुषु नायकनायिकाजनमनसो व्यवहारवैलक्षण्यं तथा भाववैलक्षण्यं वर्णयन्नन्तिमे सर्गे कामिजनानामभिमततमम् ऋतुं वसन्तमालिखन् गायति—

कान्ताननद्युतिमुषामचिरोद्गतानां
शोभां परां कुरवकद्रुममञ्जरीणाम्।
दृष्ट्वा प्रिये! सहृदयस्य भवेन्न कस्य
कन्दर्पबाणनिकरैर्व्यथितं हि चेतः॥ इति।

एवंविधेषु न केवलं कुरवकादीनामेव वर्णनं न च केवलं कामिजनानां कन्दर्पबाणव्रणकण्डूतिवर्णनं परन्तु वक्तुर्नायकस्य नायिकासविधे प्रीतियाचनमपि विस्पष्टं प्रतिभाति। एवं समग्रमपि काव्यं काचन हृद्या प्रणयगीतिरिति निश्चीयते। किञ्च सरलसरलैर्ललितललितैः प्रसादगुणभूयिष्ठैर्वैदर्भीरीतिसरसैः पदैरर्थैश्च शोभितैतादृश्येव कविता सहृदयानां मनांस्यावर्जयतितराम्।

ऋतुसंहारकाव्यं कालिदासेनैव विरचितमित्यन्यथापि ख्यापयितुं शक्यते। एवंरीत्या सकलर्तूनामेकत्र वर्णनम् ऋतुसंहारतः पूर्वं केवलेष्वायुर्वेदग्रन्थेष्वेव लभ्यते। तद्यथा चरकसंहितायां सूत्रस्थाने षष्ठाध्याये हेमन्तादिषु ऋतुषु जनैः कीदृशो व्यवहारः कर्तव्य इति निर्दिश्यते। तत्र यथा प्रधानतः प्रकृतिवर्णनं नास्ति लोकव्यवहार एव शास्त्रेण विहितः, तथा कालिदासीयकाव्येऽपि नायकनायिकाव्यवहार एव प्रधानो विषयः। ऋतुसंहाररचनार्थं कवेरादर्शस्थानीया चरकसंहितैवासीदित्यस्माकं दृढा मतिः। किं बहुना—

* 'इतररसेभ्यः' इति 'सर्वरसेषु' इति वा समीचीनम्। मञ्जूषासम्पादकः।

प्रकामकामैर्युवभिः सुनिर्दयं निशासु दीर्घास्वभिरामिता भृशम्।
भ्रमन्ति मन्दं श्रमखेदितोरसः क्षपावसाने नवयौवनाः स्त्रियः॥

इति ऋतुसंहारपद्यम्।

आलिङ्ग्य गुरुदिग्धाङ्गीं सुप्यात् समदमन्मथः।
प्रकामञ्च निषेवेत मैथुनं शिशिरागमे॥

इति चरकसंहिताश्लोकमेव स्मारयति। न केवलमत्रार्थयोरेव सामञ्जस्यं परन्तु शब्दानामपि भृशं सामञ्जस्यमस्तीति सूरिभिर्निभालनीयम्। एवमेवायुर्वेदग्रन्थैर्ऋतुसंहारकाव्यस्य भूयशः सामञ्जस्यमस्ति। तेन च ऋतुसंहारकर्तुरायुर्वेदशास्त्रे सविशेषं प्रावीण्यमासीदिति निश्चीयते। परन्तु कालिदासस्याप्यायुर्वेदशास्त्रे पाण्डित्यमासीदित्यन्यतोऽपि ज्ञातुं शक्यते। तथाहि मेघदूतकाव्ये—

तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टि-
र्जम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः।
अन्तःसारं घन तुलयितुं नानिलः शक्ष्यति त्वां
रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय॥

इत्यस्मिन् पद्ये "आदौ वमनशोधितस्य पुंसः पश्चाच्छ्लेष्मशोषणाय लघुतिक्तकषायाम्बुपानाल्लब्धबलस्य वातप्रकोपो न स्यादि"ति मल्लिनाथनिर्दिष्टो व्यङ्ग्यार्थस्तु कालिदासस्यायुर्वेदशास्त्रे वैदग्ध्यमेव सूचयति। एवमायुर्वेदशास्त्रनिष्णातस्य कालिदासस्यैव ऋतुसंहारकाव्यमिति महता कण्ठेनोद्घोषयितुं शक्यते।

अपरा च युक्तिः। प्रायश ऋतुसंहारपद्यानां प्रतिध्वनिरन्येषु सर्वसम्मतेषु कालिदासीयकाव्येषु श्रूयते। तद्यथा ग्रीष्मवर्णनान्तर्गतस्य—

प्रचण्डसूर्यः स्पृहणीयचन्द्रमाः सदावगाहक्षतवारिसञ्चयः।
दिनान्तरम्योऽभ्युपशान्तमन्मथो निदाघकालोऽयमुपागतः प्रिये॥

इति वचनस्याभिज्ञानशाकुन्तले—

इममेव तावदचिरप्रवृत्तमुपभोगक्षमं ग्रीष्मसमयमधिकृत्य गीयताम्। सम्प्रति हि—

सुभगसलिलावगाहाः पाटलसंसर्गसुरभिवनवाताः।
प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः॥ इत्यंशे।

पुनरप्यपरा काचन युक्तिर्यथा—ऋतुवर्णनप्रसङ्गे कालिदासो न केवलं नायकनायिकाव्यवहारमेव वर्णयति, अपि तु तिर्यग्योनिगतानामपि व्यवहारं महता नैपुण्येन स चित्रयति। तादृग्वर्णनन्तु रसाभासपर्यवसायि विशेषतः कालिदासीयकाव्येष्वेव बाहुल्येन लभ्यते। तथाहि—

पुंस्कोकिलश्चूतरसासवेन मत्तः प्रियां चुम्बति रागहृष्टः ।
गुञ्जन् द्विरेफोऽप्ययमम्बुजस्थः प्रियः प्रियायाः प्रकरोति चाटुम् ॥

इति ऋतुसंहारपद्यं तस्यैव कालिदासस्य भवितुमर्हति यः खलु कुमारसम्भवकाव्येऽकाल-वसन्तवर्णनप्रसङ्गे गायति—

मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः ।
शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥ इति ।

परन्तु केचन पण्डिता ऋतुसंहाकाव्यं कालिदासेनैव विरचितमिति न स्वीकुर्वन्ति। तेषां मतेनान्येभ्यः कालिदासीयकाव्येभ्यो भावगाम्भीर्यविषये लघीयान् एव ऋतुसंहारः। तथाहि मल्लिनाथेनापि ऋतुसंहारस्य न काचन टीका विरचितेति तमेव पक्षं द्रढयति। आलंकारिकैरपि कालिदासेतरजनरचितत्वेन ऋतुसंहारतः पद्यानि नोदाह्रियन्ते। विशेषतश्च मानवजीवनविषये कालिदासस्य न काचन ज्ञानगम्भीरोक्तिः काव्येऽस्मिन्नुपलभ्यत इत्येतास्तेषां युक्तयः। परमिदमत्रावधेयं यत् कविजीवनस्य प्रथमावस्थायां यौवनदशायामेवैतत् काव्यं कविना विरचितमासीदिति कृत्वा रचनाया प्रौढिरन्यत्र सुदुर्लभा। कस्यचन कवेः सर्वास्वेव रचनासु समपरिमाणमेव गौरवं स्यादित्येवंविधं न किमपि राजशासनं वर्तते। तथाह्यन्येषामपि कवीनां रचनासु तारतम्यं विस्पष्टमस्माभिः परिलक्ष्यते। तद्यथा भवभूतिरचितेषु नाटकेषु। काव्यमेतदतीव सुसरलमनायासगम्यं न कामपि व्याख्यामपेक्षते इति मल्लिनाथेन वृथा प्रयत्नो नैव विहितः। आलंकारिकाणां तथान्येषामपि पण्डितानां प्रायशः कठिनविषयेष्वेव पक्षपातिता। अतो हेतोः सुसरलादस्मात् काव्यात् पद्यानि तैर्न गृहीतानि इत्यनुमेयम्। अन्यत्र त्वस्यापि काव्यस्य प्रभावः स्फुट एव। तथाहि पञ्चमखृष्टीयशतके विरचितस्य वत्सभट्टिकृतस्य मन्दशोरशिलालेखस्य त्रयस्त्रिंशत्तमं पद्यं "स्मरवशगततरुणजनवल्लभाङ्गने"त्यादिकम् ऋतुसंहारस्य शिशिरवर्णनस्य "पयोधरैः कुङ्कुमरागपिञ्जरं"रित्यादिकं पद्यमेवानुकरोति।

सत्यमेतद् यन्मेघदूतादिकाव्येष्वर्थान्तरन्यासालंकारद्वारेण प्रायशः कालिदासेन ज्ञानगर्भाणि वचनानि निबद्धानि वर्तन्ते। परन्त्विदमत्रावधेयं यद् ऋतुसंहारकाव्ये कालिदासो विशेषतः सौन्दर्यमेव परिस्फुटयति, अलंकाराणां वैचित्र्यमेव प्रकटयति, तत्तदृतुषु कामिजनव्यवहारमेव वर्णयति। तथाहि कालिदासस्य नवीने वयसि ज्ञानगभीराणि वचनानि नैव संभवन्ति, स खलु जातमात्रमेव वृद्ध आसीदित्यपि न शङ्कनीयम्। ज्ञानगर्भवचनकथनार्थमवकाशोऽपि नास्मिन् काव्ये वर्तते इत्यपि ध्येयम्।

---

# ब्रह्मसूत्रमितभाष्यम्

[ श्रीचारुकृष्णदर्शनाचार्यः ]

## क्षत्रियत्वगतेश्च ।१।३।३५

"जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस, स ह सर्वत आवसथान् मापयाञ्चक्रे सर्वत एव मेऽन्नमत्स्यन्ति" [ छा० ४।१।१ ] इति श्रुतौ जानश्रुते र्बह्वर्थदातृत्व-बह्वन्नपक्तृत्वसर्वभोज्यान्नत्वलिङ्गेभ्यः "स ह सञ्जिहान एव क्षत्तारमुवाच" [छा० ४।१।५] इति क्षत्तृप्रेषणत्वलिङ्गाच्च क्षत्रियत्वज्ञानादपि न शूद्रत्वमित्यर्थः ॥३५॥

## उत्तरत्र चैत्ररथेन लिङ्गात् ।१।३।३६

अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे [ छा० ४।३।५ ] ब्रह्मचारिन्नेदमुपास्महे दत्तास्मै भिक्षाम् [ छा० ४।३।७ ] इत्युत्तरस्मिन् ग्रन्थे जानश्रुतिं प्रत्युपदिश्यमानायामेव संवर्गविद्यायां कापेयाभिप्रतारिणोर्ब्रह्मचारिणश्च सम्बन्धो दृश्यते, तत्राभिप्रतारी क्षत्रियः कापेयब्रह्मचारिणौ च ब्राह्मणौ। अतो ब्राह्मणस्य क्षत्रियस्य चास्यां विद्यायां सम्बन्धदर्शनाज् जानश्रुतेरपि क्षत्रियत्वमेवावगतं न शूद्रत्वम्। अभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च कुतः प्राप्तं तत्राह—लिङ्गादिति। उक्तं श्रुतौ कापेयसाहचर्यमभिप्रतारिणो दृश्यते तत एव लिङ्गात् तस्य कापेयसम्बन्धो ज्ञायते, कापेयसम्बन्धस्य च चैत्ररथत्वम् "एतेन वैते चैत्ररथं कापेया अयाजयन्" [ ताण्ड्य० ब्रा० २०।१२।५ ] इति श्रुत्यन्तरादवगतम्, अभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च "तस्माच्चैत्ररथो नामैकः क्षत्रपतिरजायते"ति श्रुतेरवगम्यते ॥३६॥

## संस्कारपरामर्शात् तदभावाभिलापाच्च ।१।३।३७

ब्रह्मविद्योपदेशप्रकरणेषु ह्युपनयनसंस्कारपरामर्शो दृश्यते "समिधं सोम्याहरोप त्वा नेष्ये" [ छा० ४।४।५ ] "तं होपनिन्ये" [ शतपथब्रा० ११।५।३।१३ ] इति। शूद्रस्योपनयनाभावश्च कथ्यते, "न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति" [मनु १०।१२६] "चतुर्थ एकजातिस्तु शूद्रः" [ मनु १०।४ ] इति। ॥३७॥

## तदभावनिर्धारणे च प्रवृत्तेः ।१।३।३८

सत्यकामस्य सत्यनिष्ठया शूद्रत्वाभावनिश्चये सति, उपनीय विद्याप्रदानप्रवृत्तिदर्शनात् न शूद्रस्याधिकारो विद्यायामिति प्राप्यते। तथाच श्रुतिः "नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोप त्वा नेष्ये न सत्यादगा इति" [ छा० ४।४।५ ] इति। ॥३८॥

## श्रवणाध्ययनार्थप्रतिषेधात् ।१।३।३९

"पद्यु ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम्" इति शूद्रसमीपेऽध्ययननिषेधाच्छ्रवणाभावेऽध्ययनाभावादर्थादर्थप्रतिपत्तिरपि प्रतिषिध्यते इति ॥३९॥

स्मृतेश्च ।१।३।४०

"अथ हास्य वेदमुपश्रृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेदः" [ गौतमधर्मसूत्रे २।१२।३ ] इति स्मृतेश्च शूद्रस्य वेदे श्रवणोच्चारणधारणेषु दण्डविधानाच्छ्रवणादीनां प्रतिषेधान्नाधिकारो ब्रह्मविद्यायां शूद्रस्येति स्थितम् ॥४०॥

कम्पनात् ।१।३।४१

प्रसङ्गादागतं देवताशूद्रयोरधिकारानधिकारं समाप्य प्रकृतमाचष्टे—कम्पनादिति। काठक उक्तम् "यदिदं किञ्च जगत् सर्वं प्राण एजति निःसृतम्। महद्भयं वज्रमुद्यतं य एतद् विदुरमृतास्ते भवन्ति ॥" [ कठ० २।६।२ ] इति। अत्र प्राणशब्देन पञ्चवृत्तिकः प्राणो लक्ष्यते ब्रह्म वेति संशये पञ्चवृत्तिकः प्राण एव प्राप्यते तदधीनत्वात् सर्वस्य जगतः "अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम्" [ प्रश्न० २।६] इति, प्रभावेण च रुद्रो भीषणः प्राण उद्यतं वज्रमिव, "इन्द्र त्वं प्राणस्तेजसा रुद्रोऽसि" [ प्रश्न० २।९ ] इति। अमृतत्वप्राप्तिश्च तज्ज्ञानादेव "अध्यात्म्यं चैव प्राणस्य विज्ञायामृतमश्नुते" [ प्रश्न ३।१२ ] इति श्रुतिभ्यामिति प्राप्त आह—कम्पनादिति। प्राणहेतुकसर्वजगत्कम्पनात् प्राणपदेनात्र ब्रह्मैवोच्यते तस्यैव परमशासितृत्वात् "एतस्यैव प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" [ बृ० ३।८।९ ] इति श्रुतेः। अत्रापि—

"भयादस्याग्निस्तपति भयात् तपति सूर्यः।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥" [ कठ २। ]

तैत्तिरीये च आनन्दमयस्य ब्रह्मण एवोपक्रमे "भीषास्माद् वातः पवते" [ तै० २।८ ] इति, अतोऽस्यैव वज्रित्वेन रूपणं युक्तम्। अमृतभवनं च प्रसिद्धं ब्रह्मण एवोपासनात् "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" [ वाजसनेयी संहिता ३१।१८] "य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति" [बृ० ४।४।१४] परमं ब्रह्म वेद ब्रह्मैव भवति...विमुक्तोऽमृतो भवति [ मु० ३।२।१० ] इति श्रुतिभ्यः। प्राणस्य पञ्चवृत्तिकस्य भीषणत्वादिकं न निरपेक्षं परमापेक्षिकमेव, ब्रह्मजातित्वात् तस्य। प्राणोपक्रमे "भगवन् कुत एष प्राणो जायते" [ प्रश्न० ३।११ ] इति प्रश्ने "आत्मन एष प्राणो जायते" [ प्रश्न० ३।३ ] इत्युत्तरश्रुतेः। "प्राणस्य प्राणमुत चक्षुषश्चक्षुः" [ बृ० ४।४।१८ ] इति श्रुतौ च ब्रह्मणः प्राणादेरपि प्राणत्वोक्तेः। प्राणस्यापि प्रलये विनाशात् तस्यापि ब्रह्मणः कल्पनान्न पञ्चवृत्तिकप्राणस्य ब्रह्मत्वम्। अमृतत्वं च गौणमेव प्राणसमकल्पिकत्वात्। न खलु स्वयं विनष्टः स्वोपासकं मोक्षं दातुमीष्टे। इति ब्रह्मैवेति सिद्धम् ॥४१॥

( क्रमशः )

———

# वेदार्थविमर्शः

( पूर्वतोऽनुवर्तते )

कियान्तर्हृदा अन्तर्वर्तिहृदयभागेन। हृदयशब्दो यूपबोधकः। तत्रैवानुवाके "हृदयं यूप" इत्युक्तः। यूपत्वञ्चैतरेयानुसारेण संपातसम्बन्धियाम्योत्तरवृत्तभागस्येति यूपार्थवादब्राह्मणे प्रपञ्चितमन्यत्र। एवं च तस्य याम्योत्तरवृत्तगतस्योदयात्पूर्ववर्तिभागस्य हृदयत्वं तेन तद्द्वारा मनसा। मनःशब्द उषसमाह। उषसः शकटरूपेण वर्णना वेदे। तस्या उषसो मण्डलपार्श्वद्वयेऽर्थादुदयात्पूर्वमस्तोत्तरं तिर्यक्प्रसारितेजोरूपेण मध्यवर्तिबिम्ब-सम्बन्धे ईषाद्वयस्य युगस्थाने मिलनात्पश्चाच्च वियोजनेन < एवंरूपशकटाकारकल्पनसम्भवे-नोषसि शकटत्वकल्पना। भेदेन व्यवहारे उषसः शकटमिति। अत एवेन्द्रेण तच्छकटभेदे उषसस्ततोऽपसरणमिति मन्त्र उक्तम् "अथोषा अनसः सरत्संपिष्टादह बिभ्युषी। नि यत्सीं शिश्नथद् वृषे"ति सङ्गच्छते। उषसो विवाहबोधके सूर्याविवाहसूक्ते उक्तं "मनो अस्या अन आसीत्", अन्यत्र च "अनो मनस्मयं सूर्यारोहत्प्रयती पतिम्" इत्यत्र चानोमनसोर-भेद उच्यते उषसश्चानोमनआदीनां स्वरूपाभेदेनोषसमेव प्रकृते मनस्त्वेन गृहीत्वोच्यते 'मनसा' उषोरूपेण "पूयमाना" गच्छन्त्यः पतन्त्यो 'घृतस्य' तेजसो धारा अभिचाकशीमि पश्यामीत्युक्तिः। अत्र घृतधाराणां मनसा पूयमानत्ववचनेन तासां घृतधारावत् पृथिव्यादि-सम्बन्धगतिरुक्ता भवति। यथा घृतस्य जलस्य धाराः पर्जन्यरूपाः पृथिव्यनुगा भवन्त्येव-मिमा घृतस्य तेजसो धाराः पूयमानाः पश्यामीति। एषा या गतिः साऽरनेमिरूपा रश्मीनां यथा चक्रे विद्यमानानामराणां नाभितो निर्गमो नेम्यां प्राप्तिरिति कल्पनायामरनेमिभावः। नेमितो निर्गमो नाभौ प्राप्तिरिति कल्पनायामरनाभिभावः। एवं मण्डलतो विनिर्गच्छतां पृथिव्यादिसम्बन्धेऽरनेमिरूपा गतिस्तेषां रश्मीनां पृथिव्यादिभिः प्रतिबन्धे या मूलानुगा मण्डलानुगा गतिः सा अरनाभिभावेन। प्रकृते घृतधाराणां पूयमानत्ववचनेनैषा पर्जन्यधारावत्पृथिव्यनुगा गतिरुक्ता भवतीत्युक्तम्। "हिरण्ययो वेतसो मध्य आसाम्" आसां घृतधाराणां मध्ये हिरण्ययो हिरण्मयो हिरण्यवत्पीतवर्णश्चाकचक्ययुतो वेतसो वानीरस्तं पश्यामीत्यर्थः। घृतधारासु सम्मुखस्य रश्मेरपरापेक्षया स्थूलत्वेन प्रकृष्टप्रकाशत्वेन वानीरत्वकल्पना तत्र। तस्मिन्वेतसे सुपर्णः सुपतनः पक्षीव पक्षी। आदित्यमण्डले पक्षित्वकल्पना आकाशे निराधारोड्डीयमानसाजात्यात्। उभयपार्श्वयोः प्रसृमरोषा आदित्यरूपपक्षयुक्तत्वात्। अम्बरतले विद्यमानस्यादित्यस्य हंसपक्षित्वेन कल्पना हंसवत्या-मुच्यते। स च पक्षी मधुकृत्। मधुशब्देन तेज उच्यते, तेजश्चोदकशब्दबोध्यम्, उदकनामसु निघण्टौ मधुशब्दपाठात्। तस्य पक्षिणस्तस्मिन्वेतसे नीडं वर्तते। सम्मुखीन-किरणानुसारेणादित्यसन्दर्शने रश्म्यग्रे बिम्बस्य तेजस्विनो दर्शनमपेक्ष्य सनीडमधुकृत्पक्षि-कल्पना वेतसदण्डे। तेन च पक्षिणा देवताभ्यो रश्मिभ्यः। रश्मीनां देवशब्देन वचनस्य

शतपथब्राह्मणतः प्रतीतिः। तच्च शतपथब्राह्मणं पूर्वं प्रदर्शितम्। मधु दीयते ततो मधु-स्वीक्रियते वा। तस्य तीरे सप्त हरणा हरयो रश्मयो वर्तमानाः स्वधां जलं तेज इति यावत्। अमृतस्य तेजसो धारां दुहाना इति। एवं च वानीरवृक्षकल्पना तदग्रे सनीडपक्षिकल्पना पृथिव्यादितो रश्मीनां मूलानुगां गतिं बोधयति। यथा वानीरवृक्षः पृथिव्या उत्पन्न आकाशे प्रवर्द्धमानः सनीडपक्षिसम्बद्धो भवत्येवं पृथिव्याः सम्बन्धेन विपरीतगतिमतो रश्मेः पृथिवीतः प्रवृत्तिरामण्डलदेशमिति सा अरनाभिभावापन्ना गतिरिति। अरनेमिगत्यभि-प्रायेणाग्निं प्रति "अग्ने नेमिरराँ इवे"तिवर्णनेत्यन्यत्र विस्तरेण निरूपितम्। एवं च वेद्यादिदेशतो होत्रादिकृत्विग्वशतो जुह्वादिपात्राकारादित आज्यादिद्रव्यवशत आदित्य-सम्बन्ध एव सर्वेषु वैदिककर्मसु प्रतीयते। अत एव तस्य सम्बन्धस्य नियतरूपत्वेन तेषु कर्मसु प्रतिपाद्यमाननियमोपपत्तिः। यज्ञकर्मणि तत्तत्कर्मसु प्रेरणार्थानि वैदिकानि निगद-वाक्यान्युच्यन्ते तद्वशतोऽप्यादित्यसम्बन्धस्य प्राप्तिः। तादृशेषु वाक्येषु कतिपयवाक्यानां सर्वतोवरिष्ठत्वाभिप्रायेण तदीयाक्षरसंख्याया वेदे "छन्दस्य"शब्देन प्रशंसा क्रियते। तदुच्यते "ओ३श्रा३वयेति चतुरक्षरम्। अस्तु श्रौ३षडिति चतुरक्षरम्। यजेतिद्व्यक्षरम्। ये३यजामह इति पञ्चाक्षरम्। द्व्यक्षरो वषट्कारः। एष वै सप्तदशाक्षरश्छन्दस्य" इति। अत्राध्वर्य्वादिकृत्विग्वाक्योपयोगिनिगदाद्यात्मकवाक्योवाक्यस्याक्षराणि संगणय्य सङ्ख्या-द्वारा छन्दस्यशब्देन स्तुतिः। प्रजापतेः सप्तदशत्वसङ्ख्यासम्पर्कोऽप्यत्र विशेषे बीजम्। तादृशसङ्ख्यासंपर्को यद्यपि स्थलान्तरे वाक्यान्तरयोगेणापि भवितुमर्हति तथाप्यत्राभिप्रेतवैशिष्ट्यमन्यत्रासम्भवीति प्लुतादिप्रयोगश्लिष्टवाक्यतः प्रतीयत इत्यन्यत्र विस्तरेण निरूपितम्। सर्वेषु यागहोमादिरूपयज्ञकर्मस्वग्नित्रयमपेक्ष्यते। तत्स्थापनार्थं त्रीणि स्थानानि। तानि वेदिनिर्माणे निर्मितानि भवन्ति। तत्र पूर्वस्यां दिशि समचतुरस्रं हस्तमितव्यासं मेखलावद् आहवनीयस्थानम्। अत्र योऽग्निर्भवति स्थापितस्तस्या-हवनीय इति नाम। अयं च त्रिविधकिरणयोगस्थले सम्मुखीनकिरणसम्बन्धयोग्य इति तस्याहवनीय इति नाम। उच्यमानो होमः सर्व आहवनीये भवति। अत एव 'आहवनीये जुहोती'त्येतस्य वाक्यस्यार्थकरणावसरे मीमांसकैरुच्यते अत्र होमो न विधेय-स्तस्य वाक्यान्तरैर्दध्ना जुहोति पयसा जुहोतीत्यादिभिः प्राप्तत्वात्। एतेषां गुणविधित्वे अग्निहोत्रं जुहुयात्स्वर्गकाम इत्यनेन कर्मविधानम्। एवञ्च वाक्यान्तरेण प्राप्तहोममुद्दिश्य यज्जुहोति तदाहवनीये इति आहवनीयाग्निरूपाधारविधिः। होमे आहवनीयस्य प्राप्तौ नियम उक्तरीत्या सर्वो होम आहवनीय एवेति। अपवादशास्त्रं त्वेतं बाधते यथा पदे जुहोतीति। अत्र होमवचनाद्धोमाधारत्वेन प्राप्तस्याहवनीयस्याग्ने र्बाधनाय पदरूप-स्याधारान्तरस्य विधानं तेन सामान्यप्राप्तस्याहवनीयस्यात्र बाधः। सोमेऽग्निष्टोमादिके

सोमक्रयार्थं क्रयसाधनद्रव्यैर्गमनावसरे क्रयसाधनीभूतायाः सोमक्रयण्या गोः सप्तमं पदनिधानस्थानमत्र पदशब्देनोच्यते, तत्र चायं होमो विधीयते। वस्तुतः सोऽप्याहवनीय एव होमः। सोमक्रयणी एकवत्सरा गौरपि उषा एव, तस्या अंशाष्टकसम्बन्धेन प्रत्यंशं पदकल्पनायां तन्मध्यवर्तिसप्तमोऽंशस्तद्रूपपदमुदीयमानादित्यरूपमाहवनीय एव, परन्तु तस्याहवनीयत्वेन नात्र होमाधारता विवक्षिता किन्तु सोमक्रयण्याः पदत्वेनेवि तावतैवात्र बाधकभावकल्पनेति। एवं पश्चिमायां दिश्यवस्थापितोऽग्निर्गार्हपत्यो नाम। सोऽप्यस्त-मुपयन्नादित्यरूप एव। एवं दक्षिणाग्निरप्यादित्यस्यैव रूपम्। तत्राग्निहोत्रादिहोम-कल्पना दैनन्दिनगत्यभिप्रायिका। दैनन्दिनगतावुदीयमानादित्यस्य वासरिकगत्यभि-प्रायकसुमेरुकुमेर्वोरुदयस्य न सर्वदा समकालत्वं किन्तु कालवैषम्यम्। तत्र तावता तत्रोदीय-मानस्यास्तमुपयतो वादित्यस्य कालवैषम्याभिप्रायेण सम्पद्यमानस्य विम्बदर्शने विशेषस्य बोधनायार्धोदितार्द्धास्तमितविम्बाभिप्रायेण दैविककर्मणि स दक्षिणाग्निरप्यादित्यस्यैव रूपमिति स खण्डितभावेन दक्षिणस्यां दिश्यर्द्धवर्तुलाकारस्थाने स्थापितो भवतीति। तेषु त्रिष्वग्निष्वनुष्ठीयमानकर्मणामप्यादित्याभिप्रायकत्वं विस्पष्टमेव भवति। सोमा-दियागेषु दीक्षितयजमानस्य दीक्षारूपसंस्कारसिद्ध्यर्थमुच्यमानसंस्कारतोऽप्यादित्यानुकार एवाभिव्यक्तो भवति। तथाह्यैतरेये दीक्षासंस्कारबोधनावसर उच्यते पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति यद् दीक्षयन्तीति। अत्र भाष्यकारेण यज्ञप्रयोग ऋत्विग्भिर्यज-मानस्य संस्कारेण पुनर्गर्भरूपतापादनं क्रियते यस्य यजमानस्य दीक्षावसरे ते संस्कारमिमं कुर्वन्तीति। तत्र यजमानस्य गर्भरूपतापादनबोधक उक्तवाक्ये पुनःशब्दप्रयोगेण प्रथमगर्भरूपताप्राप्त्यूर्ध्वत्वमस्य बोध्यते। प्रथमगर्भरूपतापत्तिश्च तस्य मातापित्रोः सम्बन्धेन मातुरुदरे बीजभावापत्तिरूपा। इयमेव मुख्या गर्भरूपता तस्य। तत्साजात्यादि-तरत्र गर्भभावापत्तिवर्णनं गौणरूपम्। यथाध्ययनप्रारम्भावसरे उपनयनेन गौणी गर्भरूपता, एवमत्र यागोपाधौ साजात्याद्गौणी गर्भरूपता। ( क्रमशः )

---

# अतिशयोक्तिः

सतीन्द्रः। एष याति स जघन्यो मिथ्यावादी येन रारट्यते सूर्यस्याधस्ताद् यत् किमपि वर्तते सर्वं मयातिक्रान्तमिति।

यतीन्द्रः। मा त्वमेनं मिथ्यावादीति व्यपदिशः। ये तावद् व्यतिकराः कदापि न सङ्घटितास्तेषामतिरञ्जनेऽस्यासामान्यं पाटवं वर्तत इत्युच्यताम्।

---

# प्राप्तं पत्रम्

[ श्रीमहादेवशास्त्री साठे एम० ए० एल० टी० ]

मञ्जूषायाः ख्रिस्ताब्द १९६० तमवर्षस्य प्रथमे पूजाख्येऽङ्के श्रीमदभ्यंकर-काशीनाथ-शर्मभिः सम्पादितस्य व्याकरणमहाभाष्यनवाह्निकीभागस्यात्रभवद्भिर्लिखितं परीक्षणं 'पुस्तकपरिचयः' इत्यस्मिन् प्रकरणे दृष्टिपथमागतम्। तत्र भवद्भिः केचन दोषाः प्रदर्शितास्तानधिकृत्य गुरुचरणसकाशाल्लब्धज्ञानलवो वैयाकरणकुलप्रसूतं मां स्तोकं लिखितुं मुखरीकरोति।

(१) यद्यपि नामाख्याते चोपसर्गनिपाताश्चेति पाठो निरुक्ते दृश्यते तथापि भाष्यकारै र्नामाख्यातोपसर्गनिपाताश्चेति यल्लिखितं तत्समीचीनमेव वर्तते। नामेत्येकं पदम्, आख्यातोपसर्गनिपाताश्चेति द्वितीयं समस्तं पदमिति द्वे पदे वर्तेते। न तत्र दोषलवोद्भावनापि सम्भावयितुं शक्या। न जानीमहे किमितीमं पाठं प्रामादिकं मन्यन्ते भवन्तः।

(२) 'ऋदोरप्' इतिं सूत्रं दीर्घऋकारयुक्तमेव मुद्रितमभ्यंकरमहाशयैरिति मन्ये। यतोऽस्माकं देशविभागे ह्रस्वऋकारः प्रदर्श्यतेऽर्धवर्तुलेनान्तराकृष्टेन (ऋ) दीर्घश्च वहिर्निष्कृष्टेन (ॠ)। एवंप्रकारेण इतरत्र सर्वत्रैषा रीतिरेवाऽङ्गीकृतोपलभ्यते।

(३) 'अन्तः पादस्थस्ये'ति कैयटपठितं ग्रन्थं व्याख्यानार्थमुद्धरद्भिरभ्यंकरमहोदयः केवलं वाचकवर्गस्य सौलभ्येन प्रतिपत्तिर्भवेदित्येव मनसि विधाय विसन्धिलेखनमङ्गीकृतम्। नैकशतवर्षेभ्यः प्राग्रचिता ग्रन्थाः सर्वत्र संहितया लिखिता अथवा सुलभप्रतिपत्त्यर्थमावश्यकत्वेनाभिमतो यत्र विरामस्तत्र विसन्ध्युच्चारणं कृतमित्यत्र विषये न किमपि निर्णायकं प्रमाणम्। ग्रन्थसंपादकास्तत्र प्रमाणं चेन्महाभाष्यकारैरपि शिष्याणां सम्यगवबोधो भवेदिति बहुषु स्थलेषु सन्धिरहितमुच्चारणं कृतमिति वक्तव्यमापतेत्। 'अर्धमेकारं अर्धमोकार'' इत्यत्र स्वरप्रकरणानुस्वारस्तु प्रामादिक एवेति न कोऽपि विवादः। क्वचित्स्थलेषु टीकाकारा विद्वांसो ग्रन्थकर्तारोऽप्येवं लिखन्त्यनवधानेनाकारणिकया रूढ्येत्यवलोकितमस्माभिः। विस्तरभयेन नात्र विषये 'वाक्ये तु सा विवक्षामपेक्षते' इत्यादिग्रन्थान् प्रदर्शयामि। भवत्सदृशैर्वैयाकरणभूषणभूतैर्वङ्गपण्डितैर्महाभाष्यप्रतिमुद्रणं कुर्वतामभ्यंकरमहोदयानां कृते असतोऽपि दोषानुद्भावयद्भिः 'छात्रसुलभोऽयं प्रमादः' 'आत्मनोऽज्ञानं कैयट आरोप्यते' इत्यादिभिर्वाक्यैरधिक्षेपः कृत इति महदाश्चर्यम्। मम तु चेतः केवलमुद्विजते॥ इत्यलम्।

# अत्रोत्तरम्

(१) सर्वमेतद् दुराग्रहग्रहिलतामेव संसूचयति लेखकस्य। संस्कृतसाहित्ये क्वापि नाम्नः पृथगुल्लेख आख्यातोपसर्गनिपातानां च समस्ततया समुल्लेखो नोपलभ्यते। नामाख्यातयोः सदृशत्वाद् उपसर्गनिपातयोश्च सदृशत्वान् "नामाख्याते चोपसर्गनिपाताश्च" इत्येव युज्यते वक्तुम्॥ महाभाष्येऽपि शाब्दिकशिरोमणिनाभिरूपशिखामणिना पतञ्जलिनोक्तम्—समाजेषु समाशेषु समवायेषु चास्यतामित्युक्ते नैव कृशाः कृशैः सहासते न पाण्डवः पाण्डुभिः। येषामेव किञ्चिदर्थकृतमान्तर्यं तैरेव सहासते। तथा गावो दिवसं चरितवत्यो यो यस्याः प्रसवो भवति तेन सह शेरते। एवं तावच्चेतनावत्सु। अचेतनेष्वपि। तद्यथा। लोष्टः क्षिप्तो बाहुवेगं गत्वा नैव तिर्यग् गच्छति नोर्ध्वमारोहति पृथिवीविकारः पृथिवीमेव गच्छत्यान्तर्यतः। तथा या एता आन्तरिक्ष्यः सूक्ष्मा आपस्तासां विकारो धूमः स आकाशदेशे निवाते नैव तिर्यग् गच्छति नावागवरोहत्यब्विकारोऽप एव गच्छत्यान्तर्यतः। तथा ज्योतिषो विकारोऽर्चिराकाशदेशे निवाते सुप्रज्वलितो नैव तिर्यग् गच्छति नावागवरोहति ज्योतिषो विकारो ज्योतिरेव गच्छत्यान्तर्यतः। इति॥

एवमेव कदाचिद् भोजनावसरे केनचिदुक्तम्—दधिमानयेति। यदा सर्वैरुपहसितम् अरे दधिशब्दस्य द्वितीयैकवचने दधीत्येव भवति, दधिमिति तु प्रामादिकम्, तदा तेनोक्तम्—केन वा दधिमित्युच्यते? मयोक्तम् दधि मा आनय, तत्क्रमानयेति मे हृद्गतमासीदिति॥ अपरेण केनचिदुक्तं स्थानो नास्तीति। सर्वेषां वदनकमलेषु हासस्य प्रादुर्भावं दृष्ट्वा तेन परिष्कृतम्—स्था नो नास्ति स्थितिरस्माकं नास्तीति।

(२) रोगशय्यामधिशयानैरिदानीमस्या उक्तेर्याथार्थ्यं न शक्यते परीक्षितुमस्माभिः। कीलहरणमहोदयमुद्रापिते महाभाष्ये पुण्यपत्तनत एव प्रकाशितायां महाभाष्यानुक्रमण्यां च विस्पष्टमेव ऌकारः सर्वत्र दृश्यते। न जानीमः किमिति विपुलजनव्यामोहकमक्षरमुपासितमभ्यङ्करमहोदयैरिति।

(३) सन्धिविषये मञ्जूषायामसकृदालोचितम् पुनरप्यालोचयिष्यते। कारणविशेषमन्तरेण स्वेच्छया सन्ध्यकरणं दोषायैव भवति। अद्यत्वे पुनर्लेखकाः सन्धिविश्लेषपूर्वकं स्वरवर्णे परतोऽपि संहितया मकारस्यानुस्वारविधानपूर्वकमावसानिकस्यापि मकारस्यानुस्वारीकरणपूर्वकं च संस्कृतभाषां प्राकृतभाषायां विपरिणमयन्ति। व्याकरणमहाभाष्यस्य सम्पादकैः कथमप्येवं न कर्तव्यम्।

अत एवासतोऽपि दोषानुद्भावयद्भिरिति वचनमतीव निःसारमित्यवबोद्धव्यम्। अन्येऽपि प्रमादा वर्तन्ते येऽस्माभिर्न प्रदर्शिताः।

ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणं कुरुते।
प्रायः स्वं महिमानं क्षोभात् प्रतिपद्यते जन्तुः॥

इति न्यायेनास्माभिः किञ्चित्परुषमपि तथ्यमुक्तम्। आशास्यते प्रत्यापन्नमहिमानोऽभ्यङ्कर-महोदयाः परवर्तिषु खण्डेषु स्वविद्वत्तानुरूपं प्रयतेरन्निति। विबुधगणनिकषायमाणपुण्यपत्तनतः प्रादुर्भूतं व्याकरणप्रबन्धशिरोरत्नायमानं महाभाष्यं सर्वथा प्रमादैः परिमुक्तं भवत्विति शम्।

---

# GREEK WORDS IN SANSKRIT

KSHITISHCHANDRA CHATTERJEE, M.A., D.LITT.

[ *Calcutta Review*, September, 1949 ]

## 1. NAMES OF THE SIGNS OF THE ZODIAC

Sanskrit has generally fought shy of foreign words, but no language in the world can wholly resist the influx of words and expressions of neighbouring races and Sanskrit is no exception to the general rule. No wonder, therefore, that several foreign words should have succeeded in gaining a foothold in the vocabulary of even this very conservative language and though they became more or less disguised, the fact of their incursion was known even to such an ancient writer as Jaimini who devotes the Ārya Mleccha Adhikaraṇa of his Mīmāṁsā Sūtras to the consideration of this topic. And foreign words, especially Greek words, are conspicuous in works on Astrology which would appear to have made greater progress in Egypt and Greece than in India in very early times. Garga mentions the pre-eminence of the Greeks in the domain of Astrology in the stanza :

म्लेच्छा हि यवनास्तेषु सम्यक् शास्त्रमिदं स्थितम्।
ऋषिवत् तेऽपि पूज्यन्ते किं पुनर्दैवविद् द्विजः॥

The Yavanas are indeed Mlecchas but this science has been well-established among them. (So) even they are honoured like Ṛṣis, not to speak of a Brāhmaṇa who is well-versed in Astrology.

In this paper I shall deal with the names of the twelve signs of the Zodiac that have been borrowed from Greek.

Varāhamihira says in his Bṛhajjātaka (i. 8) :

क्रिय-ताबुरि-जितुम-कुलीर-लेय-पाथोन-जूक-कौर्प्याख्याः।
तौक्षिक आकोकेरो हृद्रोगश्चेत्थंसि क्रमशः॥

Max Müller quotes this stanza in the following form from an ancient manuscript in his *India, what can it teach us?*—

क्रियतावुरिजितुमकुलीरलेयपार्थजुकक्षौर्प्याख्याः ।
तौक्षिक-आकोकेरो ह्रद्रोगश्चान्त्यभं चेत्थस् ॥

It will be noticed that the first half here contains only 27 mātrās, whereas in an Āryā the first half should consist of 30 mātrās. So *pārthona* and *jūka* of the printed editions appear to preserve the correct readings. Moreover, *tāvuri* spelt with the semi-vowel *v* in the printed edition is undoubtedly the original reading. *Hradraga* of Max Müller's MS. gives no meaning. Since the aim is to give us a common word with some meaning of its own, *hṛdroga* 'heart-disease' is most certainly the correct reading here. It is possible that *antyabhaṁ cetthas* is the original reading, for *itthas* makes a nearer approach to *ikhthus* than *irthasi.*

The stanza means that Kriya, Tāvuri, Jituma, Kulīra, Leya, Pārthona, Korpya, Taukṣika, Akokera, Hṛdroga, and Irthasi or Itthas are the synonyms respectively of Meṣa, Vṛṣa, Mithuna, Karkaṭa, Siṁha, Kanyā, Tulā, Vṛścika, Dhanus, Makara, Kumbha and Mīna.

Similarly we find in the Sarvārtha-Cintāmaṇi (i. 38-41):

मेषाजवस्तं प्रथमं क्रियश्च वृषोक्षगोतावुरि शुक्रभं च ।
बौधं नृयुग्मं जितुमं तृतीयं चान्द्रं कुलीरं तु चतुर्थराशिम् ॥
सिंहस्य कण्ठीरव-लेय-संज्ञा पाथोन(? षष्ठी त्वबला च तन्वी ।
जूको वणिक् सप्तम-तौलि-संज्ञः कौर्प्योऽष्टमं कौजमलेस्तु संज्ञाः ॥
जैवं धनुस्तौक्षिक-चापसंज्ञं त्वाकेकरं स्याद्दशमं च चक्रम्[नक्रः ?] ।
हृद्रोगकुम्भौ घटराशिसंज्ञे मीनो झषश्चान्तिमरिष्फसंज्ञः ॥

The first sign of the Zodiac is Meṣa, Aja, Vasta and Kriya: the second Vṛṣa, Ukṣan, Go, Tāvuri and Śukra-bha (the house of Venus); the third Baudha (belonging to Merecury), Nṛ-jugma (human-pair) and Jituma; the fourth sign Cāndra (belonging to the moon) and Kulīra. The names of the Siṁha Rāśi are Kaṇṭhīrava (Lion) and Leya. The sixth is Pāthona, Abalā (the weaker sex) and Tanvī (the slender damsel). The

seventh is Jūka, Vaṇik (merchant), and Taulin (the possessor of the balance) or Tauli (balance). The names of Scorpio are Kaurpya, the eighth and Kauja (belonging to Mars). The ninth sign is Jaiva (belonging to Jupiter), Dhanus, Taukṣika and Cāpa (bow), the tenth is Ākekara and C[N ?]akra. The names of Aquarius are Hṛdroga and Kumbha and the last sign is Mīna, Jhaṣa and Riṣpha.

The Vidyāmādhavīya also says :

संज्ञाभिः क्रिय-लेय-जूक-जुतुमाः कौर्पिः कुलीरस्तथा
हृद्रोगेत्थसितौक्षिकाश्च कथिताः पाथोनकास्तावुरुः ।
आकोकेर इतीह मेषमृगपौ तौलिर्न्रृयुग्मालिनौ
कर्की कुम्भझषौ धनुर्युवतिगोनक्राः क्रमाद्राशयः ॥१

It will be noticed that neither the Bṛhajjātaka nor the Sarvārtha-Cintāmaṇi mentions *Karkin* as a name of the fourth sign of the Zodiac, though the word is of fairly frequent occurrence in Astrological literature. They were evidently under the impression that just as Kumbhin or Kumbhabhara is used for Kumbha, Dhanvin or Dhanurbhṛt for Dhanus, Taulin or Tulādhara for Tulā, Karkin is used for Karka or Karkaṭa and it is superfluous to mention it separately.

Another point to note is that the Sarvārtha-Cintāmaṇi substitutes Riṣpha, the name of the twelfth house, for Itthas or Itthasi. It may be mentioned in this connexion that even Varāha Mihira has no occasion to use the term *Itthas* in his Bṛhajjātaka.

We shall now take up the peculiar names one by one.

(1) The name of the first sign is Kriya. It is merely the Greek word *krīyos* 'ram'. Many philologists hold that the word was originally *krī(w)os*. The corresponding form in Sanskrit would be *klīva*. Since there is no separate character for the long ī in Greek and since *kriya* as found in many Skt. words like *sa-kriya* *niṣ-kriya* etc. is spelt with a short *i*, Gk. *krīyos* was converted into *kriya* in Skt. The Gk. word means etymologically 'the horned one' and is used for the ram. The Latin name of the sign is Aries which means exactly the same thing. The word

is cognate with Gk. *eriphos* 'kid' and Lith. *erytis* 'lamb'. The Hebrew name of the sign is Taleh 'lamb'.

The word Kriya occurs in Bṛhat-Parāśara-Horā, Jaimini-Sūtra, Bṛhaj-Jātaka and other works on Astrology.

(2) The name of the second sign is Tāvuri. It is the Gk. word Tauros 'bull' disguised almost beyond recognition. What appears as Tauros in Gk. should normally be represented by Tora in Skt. It might have been changed into *tura* or *tara* to give it a Sanskritic look. Since, however, the digamma (*w*) is dropped in several Gk. dialects as, for instance, in *neos* for Skt. *navah*, a *v* was inserted here between *a* and *u*. *Tāvuri* should therefore be written with the semivowel *v* and not with the mute *b*. The final *o* was changed into *i*, probably because of the very frequent occurrence of the dative singular form *taurōi*. The base is probably *tu* 'to swell' found in Skt. *tavas* 'strength', *tumra* 'well-developed', *tūtuma* 'strong,' Eng. *tumour* etc. The Skt. name Vṛṣa is the later form of Vṛṣan and is cognate with Gk. *arsēn*, *arrēn*, 'male'. It is interesting to note in this connexion that the earliest name for the masculine gender was Vṛṣan in Sanskrit and Arrēn in Greek.

## विद्वद्समागमः

"रविवासरीय आनन्दबाजारपत्रिका"यां पुस्तकपरिचयपृष्ठे [ ३१शे आषाढ, १३६८ पृष्ठ ख स्तम्भ ३ ] दृष्टम्—अक्सफोर्ड ओ केम्ब्रिजे प्रचुर विद्वद्समागमे हिन्दु दर्शन ओ धर्म सम्बन्धे वक्तृता ओ व्याख्या करेछिलेन इति। यथा मृगा मृगैः सङ्गमनुव्रजन्ति तथा घोषवन्तो घोषवद्भिः सङ्गमनुव्रजन्ति, अघोषाश्चाघोषैः। समागमगतः सकारोऽघोष इति विद्वद्गतदकारोऽप्यघोषः स्यात्। अत एव विद्वत्समागम इति शब्दः साधुः। एवम् आपद्समुद्र-विपद्काल-विपद्सागर-हृद्कमलप्रभृतयः शब्दा असाधवः।

तस्यामेव पत्रिकायां प्रथम एव पृष्ठे सुबृहद्भिरक्षरैर्मुद्रितम्—रविवारे कलिकातार रास्ताय निष्प्रदीपेर सम्भावना ( रविवासरे कलिकाताया रथ्यासु निष्प्रदीपस्य सम्भावना ) इति। अत्र निष्पदीपत्वस्य सम्भावनेति लेखनीयम्, निष्प्रदीपशब्दस्य विशेषणत्वात्।

## भाषायां प्रावीण्यम्

Statesman पत्रे (August 25, 1961) अन्तिमपृष्ठे पञ्चमस्तम्भे बृहद्भिरक्षरैर्मुद्रितम्—*Can* Calcutta Corporation *fixed* the ceiling prices for different categories of fish to be sold in municipal markets इति।

# जिज्ञासा मीमांसा च

सप्ततीर्थमहोदयः पृच्छति —

श्रीमद्भागवते दशमे स्कन्धे द्वाविंशेऽध्याये वर्तते श्लोकः—

भगवानाहता वीक्ष्य शुद्धभावप्रसादितः ।

स्कन्धे निधाय वासांसि प्रीतः प्रोवाच सस्मितम् ॥१८॥

इति । अत्राहता-शब्दस्य कोऽर्थः ?

## उत्तरम्

यथास्माभिर्दृश्यते तथा अहता इति शुद्धः पाठः । अहता नखक्षतादिभिरदूषिता इत्यर्थः ।

---

## रसमञ्जरी

[ श्रीक्षितीशचन्द्रचट्टोपाध्यायः ]

गुरुः । वत्स सुरेन्द्र ! संपाठः पठ्यताम् ।

सुरेन्द्रः । ( पठति ) अर्धं भार्या मनुष्यस्य ।

गुरुः । एतत्समानार्थकमाङ्गलवचनं वर्तते वा ।

सुरेन्द्रः । आर्य ! वर्तत एव । आङ्गलभाषायामपि जाया better half भद्रतरमर्धमित्युच्यते ।

नरेन्द्रः । अर्धशब्दपर्यायो half-शब्दः । अनयोः कोऽपि सम्बन्धो वर्तते वा ।

गुरुः । अपि न ज्ञायते श्रीमद्भिर्जगतीतलस्थाः सर्वा भाषाः संस्कृतमूलिका एव । संस्कृताल्पशब्द एवाङ्गलभाषायां half सम्पन्नः । आङ्गलाः सर्वदैव श्राम्यन्ति, अतः श्वासोद्रेकात् प्रथमतस्तैर्हकारः समुच्चार्यते । ग्रिमकृतसूत्रेण (Grimm's Law) संस्कृतपकार आङ्गलभाषायां फकारः सम्पद्यते यथा पर्णं fern इति भवति ।

भूपेन्द्रः । आर्य, इदानीन्तनानां शाब्दिकानां मतेन संस्कृतः कल्प एवाङ्गल-half सम्पन्नः । संस्कृतभाषागतः ककारो ग्रिमसूत्रानुसारेणाङ्गलभाषायां हकारो भवति ।

गुरुः । ककारस्य हकारत्वकल्पनापेक्षया श्वासाधिक्यकल्पनं लघुतरमिति प्रतिभाति ।

भूपेन्द्रः । आर्य, श्वासाधिक्यादुपजायमानो हकारो नास्मभ्यं रोचते ।

गुरुः । तर्हि स्वल्प-शब्द एव half-शब्दस्य मूलमिति गृहाण । स्वल्पगतः सकारो हकारः सञ्जातः ।

नरेन्द्रः । आर्य, शाब्दिकानां मतेन संस्कृतभाषागत आद्यः सकार आङ्गलभाषायां यथावदेवावतिष्ठते, हकारो न भवति ।

गुरुः । अरे इदानीन्तनाः शाब्दिकाः किं वा जानन्ति ? स्वल्पो वाल्पो वा half इत्यस्य मूलमित्यत्र संशयो नास्ति ।

---

# Manjusha Vol. XV

( 824 pages )

Contains five full length modern Sanskrit dramas ( महिममयभारतम्, निष्किञ्चनयशोधरम्, वीरभा, भारतहृदयारविन्दम् and भास्करोदयम् ), Sanskrit letters of the late Appa Sastri Rashivadekar, Proverbs from many languages, Aesop's Fables in Sanskrit, Rabindranath's story and poems, an unpublished Sanskrit kāvya, a series of articles on the interpretation of the Vedas, Panini and Whitney, Grammatical discussions on पूर्वतन, ऊर्ध्वतन, छात्री, छात्रा etc., on the Anubandhas of Panini, on several rules of Panini etc. etc.

Price : Rupees Eight only. Postage extra.

Vol. VII (about 400 pages) **Technical Terms and Technique of Sanskrit Grammar—Samāsa, Kāraka and Vibhakti.** Kālidāsa and Bhavabhūti (5 instalments). Was Pāṇini a Communist ? Kālidāsa and Shakespeare. Greek Proverbs (64 pages). On तरप् and तमप्. On सूहत and भ्रातृव्य. Meaning of शफोरु. 9 storiettes, 3 long stories, मृगया in Sanskrit Drama, etc., etc. 10/-.

Vol. VIII (about 200 pages) Short stories, long stories, humorous skits, महाभाष्यरत्नमञ्जूषा. Meanings of Sanskrit proper names. Sanskrit stanzas and their parallels from European languages. Sanskrit equivalent of bread. Notes and Queries. Tagore's short story. On देवानांप्रियः. On the derivation of कार्मुक, On Abhinavagupta. On Śārṅgarava and Śāradvata. Tagore's Urvashi. Common Errors. So-called Solecisms of Kālidāsa. Rs. 3/8/-.

Vol. IX (nearly 300 pages). So-called Solecisms of Kālidāsa. Literary Parallels. Common Errors. Technical Terms of the Mugdhabodha. Tagore's story and poems. Contradiction in Terms. On the correct derivation of प्रवीण, सिकता etc. वाग्मी vs. वाग्ग्मी. बिभीषण versus विभीषण. On फ, ढ, ख, छ, घ in Pāṇini. A new stanza from Vyāḍi's Saṁgraha. Meaning of रद विलेखने. सतीर्थ्य versus सतीर्थ. The Anubandhas र, क, प, उ, ष in Pāṇini, The Technical Terms—Upasarga, Nipata, Karmapravacaniya, Gati, etc. Apurva in Mimamsa. In Defence of the Padapātha. On ऊकालोऽज्झ्रस्वदीर्घप्लुतः. On वामदेव्यं साम. रेफ versus रकार. Rs 6/-

Registered No. C 3278



Printed and published by Sri Visvanath Chatterjee, M.A. from Bhupendra Bose Avenue, Calcutta-4. Printed at the Gupta Press. 37/7 Baniatola Lane, Calcutta-9.

चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर पाहि माम् ।
चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्ष माम् ॥

श्रीशिवः शरणम्

षोडश-वर्षे ] November, 1961 [ तृतीया संख्या
SPECIAL DIPAVALI NUMBER

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## सूचिः



———

येषां सविधे राशिवडेकरमहोदयस्य पत्राणि वर्तन्ते ते कृपया मञ्जूषायां प्रकाशनार्थं तेषां प्रतिलिपिप्रेषणेनानुगृह्णन्तु नः ।

**Please send your renewal subscription with donation at once.**

*Office* : 8, Bhupendra Bose Avenue, Calcutta—4.
Minimum Annual Subscription : Rupees Six only.
Foreign—Twelve shillings.
Single copy : Three Rupees.

# मञ्जूषाया नियमावली

मञ्जूषाया वार्षिकं मूल्यमवरतो रूपकषट्कम् । आश्विन (September)-मासतो वर्षारम्भः । ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम्।

२। प्रतिसौरमासं दशमदिने (आङ्गलमासस्य चतुर्विंशे दिवसे) 8, Bhupendra Bose Avenue, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते। मासस्य प्रारम्भे न लभ्यते चेदस्मभ्यं निवेदनीयमन्यथा पुनः प्रेरणं न सम्भवेत् ।

३। मञ्जूषायास्तावद् भागत्रितयं वर्तते। तत्र प्रथमे भागे देवभाषां प्रविविक्षूणां कृते सरलाः श्लोका आभाणका आख्यानानि नाटकानि च सन्निवेश्यन्ते। द्वितीये भागे दार्शनिका निबन्धा व्याकरणालङ्कारादीनां विमर्शः पाठविचारो जिज्ञासा मीमांसा च प्रकाश्यन्ते। तृतीये भागे सानुवादाः पारसीकानां गाथाः साङ्गलानुवादं निरुक्तं च प्रकाश्यन्ते।

*वामनस्य काव्यालङ्कारसूत्रवृत्तिः* (प्रयोगाधिकरणम्) विविधकाव्योदाहरणमण्डितविविधव्याकरणमतसमन्वितामिनवसुविस्तृतटीकोपेता (अतिदुर्लभा) २॥)

**सिद्धान्तकौमुदी**—लीलावतीसहिता (प्रथमो भागः)। मूल्यं १)

Upasarga and other Technical Terms Rs. 1/4/-

Convocation Address in Ancient India As. 12

Popular Etymology— Re. 1/-

**ECONOMY IN SPEECH**—(Manjusha, May 1958). It is indispensable to students of languages. Re. 1/-

**Patanjali's MAHABHASHYA (Paspasha or Introduction) with English Translation, exhaustive critical and explanatory notes, commentaries etc. Second Edition. Rs. 4/-**

ऋग्वेदीयम् आनोभद्रसूक्तम्. (पञ्चभाष्यसमन्वितम्) २॥०

শব্দকথা—সরস, সরল ভাষাতত্ত্ব ২৲

ঊষার আলো—ছোট ছোট হাসির গল্পের সমষ্টি— ৸০

নক্ষত্রমালা—ধর্মবিষয়ক শ্লোক, সরল ব্যাখ্যা ও অনুবাদ ।৵০

Several sets of Vols. IV, V, VI (lese one no.), VII, Rs. 10/- per volume, Vols. X, XI, XII, XIII and XIV (400 pp. each) of the Manjusha are still available for Rs. 6/8/- per volume and only a few sets of Vol. VIII (200 pages) Rs. 3/8/- only. Vol. IX Rs. 6/-. Vol. XV Rs 8/-. Only a few sets in stock. Order at once.

श्रीविश्वनाथ-चट्टोपाध्यायः ।

Phone :—55-4049

८, भूपेन्द्र वसु आवेन्यू, कलिकाता ४

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम्॥

# मञ्जूषा

November, 1961. | १८८३-शकीयाग्रहायणस्य १६श-वर्षस्य तृतीया संख्या | Vol. XVI No. 3

## आभाणकमाला

१। Love does not brook neglect.

Greek. Oudeis gar agapōn autos ameleīth hēdeōs.

न प्रेम लोके सहतेऽवहेलनम्।

२। From looking love is born to men.

Greek. Ek toû eisorān gar gignetai anthrōpois eran.

Latin. Amor ex videndo nascitur mortalibus.

दर्शनाज्जायते रागो हृदयेषु नृणामिह।

Latin. Ek aspectu nascitur amor.

Greek. Ek toû orāin gignetai to erāin.

दर्शनाज्जायते रागः।

३। In war, hunting and love, for one pleasure a thousand griefs.

French. De chiens, des oiseaux, d'armes, d'amour, Pour un plaisir, mille douleurs.

समरे प्रणये चैव मृगयाव्यसने तथा।
प्रतिसुखं सहस्रं हि दुःखानां वर्तते ध्रुवम्॥

# धर्मो रक्षति धार्मिकम्

[ श्रीधरस्वामिनः ]

कदाचिद् दुर्वाससो दुर्योधनेनातिथ्यं कृतम्। तेन च परितुष्टेन वरं वृणीष्वेत्युक्ते, दुर्वाससः शापात् पाण्डवा नश्येयुरिति मनसि निधाय दुर्योधनेनोक्तम्—युधिष्ठिरोऽस्मत्कुल-मुख्यः, अतस्तस्यापि भवतैवं शिष्यायुतसहितेनातिथिना भाव्यम्। किन्तु द्रौपदी यथा क्षुधया न सीदेत् तथा तस्यां भुक्तवत्यां तद्गृहं गन्तव्यम् इति। ततश्च तथैव दुर्वाससि प्राप्ते, परमादरेण युधिष्ठिरेण माध्याह्निकं कृत्वागम्यताम् इति विज्ञापितो मुनिसङ्घोऽघमर्षणाय जले निममज्ज। तत्र चिन्तातुरया द्रौपद्या स्मृतमात्रः श्रीकृष्णो रुक्मिणीं हित्वा तत्क्षणमेव भक्तवात्सल्येनागतः। तया चावेदिते वृत्तान्ते, भगवतोक्तम्। अये द्रौपदि, अहमपि बुभुक्षितोऽस्मि प्रथमं मां भोजयेति। तया चातिलज्जया अहो मदीयं भाग्यम-भाग्यञ्च यतस्त्रैलोक्यनाथो यज्ञपुरुषो भगवान् मद्गृहमागतो भोजनं प्रार्थयत इति मनसि विधायोक्तम्। स्वामिन्! मद्भोजनपर्यन्तमक्षयमन्नं सूर्यदत्तस्थाल्याम् इत्यश्रुपातं चकार। तथाप्यतिनिर्बन्धेन स्थालीमानाय्य तत्कण्ठलग्नं किञ्चिच्छाकान्नं प्राश्य श्रीकृष्णे-नोक्तम्। अनेन विश्वात्मा भगवान् प्रीयतामिति। अथ भोजनाय मुनिसङ्घ आहूयताम् इति भीमं प्रहितवान्। भीमेन गत्वोक्तम्, स्वामिन्! भोजनार्थमागम्यताम्। कथं विलम्बः क्रियते? इति। स च तावताऽतितृप्तो वृथापाकभयेन प्रपलाय्य गतः।

---

# शाङ्करभाष्यपाठविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

तमनवरुध्यैवामन्यत [ १।२।७ ] इति बृहदारण्यकश्रुतेः शाङ्करभाष्ये दृश्यते—पशुमनवरुध्यैवोत्सृष्टं पशुमवरोधमकृत्वैव [ निर्णयसागर ४४ ] इति। अत्र पशुमित्यत्र कर्तृकर्मणोः कृतीति षष्ठी प्राप्नोति। अवरुध्यत इत्यवरोधः इति कर्मणि घञि तु कथञ्चिद् वाक्यस्य साधुत्वं संसिध्यति। यथास्माभिर्दृश्यतेऽत्र पारमार्थिकः पाठः—पशुमवरुद्धमकृत्वैवेति।

---

# अन्यमस्मत्तः

माता। ( शिक्षकं प्रति ) अध्यापकमहोदय! वत्सस्य मे शरीरं मानसं चातीव कोमलम्। नैव कथमपि ताडनीयोऽयं भवता।

शिक्षकः। स यदि पाठान् पठितुं न प्रभवेत् किं मया करणीयम्?

माता। तस्य पार्श्ववर्तिनमर्भकं ताडयेः, तेनैव वत्सो मेऽतिमात्रं बिभियात्।

---

# श्रीमदप्पाशास्त्रिणां पत्ररत्नमञ्जूषा

( १६ )

श्रीशिवः शरणम् ।

स्वस्ति,

फाल्गुनसुदि १-१८२०

सविनयं सानुरागं सप्रणामं चावेदकः—

प्रियप्रवरमहाभागाः !

अद्यावध्यपरिचितः खल्वहं श्रीमत्सु । साम्प्रतं पुनः श्रीमद्भिर्वाल्हेरनगर-निवासिभिरस्मत्सुहृद्भिर्विद्वत्कलासभामन्त्रिभिः श्रीशिवरामशास्त्रिभिः श्रीमतां गुणगणा मह्यं न्यवेद्यन्त पत्रिकया । यैरेव श्रीमत्परिचयं कामयमानः पत्रमेतल्लिखितुं प्रावर्ते । महाभागाः ! प्रमोदयति मे चेतः श्रीमतां संस्कृतभाषायामनुरागातिशयः । कं वा नाह्लादयेद् भगवत्योर्लक्ष्मीसरस्वत्योः सुदुर्लभमपि भवत्सु प्रत्यक्षीभवत् सामानाधिकरण्यम् ? एवं संस्कृतभाषायाः समुन्नमन एकान्ततो निबद्धपरिकरेषु श्रीमत्सु कुतो नासादयेदसौ निरतिशयमौन्नत्यम् ? सर्वथा विजयन्तां भवन्तः ।

मयाप्यत्र काचित् संस्कृतचन्द्रिका नाम संस्कृतभाषामयी मासिकपत्रिका प्रतिमासं प्रकाश्यते, यस्यां नानाविषयकाः प्रबन्धाः खण्डकाव्यानि च प्रकाश्यन्ते । तस्याश्चै-तन्मासिकी संख्याद्य श्रीमद्भ्यः प्रेर्यते । विलोक्य तां निवेद्यतां चन्द्रिकायाः समीचीनत्वं तदितरत्वं वा । एषा किल प्रथमं कलकत्तानगरे श्रीजयचन्द्रसिद्धान्तभूषणभट्टाचार्यनाम्ना पण्डितप्रकाण्डेन प्राकाश्यत । आदितः प्रभृति तस्याः पाठकोऽहमासम् । सम्पादकेन श्रीजयचन्द्रमहाशयेन च चतुर्थवत्सरे सा मह्यं प्रादायि, मयापि पञ्चमवत्सरात्प्रभृत्य-सावत्रैव सम्पाद्यते, प्रकाश्यते च ।

कृतज्ञतामात्रमेतद् यदस्यां सम्पादकस्थाने श्रीजयचन्द्रशर्मण एव नाम निर्दिश्यते ।

मूल्यादिकमस्यां नियमावलौ स्पष्टम् ।

यद्यसौ रोचेत श्रीमतां मनसे तदा ऐषमस्तनीः सर्वा अपि संख्याः प्रेषयिष्यामि । वत्सरारम्भोऽस्या वैशाखमासतः । भवद्देशे नास्त्येवास्याः प्रचारः । तन्निवेद्यतां कृपया तत्रास्याः प्रचाराय को वोद्यमो मयास्थेय इति । प्रेर्यतां पत्रोत्तरं कृपया । एधतामनुदिनमधिकाधिकमनुकम्पेति शिवम् ।

विनीतवशंवदः कृपाभिलाषी भवदीयः,

अप्पाशास्त्री राशिवडेकरः

संस्कृतचन्द्रिकासम्पादकः, कोल्हापुरम् ।

———

( १७ )

श्रीशिवः शरणम्

स्वस्ति, कोल्हापुरात्
नभसः शुक्लप्रतिपदि

सौहार्दैकरसे विद्यावधूप्रणयभाजने ।
श्रीमानविक्रमाभिख्ये भूप आवेदनं मम ॥१॥
अयि भूपतिकुलतिलक ! प्रापि मया पत्रिका भवतः ।
साकं श्रीमन्मातुः सुरुचिरचरितप्रबन्धेन ॥२॥
कुशलमिह मामकीनं चन्द्रकलाभूषणप्रसादेन ।
इच्छामि किन्तु भवतः कविमौले ! तन्मुहुः समवबोद्धुम् ॥३॥
चरितं भवज्जनन्या अचिरादेव प्रकाश्येत ।
मासिकपत्र्यामेतन्नन्दयिता यन्नितान्तमेव बुधान् ॥४॥
श्रीकृष्णमार्यविबुधैः स्यात् प्रेरितमङ्ग ते चरितम् ।
नाद्यापि किन्तु तदिदं करतलमस्माकमापतितम् ॥५॥
विदुषां वरेण्य ! दोषः सोऽयं पत्राधिकरणस्य ।
स्यादिति तर्कयतेऽयं जनः सुहृत्स्वचलविस्रम्भः ॥६॥
जननी किन्तु मदीया ज्वराभिभूताधुना नितराम् ।
संलग्ना शय्यायां हृदयं पर्याकुलीकुरुते ॥७॥
श्रीमृत्युञ्जयकृपया नूनमसावचिरमेव गदमुक्ता ।
सम्मदयेद्धृदयमिति प्रतीयते विबुधसंसेव्य ! ॥८॥
नाद्यापि शुष्कसस्या क्षितिरिह भृशमयि तथापि जनस्येयम् ।
दुष्प्रशमेव पिपासा भवेदिहोच्छुष्ककासारे ॥९॥
देशेषु केषुचित्तु प्रायो नोप्तानि सस्यानि ।
बल्वद्दवग्रहभीतैः कृषीवलैर्विप्रतीपविधिहतकैः ॥१०॥
अतिवृष्टिनष्टविभवः केरलदेशः पुनर्महाराष्ट्राः ।
वृष्टिविनाकृतिविहता अहो महन्नियतिवैषम्यम् ॥११॥
अन्यत् कुशलं बन्धो !
सर्वाङ्गीणं तु मङ्गलं भवतः ।
अवबोद्धुं कामयते
श्रीमानप्पाभिधो बन्धुः ॥१२॥

---

# पुत्रमित्रादिष्वभिनिविशमानः

[ श्रीक्षितीशचन्द्रचट्टोपाध्यायः ]

ब्रह्मसूत्रस्य शारीरकभाष्ये दृश्यते—यथा च स्वदेहगतदाहच्छेदादिनिमित्तं दुःखं तदभिमानभ्रान्त्यानुभवति तथा पुत्रमित्रादिगोचरमपि दुःखं तदभिमानभ्रान्त्यैवानुभवति—अहमेव पुत्रोऽहमेव मित्रमित्येवं स्नेहवशेन पुत्रमित्रादिष्वभिनिविशमानः [२।३।४६] इति।

अभिनिविशश्च [ २।४।४७ ] इति सूत्रेण पाणिनिना विस्पष्टमेवाभिनिविशतेराधारस्य कर्मसंज्ञा विहिता। तथापि व्याकरणार्णवकर्णधारेण पतञ्जलिनाभिनिविशतेर्योगेऽधिकरणमपि प्रयुक्तम्। तथाहि महाभाष्ये दृश्यते—स्वभावत एतेषां शब्दानामेतेष्वर्थेष्वभिनिविष्टानां निमित्तत्वेनान्वाख्यानं क्रियते [ २।१।१ ] इति, न ह्यपवादविषय उत्सर्गोऽभिनिविशते [ २।३।४६ ] इति च। अत एवार्वाचीनैर्वैयाकरणैः प्रकारान्तरेण सूत्रस्य वैभाषिकत्वं व्यवस्थापितम्।

आचार्यपादैरभिनिविशतेर्योगे कर्मापि प्रयुक्तम्—अपि च नैतदभिनिवेष्टव्यमुदात्तादिभेदेन वर्णानां प्रत्यभिज्ञायमानानां भेदो भवेदिति। इति।

अत एव काशिकाकारेणोक्तम्—कथं कल्याणेऽभिनिवेशः, पापेऽभिनिवेशः, या च संज्ञा यस्मिन् संज्ञिन्यभिनिविशत इति। अन्यतरस्यामिति वर्तते—परिक्रयणे सम्प्रदानमन्यतरस्याम् [ १।४।४४ ] इत्यतः। सा च व्यवस्थितविभाषा विज्ञायते इति।

चन्द्रवृत्तिकारेणोक्तम्—ग्राममधिशेत इति व्याप्य[कर्म]विवक्षा। एवं ग्राममधितिष्ठति, वृक्षमध्यास्ते, धर्ममभिनिविशते, त्रिरात्रमुपवसति, ग्राममनुवसति, पर्वतमधिवसति, आवसथमावसति। क्वचिदाधारविवक्षा। संज्ञा संज्ञिन्यभिनिविशते। इति।

जैनेन्द्रव्याकरणे अभिनिविशश्च [ १।२।१४३ ] इति सूत्रं वर्तते, तत्र टीकाकृता सोमदेवेनोक्तम्—चकारात् कल्याणेऽभिनिवेश इति।

शाकटायनस्यापि सूत्रम्—अभिनिविशश्च [ १।४।४७ ] इति। तत्रापि टीकाकृतोक्तम् चकारात् क्वचिन्न भवति—अर्थेऽभिनिविष्ट इति।

हेमचन्द्रेण विस्पष्टमेव वाभिनिविशः [ २।२।२२ ] इति सूत्रं प्रणीतम्, व्याख्यातं च बृहद्वृत्तौ—अभिनितोपसर्गसमुदायेन विशिष्टस्य विशेराधारः कर्मसंज्ञो वा भवति। ग्राममभिनिविशते। पर्वतमभिनिविशते। ग्रामोऽभिनिविश्यते। ग्रामोऽभिनिविष्टः। व्यवस्थितविभाषा चेयं तेन क्वचित् कर्मसंज्ञैव क्वचिदाधारसंज्ञैव भवति। कल्याणेऽभिनिविशते। या या संज्ञा यस्मिन् यस्मिन्नभिनिविशते। एतेषां शब्दानामेतेष्व[र्थेष्व]भिनिविष्टानाम्। अर्थेऽभिनिविष्टः। इति।

अत्र हेमचन्द्रलघुन्यासः—नात्र वाशब्दो विकल्पार्थो येन समकक्षतया द्वितीयासप्तम्यौ, किं तर्हि प्रयोगव्यवस्थयेति।

हैमप्रकाशे च विनयविजयगणिना परिष्कृतम्—अभिनिपूर्वस्य विशेरस्ति समुदायार्थोऽवयवार्थश्च। तत्र यत्रावयवार्थानुगमस्तत्र कर्मभावो—ग्राममभिनिविशत इति। अत्र हि ग्राममाभिमुख्येन निविशत इति प्रतीयते। यत्र तु समुदायार्थ एव नावयवार्थस्तत्राधिकरणभावः, यथा कल्याणेऽभिनिविशते। एतेषां शब्दानामेतेष्वर्थेष्वभिनिविष्टानाम्। एवम् अर्थेऽभिनिविष्टः। अत्र हि धातूपसर्गसमुदायेन मनस एकाग्रता तात्पर्यमुच्यते।

संक्षिप्तसारस्य सूत्रम्—अभिनेर्विश इति। तत्र च वृत्तिः—ग्राममभिनिविशते। गृहेऽधिष्ठानम्। कल्याणेऽभिनिवेशः। पापेऽभिनिवेशः। यस्मिन् यस्मिन्नभिनिविशत इत्याद्यपि दृश्यते।

अत्र गोयीचन्द्रः। क्वचिदपवादविषय उत्सर्गोऽभिनिविशत इति न्यायादस्मिन्नेव भाष्यकारवाक्ये अभिनिविशत इति प्रयोगाच्च व्यभिचारः क्वचिद् भवति। तेन गृहेऽधिष्ठानमित्याद्यपि दृश्यते।

टिप्पण्यां च विद्यालङ्कारेणोक्तम्—ननु स्वहस्तदत्ते मुनिमासने मुनिश्चिरन्तनस्तावदभिन्यवीविशत् [ १।१५ ] इति माघे आसन इत्यत्र कथं सप्तमी? उच्यते। ण्यन्तस्य धात्वन्तरत्वेन तदधिकरणस्य कर्मत्वाभावात्, अत एवात्मनेपदमपि न स्यात्। नन्वेवं नयोगिकं देशमधिष्ठापयतीत्यत्र देशस्य कथं कर्मत्वम्? सत्यम्। अत्र अण्यन्तस्य धातोरधिकरणत्वसम्भवान्न दोषः। अन्ये तु, यत्र ण्यन्तेन सहोपसर्गसम्बन्धस्तत्र न प्रवर्तते कर्मत्वमात्मनेपदञ्च। यत्र तु प्रथममुपसर्गसम्बन्धः पश्चाण्णिङ् [ च् ], तत्र कर्मत्वमात्मनेपदञ्च भवत्येव। एवं सनादिप्रत्ययेऽपीत्याहुः। केचित्तु आसने इति द्वितीयाद्विवचनान्तमित्याहुः।...अयमप्यकर्मकसाहचर्यादकर्मक एव। प्रवेशपूर्वकस्थितावर्थेऽप्यस्याकर्मकत्वम्, तेन केवलप्रवेशार्थे सकर्मकत्वे ग्रामे गृहमभिनिविशत इत्यादि। नन्वेवं कर्मणि द्वितीयायां यस्मिन्नभिनिवेश इत्यादावाधारत्वेन सप्तम्यां सिद्धायां किं लक्षणेन? मैवं, तथा सति गृहं देवदत्तमभिनिवेशयतीत्यत्र प्रयोज्यस्य कर्मत्वं न स्यात्। इति।

मुग्धबोधेऽपि कर्मक्रियाविशेषणाभिनिविशाधिशीङ्स्थासन्वध्युपावस-ङं ढं द्वी [२८२] इति सूत्रेणाभिनिविशतेराधारस्य कर्मसंज्ञा विहिता। ङ = अधिकरणम्, ढ=कर्म। द्वी=द्वितीया। तत्र च "रामं नमति सानन्दं धर्मानभिनिविश्य सन्" इत्युदाहरणम्। तत्र रामतर्कवागीशसमाख्यटीकाकारेणोक्तम्—कल्याणेऽभिनिवेशः, या या संज्ञा यस्मिन् यस्मिन्नभिनिविशते, त्वय्यभिनिविष्टमनसः, अत्राधिष्ठानं कुरु, गृहेऽधिष्ठानमित्यादौ तु क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इति न्यायात् ङम् [ अधिकरणम् ] एव। इति। दुर्गादासेन चोक्तम्—अत्र

गृहेऽधिष्ठानम्, कल्याणेऽभिनिवेशः, यस्मिन् यस्मिन्नभिनिविशत इत्याद्यपि दृश्यत इति जौमराः। स्वहस्तदत्ते मुनिमासने मुनिश्चिरन्तनस्तावदभिन्यवीविशदिति माघ इत्यादिकं त्वातिदेशिकमनित्यमिति न्यायात् समाधानीयम्। इति।

प्रयोगरत्नमालायामभिनिविशतेर्योगे विकल्पेन द्वितीया विहिता। तथाच तदुक्तं सूत्रम्—

उपान्वध्याङ्पूर्वस्य वसतेर्वाभिनेर्विशः।
अधेः परेषां शीङ्स्थासामाधारः कर्म गीयते॥ इति।

तत्र च वृत्तिः। ग्राममभिनिविशते। वा। स्वहस्तदत्ते मुनिमासने मुनिश्चिरन्तनस्तावदभिन्यवीविशत्। इति माघः। या या संज्ञा यस्मिन् यस्मिन्नभिनिविशते इति महाभाष्यम्। इति।

सिद्धान्तकौमुद्यां भट्टोजिभट्टेनोक्तम्—परिक्रयणे सम्प्रदानमिति सूत्रादिह मण्डूकप्लुत्यान्यतरस्यांग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणात् क्वचिन्न। पापेऽभिनिवेशः।

व्याख्यातं चेदं नागेशभट्टेन—व्यवस्थितेति। परिक्रयण इत्यतोऽन्यतरस्यां ग्रहणानुवृत्तेरस्य वैकल्पिकत्वम्। अतिप्रसङ्गस्त्वनभिधानाद्वारणीयः। एतच्च एष्वर्थेष्वभिनिविष्टानामिति प्रतीके समर्थसूत्रे कैयटः। परे त्वेतद्भाष्यप्रयोगात् अभिनिविश् इत्यानुपूर्व्या अविकृताया यत्र श्रवणं तत्रैवैतत्सूत्रप्रवृत्तिः। अन्यतरस्यांग्रहणानुवृत्तौ व्यवस्थितविभाषाश्रयणे च न मानमित्याहुः। इति। (क्रमशः)

---

## विश्वासघातकः

पुत्रः। तात, कस्तावद् विश्वासघातक उच्यते?

पिता। योऽस्माकं पक्षं परित्यज्य परपक्षं समाश्रयति।

पुत्रः। यः परपक्षं परित्यज्यास्मत्पक्षमाश्रयति स कथं व्यपदिश्यते?

पिता। स्वदेशप्रेमिक इति।

---

## भावग्राही जनार्दनः।

प्रातरुत्थाय वैष्णवस्य सुमधुरं गीतं श्रुतम्—

हरि हराय नमः विष्णु विष्णाय नमः।
यादवाय माधवाय केशवाय नमः॥

इति। सुष्ठु खलूक्तमभियुक्तैः—

मूर्खो वदति विष्णाय ज्ञानी वदति विष्णवे।
द्वयोरेव समं पुण्यं भावग्राही जनार्दनः॥ इति।

---

# बहुलीभूताः प्रमादाः

[ श्रीक्षितीशचन्द्रचट्टोपाध्यायः ]

## व्याचक्ष्य—व्याचक्षमाण—आचक्षित-

मनुसंहितागतस्य

कुशूलधान्यको वा स्यात् कुम्भीधान्यक एव वा ।
त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा ॥ [४।७]

इति श्लोकं व्याचक्षाणेन विपश्चिद्वृन्दवृन्दारकेण कुल्लूकभट्टेनोक्तम्—गोविन्दराजस्तु कुशूलधान्यक इत्येतद् व्याचक्ष्य काष्ठप्रमाणधान्यसञ्चयो वा स्याद् द्वादशाहमात्रपर्याप्तधनः, कुम्भीधान्यक इत्येतद् व्याचष्टे उष्ट्रिकाप्रमाणो धान्यादिसञ्चयो वा षडहमात्रपर्याप्तधन इति। अत्र व्याचक्ष्य इत्यपपाठः, चक्षिङः ख्याञिति ख्याञादेशप्रसङ्गात्। अत एव व्याख्यायेति पठनीयम्। एवं बहुभि र्व्याचक्षमाण इति विलिख्यते, तदप्यसाधु, धातोर्व्यञ्जनान्ततया शपश्चाप्रतिष्ठानाद् आने मुगित्यस्याप्राप्तेः।

शाकुन्तले षष्ठाङ्कस्थस्य—ण विसुमरामि। किन्तु सव्वं कहिअ अवसाणे उण तुए परिहासविअप्पओ एसो न भूदत्थोत्ति आचक्खिदं इत्यस्य सप्तमाङ्कस्थस्य च—अहवा यह सानुमदीए आचक्खिदं तह सम्भावीअदि एदं इत्यस्यच्छायायां Monier Williams महोदयस्य पुस्तके आचक्षितम् इत्युपलभ्यते। तच्च व्यक्तमेव प्रामादिकम्, आर्धधातुके ख्याञादेशप्रसङ्गात्।

पञ्चमाङ्कगतस्य ण जुत्तं णाम दे...इमं जणं समअपुव्वं पदारिअ ईदिसेहिं अक्खरेहिं पच्चाचक्खिदुं इत्यत्रापि M. W. पुस्तके छायायां 'प्रत्याचष्टुम्' इति दृश्यते। प्रत्याचक्षितुम् इति सम्भवति, वर्जने प्रतिषेध इत्युक्तेः।

---

## अनुरूपोक्तयः

नैव स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता। ऋ० सं०,१०।९५।१५

शालावृकाणां स्त्रीणाञ्च स्वैरिणीनां सुरद्विषः।
सख्यान्याहुरनित्यानि नूत्नं नूत्नं विचिन्वताम्॥ श्रीमद्भागवते ८।९।१०

हे सुरद्विष इति सम्बोधनम्। विचिन्वताम् अन्विष्यताम्।

न स्त्रीणामप्रियः कश्चित्प्रियो वापि न विद्यते।
गावस्तृणमिवारण्ये प्रार्थयन्ति नवं नवम्॥

प्रार्थयन्तीत्यार्षम्।

---

# प्रकरणे शकारः

## [ श्रीशिवप्रसादभट्टाचार्यः ]

शकारचरिते द्वितीयं प्रमोदस्थानं तस्य धनजनितेन पदमर्यादासहकृतेन भोगपरिपाटीप्रकटनपटुना वाह्वास्फोटेन स्वकीयनिरङ्कुशत्वप्रचारः। दरिद्रचारुदत्ते यदि वा कुत्रापि विनयभङ्गी समावेदिता स्यात्, यथा—भो चारुदत्त! लाअशाले शण्ठाणे शवट्टेण शीशेण अणुवन्दिअ विण्णवेदि णाडयइत्थिया वशन्तशेणिआ णाम गणिआदारिया अम्हेहि वलक्कालेण णीयमाणा महत्तेण शुवण्णालङ्कालेण तुमूह्याणं गेहं पविट्ठा। सा शुवे णिज्जाअइदव्वेति विदूषकेण चारुदत्ताय निवेदितं शकारादेशेन। मृच्छकटिके तु मदमत्तस्य तस्य प्रश्रयगन्धोऽपि तिरोभूतो यथा व्यवहाराङ्केऽधिकरणिकं प्रति शकारस्य तिरस्कारगर्भे मन्तव्ये—आः किं ण दीशदि मम ववहाले। जइ ण दीशदि, तदो आवुत्तं लायाणं पालअं वहिणीवदिं विण्णविअ वहिणिं अन्तिकं च विण्णविअ एदं अधिअलणियं दूरे फेलिअ एत्थ अण्णं अधिअलणिअं ठावइश्शं।' इति। पूर्वनिर्दिष्टे च प्रकरणे विदूषकं प्रति शकारोक्तौ अले दुट्ठवडुआ भणेहि मम वअणेण तं दलिद्दचालुदत्तअं एशा·· गणिआदालिआ तुमं अणुलत्ता अम्हेहि वलक्कालेण णीयमाणा तुह गेहं पविट्ठा। ता जइ मह हत्थे शअं ज्जेव पट्ठाविअ एणं शमप्पेशि तदो अहिअलयणे ववहालं विणा लहु णिज्जादमाणाह तव मए अणुवद्धा पीदी हुविश्शदि। आदु अणिज्जादमाणाह मलणन्तिके वेले हुविश्शदि। अविअ पेक्ख.. अण्णधा यदि भणेशि ता कवालपविट्ठकवित्थगुडिअं विअ मश्तकं दे मडमडाइश्शं। इत्युक्तौ तस्य साटोपाहंकृतिः स्फुटा। खलप्रकृतिकस्य तस्य धनं पदवैभवञ्च मदाय परेषां परिपीडनाय चोपयुक्तमासीत्। एवमेव वसन्तसेनामोटनाङ्के प्रवहणविपर्ययक्रमेणानीतां वसन्तसेनां मारयितुं तामवतार्यैवाकाण्डे जीर्णकरण्डकोद्यानप्रान्ते स्थितं स्थावरकं चेटं मालेहि वसन्तशेणिअं इत्यादिशन्नपि यदा तमधर्मभीरुं तदकार्ये प्रवर्त्तयितुं नाशकत्तदा अधम्मभीलू एशे वुड्ढकोले। भोदु थावलअं चेडं अणुणेमि। पुत्तया थावलया चेडा शोवण्णखण्डुआइं दइश्शं। शोवण्णं दे पीढके कालइश्शं। शव्वं दे उच्छिश्टअं दइश्शं शव्वचेडाणं महत्तलकं कलइश्शं। इति स्वविभवमास्फालयन्नप्यकृतकृत्यो हगे लट्ठिअशाले कश्श भाआमि वलपुलिशमनुश्शो इत्यवधार्य तं समुत्पन्ने कार्ये वैरिणं निरूप्य एव्वं दे मोडइश्शामि जडाऊ विअ दोवदिं इति कण्ठेऽपीडयत्। तस्य भोगपारिपाट्यमौदरिकचरितोचितं वेशविलासव्यञ्जकञ्च, जदिच्छशे लम्बदशाविशालं पावालअं शुत्तशदेहिं जुत्तं। मंशं च खादुं तह तुश्टि कादुं चूहू चूहू चुक्कु चूहू चहुत्ति॥ इत्यादिभिः स्वपरितृप्तिसूचकैर्वचनैः परिस्फुटञ्च।

मनोरथपूरणाय क्रूरताया वैशसस्य च परं पारमासादयितुं बद्धपरिकरोऽयमुल्लिखित-वसन्तसेनामोटनवृत्तान्तेन नायकस्य शूलरोपणपर्यन्तप्रयासेन चात्मानं सार्थकप्रयत्न-मवधारयति। दरिद्रचारुदत्ते तस्यामुख एव स्वकीयं विटं प्रति इत्थं निदेशः मालिश वड्ड्ञ! मालिश! भणेहि तं दलिद्दशत्थवाहपुत्तं चालुदत्तवडुअं मम वअणेण।...मा दाशीएपुत्त! पारावदगलप्पविट्ठं विअ मूलकन्दं शीशकवालं मडमडाइशं। इति। मृच्छकटिके च संहाराङ्के "तक्केमि दलिद्दचालुदत्तके वज्झट्ठाणं णीअदित्ति। ता पेक्खिश्शं। शत्तु विणाशे णाम मम महन्ते हलक्कश्श परिदोशे होदि। शुदं च मए जेऽवि किल शत्तुं वावादयन्तं पेक्खदि तश्श अण्णश्शिं जन्मन्तले अक्खिलोगे न होदि। मए खलु विशगण्ठिगब्भपविट्ठेण विअ कीडएण किंपि अन्तलं मग्गमाणेण उप्पादिदे ताह दलिद्द-चालुदत्ताह विणाशे। इत्युल्लासप्रकटनं शकारोचितमेव। तस्मिन् क्रूरता खलता च परस्परार्थे रन्ध्रोपनिपातिनमनर्थं घटयितुं सन्ततमुद्युक्ते। सुष्ठु खल्विदमुच्यते—

अकरुणत्वमकारणविग्रहः परधने परयोषिति च स्पृहा।

सुजनबन्धुजनेष्वसहिष्णुता प्रकृतिसिद्धमिदं हि दुरात्मनाम्॥ इति॥

व्यवहाराङ्के शकारकृताभियोगश्रवणकाले यदैवाधिकरणिको वदति आर्यचारुदत्तः खल्वसौ कथमिदमकार्यं करिष्यति? इति, तदैव तस्य मुखमुद्रणाय शकारेणावादि किं पक्खवादेन ववहाले दीशदि इति। धर्मकञ्चुकप्रवेशिनो वकधार्मिकस्य तस्य स्वापराधाच्छादन-कल्पेन निरपराधं बुद्धोपासकं ताडयितुं प्रवृत्तस्य क्लिन्नेन ताडितेन तपस्विना। मुच्यताम्। गच्छत्विति विटेनोपरोधे कृते स्वकीयहृदयसम्प्रधारणं स्वविवेकपरामर्शः—अले चिट्ठ दाव जाव शम्पधालेमि।...पुत्तका हडक्का, भश्टके पुत्तके, एशे शमणके अवि णाम किं गच्छदु किं चिश्टदु। (स्वगतम्) णावि गच्छदु णावि चिश्टदु।···मावि ऊशशदु मावि णीशशदु। इध ज्जेव झत्ति पडिअ मलेदु। इत्युपहासकल्प एव श्रूयते। विटेन साधूक्तम्—अहो मूर्खता!

विपर्यस्तमनश्चेष्टैः शिलाशकलवर्ष्मभिः।

मांसवृक्षैरियं मूर्खैर्भाराक्रान्ता वसुन्धरा॥ इति।

मार्मिकैः पुनरित्थमत्रोच्येत तं जनमसत्यसन्धं भगवति वसुधे कथं वहसीति। एवमेवास्यात्म-प्रवञ्चनशीलस्यानृतभाषिणो धर्माधिकरणे साक्ष्योपन्यासः 'देव्वजोएण पेक्खामि ण पेक्खामि वा इत्थिआशलीलं निवडिदं' इति। तत्राधिकरणिकप्रश्ने अथ ज्ञायते का स्त्री विपन्नेति तेन कथितं 'हंहो अधिअलणाभोइआ किंत्ति ण जाणामि। तं तादिशिं णअलमण्डणं कञ्चनशदभूशणिअं केण वि कुपुत्तेण अत्थकल्लवत्तश्श कालणादो शुण्णं पुप्फ-कलण्डअजिण्णुज्जाणं पवेशिअ बाहुपाशबलक्कालेण वसन्तशेणिआ मालिदा न मए। इति।

"मदमानसमुद्धतं नृपं न वियुङ्क्ते नियमेन मूढते"त्याह कविः। नृपपदेनात्र नृपाश्रितानां परमुखप्रेक्षिणां ग्रहणे शकारस्य मोहस्तज्जनिता विपच्चावश्यम्भावितया-याति। दैवायत्तफले नायकादीनां साधूनामपि यत्र विपत्पातोऽपरिहार्यस्तत्र पुरुष-व्यापारं शौर्यौदार्यादिकमननुमन्यमानस्य धनादिमदेनैव कार्यसिद्धिं प्रतीक्षमाणस्य च संसारे विशेषतो न्यायादेव जय इति विधिमुपदिशतो नाट्यस्य तात्पर्यवति परिणामे विपद्विपदमनुबध्नातीति घटत एव। अन्यच्च यत् प्रकृत्या भीरुरयं शौर्यमभिनयति तत्तु च्छलकृतं तस्याटोपबाहुल्यविजृम्भितम्। दरिद्रचारुदत्तरूपके प्रथमाङ्के अभिसारसहायेन विटेन नायिकां वसन्तसेनां ग्राहयितुं प्रवर्तयति सखिभावे गह्णाण परन्तु प्रेम्णा शौर्येण वा न ग्रहीतुं शक्नोति तथाप्यास्फालयति दाशीए पुत्ती शीशं दाव च्छिन्दिअ पच्छा मानयिश्शं। इति। कृते निश्चये णहि लअणकुम्भशलिशे हग्गे इत्थिअं वावादेमि इति गर्जति च। तत्र दैवादागन्तुना स्थावरकेण चेटेनावस्थावैपरीत्यं मानयता भीतः स्वगतं वदति अविद मादिके...कथं थावलगे चेडे शुरुदु ण मए शंजदे। तमुत्कोचदानेन वशीकर्तुं व्यर्थं प्रयतते च। ततश्च वसन्तसेनायां वध्यभूमिं प्रति द्रुतमुपसरन्त्यां शकारस्तां दृष्ट्वा चकितचकितं व्याहरति हीमादिके! केण गब्भदाशी जीवाविदा। उक्कन्ताइं मे पाणाइं। भोदु पलाइश्शं। ततश्च नियतिचक्रस्यान्तिमे विवर्तनेऽरे रे राष्ट्रियश्यालक एह्येहि स्वस्याविनयस्य फलमनुभवेति नेपथ्य उच्चारितं शर्विलकवचनमाकर्णयन् पुरुषैरधिष्ठितः पश्चाद् बद्धबाहुः शकार आक्रोशति हीमादिके—

एव्वं दूलमदिक्कन्ते उद्दामे विअ गद्दहे।
आणीदे क्खु हगे बद्धे हुडे अण्णे व्व दुक्कले॥

चिरमात्मानं बहुमाननीयं मन्तुमुचितश्चतुर्दिक्षु जनसम्मर्दमुपलभमानः कथयति 'शमन्तो उवट्ठिदे एशे लस्टिअवन्धे। ता कं दाणिं अशलणे शलणं वजामि। इति निपुणं विवेक-स्फूर्त्या चिन्तयित्वा भो दु तं जेव्व अब्भुवण्णशलणवच्छलं गच्छामि इति मनसि निधाय अज्जचालुदत्त परित्ताआहि परित्ताआहि इति तच्चरणयोः पतति। जं तुए सदिशं तं कलेहि। पुणो ण ईदिशं कलिश्शं इति प्रार्थयते। तेन च

शत्रुः कृतापराधः शरणमुपेत्य पादयोः पतितः।
शस्त्रेण न हन्तव्य उपकारहतस्तु कर्तव्यः॥

इति सौगतोचितेन नयेन परित्रातो मुक्तश्च। शकारश्च 'पच्चुज्जीविदेह्मि' इति पुरुषैः सह निष्क्रामति। दुर्वृत्तानां दमनक्रिया साधिता। लोकश्चानुशिष्टो निर्वहण उदर्केण वृत्तेन। 'दुर्मेधसो हि न्याय्ये वर्त्मनि वृत्त्यर्थं कवयोऽभिनेयप्रबन्धान् प्रथ्नन्ती'ति न्यायेन योग्योऽयमुपसंहारः।                    ( क्रमशः )

———

# अनुबन्धो णकारः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

१। णिति कृत्यन्त्यस्याच उपधायाश्चाकारस्य वृद्धिर्भवति। णिति तद्धितेऽचामादेर्वृद्धिर्भवति। णकारोऽयं गुणशब्दतो गृहीत इत्यत्र लेशतोऽपि संशयो नास्ति। गुणस्थलेऽप्यकारेण वर्धनं भवति। तथाहि अ+इ=ए। अ+उ= ओ। अत एव वृद्धयर्थं णकारोऽप्युपादीयते। ञकारेण यत्र वृद्धिर्भवति तत्राद्युदात्तत्वमपेक्ष्यते। यत्र वृद्धिरप्यपेक्ष्यते, आद्युदात्तत्वमपि नेष्यते तत्र णकारोऽनुबन्ध आसज्यते। णिति प्रत्यये परत इकारोकारयोरुपधास्थयोर्गुणो भवत्येव।

२। मुग्धबोधमते णकारः फणादित्वं सूचयति। फणधातोर्णकारो गृहीत इति स्पष्टमेव।

३। कातन्त्रव्याकरणे पाणिने ङकारस्य ककारस्य च स्थाने णकारः प्रयुज्यते। श्रिद्रुस्रुकमिकारितान्तेभ्यश्चण् कर्तरि ३।२।२६, अण् असुवचिख्यातिलिपिसिचिह्वः ३।२।२७, सार्वधातुके यण् ३।२।३१। न णकारानुबन्धचेक्रीयितयोः [ ४।१।७ ] इति गुणो निषिद्धः। गुणशब्दस्य णकारेणैव गुणो निषिध्यते। अत एव वङ्गीयानामाभाणकः—यार शिल यार नोडा तारइ भाङ्गि दाँतेर गोडा। यस्य शिला यस्य शिलापुत्रकस्तस्यैव भनज्मि दन्तमूलकमिति। क्षीणशब्दाद् गृहीतोऽयं णकार इत्यपि सम्भवति।

४। इण्-दाण्-प्रभृतिषु धातुषु णकारो विशेषणार्थः। दानशब्दे नकारो वर्तते तदनुसारेण दाधातोर्विशेषणार्थं तत्सजातीयो णकार उपादीयते।

---

# कुम्भकर्णे भकारोऽस्ति

The Sunday Statesman पत्रे (March 12, 1961, पृः १ स्तम्भ ६) दृष्टम्—the minister agreed that "we have too many selling shop" इति। Sheep शब्दस्य बहुवचने sheep भवति, अत एव shop शब्दस्यापि बहुवचने shop इति भवितव्यमित्यभिमानः।

---

# मेघदूतसञ्जीवनीविमर्शः

[ श्रीक्षितीशचन्द्रचट्टोपाध्यायः ]

उत्तरमेघस्य द्वात्रिंशत्तमश्लोकस्य सञ्जीवन्यां दृश्यते—

ननु किमिदमादिमां चक्षुःप्रीतिमुपेक्ष्यावस्थान्तराण्येव तत्रभवान् कविरादृतवान् ? उच्यते ।—

सम्भोगो विप्रलम्भश्च द्विधा शृङ्गार उच्यते ।
संयुक्तयोस्तु सम्भोगो विप्रलम्भो वियुक्तयोः ॥१॥
पूर्वानुरागमानाख्यप्रवासकरुणात्मना ।
विप्रलम्भश्चतुर्धात्र, प्रवासस्तत्र च त्रिधा ॥
कार्यतः सम्भ्रमाच्छापाद्, अस्मिन् काव्ये तु शापजः ॥२॥
प्रागसङ्गतयोर्यूनोः सति पूर्वानुरञ्जने ।
चक्षुःप्रीत्यादयोऽवस्था दश स्युस्तत्क्रमो यथा ॥३॥
दृङ्मनःसङ्गसंकल्पा जागरः कृशता रतिः ।
ह्रीत्यागोन्मादमूर्छान्ता इत्यनङ्गदशा दश ॥४॥
पूर्वसङ्गतयोरेव प्रवास इति कारणात् ।
न तत्रापूर्ववत् चक्षुःप्रीतिरुत्पत्तिमर्हति ॥५॥
हृत्सङ्गस्य तु सिद्धस्याप्यविच्छेदोऽत्र वर्ण्यते ।
अन्यथा पूर्ववद्वाच्या इति तावद्व्यवस्थितेः ॥६॥
वैयर्थ्यादादिमां हित्वा वैरस्यादन्तिमान्तथा ।
हृत्सङ्गादीनीहाचष्ट कविरष्टाविति स्थितिः ॥७॥
मत्सादृश्यं लिखन्तीति [ २।२४ ] पद्येऽस्मिन्प्रतिपादिता ।
चक्षुःप्रीतिरिति प्रोक्तं निरुत्तरकृताननम् ॥८॥
चक्षुःप्रीतिर्भवेच्चित्रेष्वदृष्टचरदर्शनात् ।
यथा मालविकारूपमग्निमित्रस्य पश्यतः ॥९॥
प्रोषितानां तु भर्तॄणां क्व दृष्टा दृष्टपूर्वता ।
अथ तत्रापि सन्देहे स्वकलत्राणि पृच्छतु ॥१०॥
किं भर्तृप्रत्यभिज्ञा स्यात् किं वैदेशिकभावना ।
प्रवासादागते स्वस्मिन्नित्यलं कलहैर्वृथा ॥ इति ॥११॥

अत्र सर्वत्र चक्षुःप्रीतिरित्यत्र चक्षुष्प्रीतिरिति पाठ्यम्। कृशता रतिरित्यत्र कृशताऽऽरतिरिति पठनीयम्। पञ्चमश्लोके न तत्रापूर्वचक्षुष्प्रीतिरुत्पत्तुमर्हति षष्ठश्लोके च अन्याश्चापूर्वद्वाच्या इति तावद् व्यवस्थितिः। इति पठनीयम्। सप्तमे च हृत्सङ्गादीरिहाचष्टेति पाठ्यम्। नवमदशमयोश्च चक्षुष्प्रीतिरिति प्रोक्तं निरुक्तकृता ननु॥ प्रोषितानां तु भर्तॄणां क दृष्टाऽऽदृष्टपूर्वता। इति पठनीयमिति प्रतिभाति।

अत्र बीजमेतदेव। मल्लिनाथात् प्राचीनतरेण टीकाकृता निरुक्तकारेण 'कालिदासेन दशस्वनङ्गदशासु प्रथमैव न वर्णिते'ति दोष उद्भावित इति प्रतिभाति। मल्लिनाथेन स्वरचितैः श्लोकैस्तस्य दोषस्य शशविषाणकल्पत्वं प्रतिपाद्यते।

---

# GREEK WORDS IN SANSKRIT

KSHITISHCHANDRA CHATTERJEE, M.A., D.LITT.

[ *Calcutta Review*, September, 1949 ]

(3) The name of the third sign is Jituma. It is Gk. *didumos* in Skt. garb. The Gk. word is the reduplicated form of *duo* 'two' (like Skt. *dvandva*) with the suffix *-mos* (which is found also in Gk. *amphidumos* 'double twin') and is generally used in the plural form *didumoi*. Though the original sound which appears as δ in Gk. is represented by *d* in Skt. also (*e.g.*, Gk. *deka*, Skt. *daśa*, Gk. *domos*, Skt. *damah* ; Gk. *duo*, Skt. *dvau*), still in borrowed words Gk. δ is often represented by *j* also in Skt. Thus for *Aphrodite* we find *Āsphujit* in Skt., for Gk. *diametron* we have *jāmitra* and so on. In Skt. *Dṛkkāṇa* for Gk. *dekanos*. Skt. *dyūna* or *dyūta* for Gk. *duton*, Skt. *drahma* for Gk. *drakhmē* etc., Gk. δ is represented by *d* in Skt. The second *d* of *didumos* is changed into *t* to make it look more like Skt., the sffix *-tum* being very common in the classical language.

This would appear to indicate that at the period when these Gk. words were borrowed in Skt., Gk. δ partook of the nature of both *d* and *j* (just as at the present day some people pronounce English words like *education* with *d* and some with *j*).

The Latin name of the sign is Gemini which is the plural of *geminus* 'twin' and is a literal translation of Gk. *didumoi*. The root is *gem* 'to join, unite, fasten.' From this root we have *jāmi* 'brother or sister' and *jāmātṛ* 'son-in-law', etc. in Skt., *gamos* 'marriage', *gambros* 'a relation by marriage, son-in-law, sister's husband, wife's brother, father-in-law' in Gk. and *gener* (originally *gemer*) 'son-in-law' in Latin.

The Skt. name Mithuna comes from the root *mith* which meant originally 'to change, exchange, alternate' and then signified on the one hand 'to engage in altercation' and on the other 'to associate.' Thus Mithuna means a pair (consisting of a male and a female) and in Skt. works on Astrology the sign is described as a man with a club and a girl with a lyre. In Gk. works, however, the sign takes its name from the most prominent constellation consisting of the brothers Castor and Pollux. Thus Virgil says:

Fair Leda's twins, in time to stars decreed
One fought on foot, one curbed the fiery steed.

In is interesting to note in this connexion that the word *mithuna* was originally masculine, but gradually with the predominance of logic which Earle defines for purposes of philology as "an intellectual consistency in syntax, a regularity of language which glides smoothly and with a sense of consecutiveness", the word became neuter.

---

# समीचीनम्

श्रीमान् गगनविहारी महोदयः प्रख्यातो ज्योतिर्वित्तान्त्रिकः कण्ठस्वरपरिवर्तनचतुरश्च। तस्य गृहस्य पुरस्तात् सुविशाले काष्ठफलके सुबृहद्भिरक्षरैस्तस्य सर्वविधं पाटवं विस्तरेणोपवर्णितं वर्तते। एकदा काचन पतिवियोगविधुरा बाला तं शरणमियाय। पप्रच्छ च, आर्य, स्वर्गतेन जनेन संलापः सम्भवति वा? इति। तेनोक्तम्—बाढं सम्भवति। केन संलपितुमिष्यते भवत्येति। तयोक्तम्—मम परलोकनवप्रणयिना पत्येति। ततश्च तेन बहवो मन्त्रा उच्चारिता घण्टा च मुहुर्मुहुर्वादिता, ततश्च शब्दः श्रवणसरणिमापतितः—अपि कुशलं ते प्रिये इति। तयोक्तं कथं वा हतभागधेयायाः कुशलं सम्भवेत्? त्वं तावत्परलोके सुखेन निवससि वेति।

"महता सुखेन। अत्र दुःखस्य लेशोऽपि नास्ति केवलं भवत्याः कृते मनः समुत्कण्ठते। मया तु चिरमत्र स्थातुं न शक्यते। इदानीमेव गम्यते।"

"केवलमुच्यतां देवभाषा त्वया कदा शिक्षितेति।"

# जिज्ञासा मीमांसा च

## Accent—निर्मक्षिक-

१। बहवः पृच्छन्ति—Accent, pitch accent, stress accent शब्दानां के तावदाङ्ग्लप्रतिशब्दा इति।

## उत्तरम्

Accent—स्वरः। Pitch accent—गीतिस्वरः, गानस्वरो वा। Stress accent—प्राणस्वरो बलस्वरो वा।

२। कश्चनाध्यापकः पृच्छति—निर्मक्षिकशब्दस्य कोऽर्थ इति।

उत्तरम्। (१) निर्गता मक्षिका यस्मात् तन्निर्मक्षिकम्। यथा बृहत्कथाश्लोकसंग्रहे—

अथ निर्मक्षिकं भद्र मधु पातुं मनोरथः।
जहि घातय बालं मे पतिं नित्यं प्रमादिनम्॥ इति।

निर्मक्षिकं मधु निरन्तरायं सुखम्।

(२) मक्षिकाणामभाव इति निर्मक्षिकम्। अभावार्थेऽव्ययीभावः। जनराहित्यमित्यर्थः। मक्षिकाणामभावे जनानामभावो दण्डापूपिकान्यायेन सिध्यति। तथाच शाकुन्तले द्वितीयेऽङ्के षष्ठेऽङ्के च प्रयोगः—कृतं भवता निर्मक्षिकमिति।

———

# रसमञ्जरी

[ श्रीक्षितीशचन्द्रचट्टोपाध्यायः ]

गुरुः। अरे मधो, त्वमतीवालसः, किमपि न करोषि। कथं त्वं सिद्धिं लप्स्यसे?

मधुः। आर्य, कर्मणः फलं व्याधिरिति गीतासु भगवतो घण्टाघोषः।

गुरुः। वत्स! अत्यद्भुतमिव त्वं ब्रवीषि। शैशवादारभ्य सहस्रकृत्वो मया गीता पठिता चानुशीलिता च। आलस्यस्य प्रशंसा तु क्वापि न दृष्टा।

मधुः। आर्य! स्मर्यतां तावद् द्वितीयाध्यायगतं वचनं कर्मणि व्याधिकारस्ते मा फलेषु कदाचनेति। अस्य चार्थः कर्म एव व्याधीनामाकरः। सञ्जाते च व्याधौ कदल्यादिफलेषु कदापि स्पृहा न कर्तव्येति।

गुरुः। वत्स! तव पाठश्च व्याख्यानं चोभयमेव सममेव चेतश्चमत्करोति। चिरं जीव।

———

# दीनदास-रघुनाथम्

( नाटकम् )

डक्टर-श्रीयतीन्द्रविमलचतुर्धुरीण-विरचितम्

## प्रस्तावना

( नान्दी )

स्वरूप-दामोदरदत्तचित्तं
कोटीश्वरं न्यस्त-समस्तवित्तम् ।
गृहीत-वृन्दावनधामवासं
नमामि भक्तं रघुनाथदासम् ॥१॥

यस्त्यक्तं पशुनापि पांशुसहितं रथ्याकदन्नादिकं
सन्तोषामृततृप्त-मानसतया भुङ्क्ते विकारोज्झितः ।
गम्भीरासदने महाप्रभुकृतां गम्भीरलीलाञ्च यो
दीर्घं कालमलोकत प्रतिदिनं, तं दीनदासं भजे ॥२॥

गम्भीरा-गम्भीर-लीला-दीर्घालोकं
सनातन-रूप-पादपद्मनतम् ।
राधाकुण्ड-श्रीराधिकार्चनरतं
'जाह्नवी'-दर्शनाक्रन्दं महाव्रतम् ॥३॥

[ नान्द्यन्ते ]

सूत्रधारः । नमः फाल्गुन-पूर्णिमा-चन्द्रमोदुथतिहराय श्रीश्री-महाप्रभवे ।

महाप्रभोर्धरणीतलावतरणादनन्तरं समापतिताऽद्य चतुःसप्तत्युत्तरचतुःशततमाब्दीया फाल्गुनी पूर्णिमारजनी। तस्मादवसरोऽयं महाप्रभोर्जीवनलीलापर्यालोचनस्य। अस्मिँल्लीलावतरणे महाप्रभोः पण आसीद् अकारणकरुणावितरणम्, भक्तानां महिमवर्धनं तेषां महिमविघोषणञ्च। इतः पूर्वम् अस्माभिः संपीतं नामाचार्य-श्रीहरिदास-चरितामृतम्। नूनमतुलनीयमहिमा तत्रभवान् हरिदासः।

तथाहि—

आर्याचारपराङ्मुखे विधिवशाद् वंशे प्रजातोऽप्ययं
श्रीचैतन्यमहाप्रभोरतिशयो भक्तोऽन्तरङ्गोऽभवत्।
सिद्धिं साधनया गतोऽपि महतीमेकान्तिसाधूत्तमः
स्वं यो नीचतमं विचिन्त्य विजने सङ्गोज्झितः संस्थितः ॥४॥

अन्येऽपि वहवो विद्यन्ते श्रीमहाप्रभु-विष्णुप्रिया-शिष्यगोष्ठीषु भक्तमहत्तमा, ये निगूढवैभवाः परमपूजार्हाश्च। तादृशवरणीय एको दैन्यमूर्तिस्त्यागावतारः सप्तग्रामस्थ-कृष्णपुर-निवासी श्रीरघुनाथदासः।

अयमपि महाजनः,

सन्न्यासं समुपेत्य यौवनमदप्रोद्दाम-कालेऽप्यहो
यो लावण्यजिताप्सरःसुनयनां पत्नीमपि त्यक्तवान्।
निःसङ्गोऽपि महाप्रभुः समभवद् यस्योच्चकैर्वत्सलः
स श्रीमान् रघुनाथदास-सुकृती सर्वोत्तमो वैष्णवे ॥५॥

तस्य जीवनमवलम्ब्य लिखितं दीनदासरघुनाथसमाख्यमेकं संस्कृत-नाटकं पश्चिमवङ्ग-सर्वकारीय-संस्कृत-शिक्षा-परिषदध्यक्षेण श्रीमता डक्टर-यतीन्द्रविमलचतुर्धुरीणेन। अनुमतिर्दीयते चेद् भवद्भिः समवेतैर्भक्तजनैस्तर्हि तदेव दीनदासरघुनाथसमाख्यं नाटकमस्माभिः प्रयोक्ष्यते।

[ समास्थैर्जनैः "साधु" "साधु" इत्युद्घोष्यते। ]

सूत्रधारः। [ नटीमुद्दिश्य ] आर्ये ! कथमस्मिन् पुण्यदिवसे दूरं गताऽसि। आनन्ददिवसे आत्मजनानां सन्निकर्षः प्राथम्येन काङ्क्ष्यते। आगच्छागच्छ, इत इतः।

नटी। [ त्वरितं प्रविश्य ] देव! आगतास्मि। किन्तु—

सूत्रधारः। "किन्तु" इति किम् ?

नटी। भवताहम् आदिष्टा सर्वरङ्गकृत्यानां व्यवस्थापनाय पर्यवलोकनाय च। तत्र सुतरां व्यग्रासम्।

सूत्रधारः। तत् स्मर्यते खलु। किन्तु नाट्यारम्भेऽतोधिको विलम्बो न करणीय इति विचिन्त्य त्वामाह्वयामि।

नटी। तत् सुष्ठु कृतम्। जीवनरङ्गोऽपीदृश एव। अत्रापि सर्वदा जायते प्रयोजनाद् गुरुतरं प्रयोजनम्, विषयाद् विषयान्तरे स्वात्मशक्तिसंयोजनकारणञ्च

सूत्रधारः। सत्यमुक्तं त्वया। अस्य सत्यस्य रूपदानायेव,

महाढ्य-गोवर्धनदासपुत्र-
स्तीर्णः परोक्षां खलु जागर्तीं यः।
तस्येयमायाति पुरः प्रसन्ना
पूतस्वभावा जननीह धन्या ॥६॥

तदितो वयं निर्गच्छामः।

( इति निष्क्रान्तौ )

———

# प्रथमोऽङ्कः

## प्रथमं दृश्यम्

स्थानम्—सप्तग्रामस्थ-गोवर्धनदास-गृहम्। समयः—सायंसन्ध्या।

[ प्रविशति गोवर्धनदासपत्नी ]

तुलसी-स्तुतिः [ सङ्गीतम् ]

गोवर्धनपत्नी।

हरिप्रिये तुलस्यम्ब नित्यकोटीशुभंकरे।
सप्तग्रामसुता दीना नौति वसुन्धराधरे ॥७॥
धर्मध्वजमहाकन्ये माधवीक्रोड-लालिते।
शङ्खध्वज-प्रिये साध्वि देवदेवादि-वन्दिते ॥८॥
स्रोतोरूपाऽसि गण्डक्यां शालग्रामशिलान्विता।
शुभं नित्यं कुरुष्वाम्ब शिलाशङ्खविभूषिता ॥९॥
भगवत्यास्तुलस्यास्ते श्रीकृष्णप्रेमसागरे।
वाञ्छामि क्रीडितुं मातः कृपासारे कृपां कुरु ॥१०॥

वधूमातः! वधूमातः! नयनमणे! मम गृहस्य श्रेष्ठमलङ्करणं त्वं कुत्रासि? [ सर्वतो विलोक्य ] अहो सूर्यस्यास्तगमनप्रकारः!

कर्मक्लान्ते गतवति जने स्वस्वगेहं पुरस्तात्
कर्माध्यक्षस्तदनु चरमे क्ष्माभृति प्रैति भानुः।
पारेवारांनिधि निवसतामेष भास्वानिदानीं
वृत्ता काचित् पयसि विशती स्वर्णपात्रीव भाति ॥११॥

अहो! अपूर्वं मनोलोभनं दृश्यम्। दूरतो नदीगर्भं विशति भगवान् मयूखमाली; प्रसरति च विटपाग्राद् भूमितलपर्यन्तं संप्रसारिणी तमोरेखा। सर्वत्र पतत्रिकूजनम्—अदूरे, दूरे, सुदूरे च। भोः! सर्वशक्ते वृन्दे! भो विश्वमातः! भवतु सप्तग्रामस्य सर्वेषां परमं क्षेमम्। कुरु जगति सर्वेषामशेषं कल्याणम्। ( शङ्खध्वनिः )

वधूमातः ! वधूमातः ! अयि शान्तेमूर्तरूपधारिणि ! क्षुद्रा पद्मिनीव चटुलमागत्य मे चित्तशान्तिं विधेहि, नयनयुगलं स्निग्धाञ्जनयुतं कुरु। वधूमातः ! वधूमातः !

[ प्रविशति काचन पल्लीवासिनी ]

पल्लीवासिनी। भो रघुनाथजननि ! कथं कातरेव लक्ष्यसे ? कं वाऽन्विष्यसि ?

गोवर्धनपत्नी। प्रियभगिनि ! सन्ध्या समायातेति हेतोस्तुलसीमञ्चे धूपदीपदानार्थं वधूमातरं मे समाह्वयामि।

पल्लीवासिनी। भगिनि ! काचन तरुणी स्फुरद्विद्युद्दामप्रभा साम्प्रतम् आरत्रिकरता बहिष्प्रकोष्ठे मया दृष्टा।

गोवर्धनपत्नी। तत् सैव मम वधूमाता भवेत्। नवीने वयस्यपि सदाचारानुष्ठानेष्वस्याः प्रगाढा श्रद्धा ; धर्मकृत्येषु च विशुद्धा मतिः। अस्या आगमनाज्जातं गृहं मे नवरूपविशोभि। प्रियसखि ! स्वयं लक्ष्मीप्रतिमा सा। पतिर्मे कथयति यदस्या मदीयगृहागमनानन्तरं वर्षाभ्यन्तर एवास्माकं परिवारस्यार्थागमो द्विगुणं प्रवृद्ध इति।

पल्लीवासिनी। भगवती लक्ष्मीश्चिरं भविष्यति त्वद्गृहेऽचञ्चला।

रघुनाथमाता। तव वदनं पुष्पचन्दनभूषितं राजताम्।

[ धूपदीपहस्ता प्रविशति रघुनाथपत्नी ]

रघुनाथपत्नी। ( धूपदीपौ तुलसीमञ्चे निधाय ) मातृवृन्दे ! मम प्रणामसन्ततिं गृहाण। ( श्वश्रूमुद्दिश्य ) परमपूजनीये मातः ! तुभ्यमधमायाः पुत्रवध्वाः कोटिशः सान्ध्यप्रणामाः।

रघुनाथमाता। [ त्वरितम् ] आयुष्मती सर्वकल्याणकारिणी भव। वधूमातः ! इयमस्माकम् अशेषहिताकाङ्क्षिणी मम परमबान्धवी लक्ष्मणमाता। तदेनामपि प्रणम।

रघुनाथपत्नी। मातः ! मम प्रणामाञ्जलिं गृह्णातु भवती।

पल्लीवासिनी। कल्याणि वधूमातः ! अशेषहितकारणमिदं न केवलं परिवारस्य सप्तग्रामस्य वा, मन्मते तु समप्रदेशस्यापि यत् त्वद्विधा पुत्रवधू-

दृश्यतेऽद्यत्वेऽपि। घनतमःपरिवृतो देशः; तस्य त्वं भव शाश्वती दीपवर्तिका।

रघुनाथपत्नी। एतद्विषये भवतीनाम् आशीर्वादानहं निरन्तरं प्रार्थये।

पल्लीवासिनी। रघुनाथो यथा मे पुत्रस्तथा त्वमपि मे प्राणप्रियतरा पुत्रवधूः। तव कल्याणमस्माकं सर्वहृदयमनःप्राणाभीप्सितम् अक्षय्यं राजताम्।

रघुनाथपत्नी। भूयो भूयो मातॄणाम् आशीर्वादान् प्रार्थये। [ इति मातृद्वयं प्रणमति ]

रघुनाथमाता। परमादरिणि मातः! धनपुत्राश्वगज-सहस्रयुता-युष्मती चिरसुखिनी भव।

रघुनाथपत्नी। मातुराशीर्वाद एव जगति सर्वहितनिदानम्।

[ प्रविशति गृहपरिचारकः कश्चन ]

गृहपरिचारकः। [ पल्लीवासिनीम् उद्दिश्य ] मातः! प्रणामो मे; भवत्या दोला समायाता। वाहकाः कथयन्ति यद् गुरुप्रयोजनवशाद् भवत्या झटित्येव प्रतिगन्तव्यम् इति।

पल्लीवासिनी। प्रिये भगिनि! रघुनाथमातः! कल्याणि वधूमातश्च! अनुजानीतं मम प्रतिगमनम्।

रघुनाथपत्नी। मम प्रणामाञ्जलिं गृह्णातु माता।

पल्लीवासिनी। धनपुत्रसमेता सुखिनी भव।

रघुनाथमाता। परमसुखिन्यस्मि तवागमनेन। अन्यदाप्येवमागमनेन सखीजनमिमं सुखयिष्यसीत्याशासे।

वधूमातरं ममाशीर्वादैः कुरु सुधन्याम्। एषाहं स्यन्दनस्थान-पर्यन्तं त्वामनुयामि।

[ निष्क्रान्ता गृहपरिचारको रघुनाथमाता पल्लीवासिनी च ]

रघुनाथपत्नी। [ सर्वतो विलोक्य ] लसत्तारकेऽस्मिञ्छारदनभसि विलसति शान्तिः, किन्तु कुत्रास्ते मम प्राणपतिः सर्वगुणनिधिर्नरोत्तमः?

[ सस्मितं प्रविशति रघुनाथः ]

रघुनाथः। सगुणो निर्गुणश्च विभुः सर्वत्रैव राजते। विस्फारित-शफरीनेत्राभ्यां स द्रष्टव्यः।

रघुनाथपत्नी। अपि सर्वनिगूढ-मनश्चक्षुषा न स दृश्यते ?

रघुनाथः। देवि ! विस्फारितविश्वचक्षुषामेव भवन्ति तीक्ष्णदृष्टि-समन्वित-मनश्चक्षूंषि। यथा तव।

रघुनाथपत्नी। तव स्नेहचक्षुरेव तत्र कारणम्। नाथ ! सुधन्यं मम जीवनं यस्यास्तादृशी श्वश्रूमाता भवादृशः पतिरमूदृशो गृहपरिवेशश्च।

रघुनाथः। माता किं वदति, किं करोति, किं वाञ्छति ?

रघुनाथपत्नी। आशीर्वादानावयोराह माता

सख्याः कण्ठेनककण्ठ्यं विधाय।
पुत्रैः पौत्रैः स्वर्णरत्नादिभिश्च
व्याप्तं भूयात् प्रीतिपूर्णं गृहं वाम् ॥१२॥

रघुनाथः। तद् आशीर्वचो मातृसदृशमेव। भविष्यति भविष्यन्ति विश्वस्य सर्वे एव पुत्रकन्या अस्माकं पुत्रकन्याः। सर्वमेव विश्वमस्माकं धनस्थानम्। प्रसीदतु जगन्माता श्रीराधिका।

रघुनाथपत्नी। प्रसीदतु जगज्जनको जगत्संरक्षकः श्रीश्रीकृष्णः।

रघुनाथः। कथं श्रीकृष्णः ? न मे जननी राधिका ?

रघुनाथपत्नी। यतो मे पतिर्मत्सकाशे श्रीकृष्णस्वरूप एव।

रघुनाथः। देवि ! स्मर्यतां यन्मातुस्तुलनं भूतले कुत्रापि नास्ति। त्वम् अस्मिन् शुभाहे परमशुभक्षणे श्रीकृष्णस्तुतिं कुरु, मया च क्रियते श्रीराधिकास्तुतिः। राधाकृष्णतत्त्वं प्रसीदतु।

रघुनाथपत्नी। भगवन् देवदेव ! मयि प्रसीद।

[ पत्नीकृता श्रीकृष्णस्तुतिः ]

नवमेघ-करम्बित-रूपधरं
शिखिपुच्छ-विलोभन-शीर्षवरम् ।
भृगुपाद-विलाञ्छन-पुण्यपरं
प्रणमामि मुरारिमशान्तिहरम् ॥१३॥

रघुनाथः । देवि ! सङ्गीतं नाम मातृजातेरेव धनम् । यतः स्वयं सरस्वतीदेवी सर्वसङ्गीतानां जनन्यधिष्ठात्री च । तथापि पुत्रत्व-सौभाग्यान्मयाऽपि गीयते,

[ रघुनाथकृता श्रीराधास्तुतिः ]

व्रजकुलललनानां प्रेमसाराखिलानां
जगदघ-हरणान्तर्वासना-कोटिजुष्टा ।
सुललितरमहास्य-क्रीतदास्यातिशोभा
गणयतु निजदासं राधिका मां कदा नु ॥१४॥

( निष्क्रान्तौ )

———

## प्रथमोऽङ्कः

### द्वितीयं दृश्यम्

[ स्थानं गोवर्धनदासगृहम् ]

( प्रविशतो गोवर्धनदासस्तत्पत्नी च )

गोवर्धनपत्नी । नाथ !

जानामि दैवमभवन्मयि सुप्रसन्नं
यन्मे तदेकतनयो रघुनाथ एषः ।
हित्वा विरागविरसां मनसः प्रवृत्तिं
भोगानुरागसरसं हृदयं विधत्ते ॥१५॥

गोवर्धनदासः । मातुराशीर्वादापेक्षि शासनानुगतञ्च पुत्रजीवनम् । सर्वदा त्वं पुत्रस्य संसारासक्तिं कामयसे । तस्माद् भगवता त्वदिच्छानुसारि विधानं क्रियते ।

गोवर्धनपत्नी । देव ! मत्कथानुसारेण पुत्रस्य मे संसारत्यागनिवारकं सार्वकालिकं प्रहरिपञ्चकम्, परिचर्यार्थं सेवकचतुष्टयम्, सान्त्वनादिदानार्थं ब्राह्मणद्वयञ्च नियोज्य सुष्ठु विहितं भवता । नाथ ! यौवनस्य प्रथमे भागे क्वचित् केचन प्रकटयन्ति संसारविमुखताम् । परतस्तु मातापित्रोः प्रयत्नैर्भोगविशेषविधानेन च संसारयात्राकुशलिनो भवन्ति । कोटीश्वरस्य भवतः पुत्रश्चेदुदासीनो भवति, नन्वचिरेण महती सम्पन्नाशमेष्यति । पतिकुले वर्तिकां दातुं पिपासितेभ्यो मदीयश्वश्रूश्वशुरचरणादिभ्यश्च जलमपि दातुम् उत्तराधिकारी कोऽपि न स्थास्यति । अहो कष्टम् !

पिपासितौ मे श्वशुरौ विलोके
तोयाञ्जलिं मामिव याचमानौ ।
सुप्ताऽथवा जागरितापि चाहं
तेनास्मि भीता कुलनाशहेतोः ॥१६॥

अहो विधातुः कृपा, यन्मम रघुनाथः साम्प्रतम् अस्मच्चित्तानुकूलं व्यवसायं विधत्ते।

गोवर्धनदासः। देवि! मानवानां ललाटलेखा कदापि न भवति खण्डिता। को जानाति भविष्यदस्माकम्। पश्य पश्य, इत एवायाति पुत्रो रघुनाथः। अहो मधुरा मूर्तिः पुत्रस्य मे!

अमृतरसनिषिक्ता सान्द्रकर्पूरवर्ति-
र्नयनपथगता मे तर्पयत्यक्षियुग्मम्।
करकविशदकान्तिर्ज्योतिषाऽप्राकृतेन
परिवृतवरकायो विग्रही शान्त एषः ॥१७॥

[ ततः प्रविशति रघुनाथः पितरौ च प्रणमति ]

रघुनाथमाता। [ मस्तकमाघ्राय स्नेहं प्रकटय्य ] वत्स! कथं वदनं ते शुष्कमिव जातम्, अप्यस्वस्थता काचन त्वां न बाधते?

रघुनाथः। नहि मातः! भवतोराशीर्वादक्रमेण स्मरामि प्रभोः श्रीकृष्णचैतन्यस्योपदेशामृतम्। श्रीधामशान्तिपुरे श्रीमदद्वैतप्रभोः पुण्यालये प्रभुर्दीनदीनं भाषमाणं मां प्राह,

चाञ्चल्यं मनसो विधूय सदनं याहि त्यजोन्मत्ततां
नूनं याति नरः क्रमेण न हठात् पारं हि भावोदधेः।
वैराग्यं कपिसम्मतं परिहरन् स्वोत्कर्षविज्ञापकं
पृथ्वीं भुङ्क्ष्व यथोपपन्नविभवां नासङ्गमङ्गीकुरु ॥१८॥
साधारणजनवत् स्या रतिं विधेहि मनसि विशुद्धाम्।
तारयिता ह्यविलम्बं त्वामेवंभूतं भगवान् कृष्णः ॥१९

गोवर्धनदासः। विजयतां सन्न्यासधर्मपरायणः श्रीकृष्णचैतन्यः। महात्मनस्तस्य मातामहो नवद्वीपस्थनीलाम्बरचक्रवर्तिमहोदयो मामनुजमिव मन्यते इति कृत्वासौ विश्वम्भरोऽपि मां मातामहमिव सम्भावयति। परमसम्मानार्होऽद्वैतप्रभुरपि सर्वदा सर्वथैवावयोर्भ्रात्रोः सम्माननां प्रदर्शयति।

तद् युक्तमेवाद्वैतप्रभोगृहे तिष्ठतो मम दौहित्रोपमस्य गौराङ्गस्य मातुल-कल्पाय मत्पुत्रायेत्थं सदुपदेशदानम्। विजयतां श्रीकृष्णचैतन्यप्रभुः।

गोवर्धनपत्नी। भगवत्कृपया शिवो भवतु मे पुत्रस्य पन्थाः।

गोवर्धनदासः। इत आगच्छति मे परमादरिणी पुत्रवधूः। ईदृशी पुत्रवधूर्वंशस्य श्रेष्ठमलङ्करणम्। 'मुलुक'पतेरादेशवहस्य समागमनसमय एषः। अद्य गुरुप्रयोजनमास्ते, तदावां प्रेक्षागृहं गच्छावः।

( निष्क्रान्तः पत्नीसहितो गोवर्धनदासः। )

[ सलज्जं प्रविशति रघुनाथपत्नी। ]

रघुनाथपत्नी। नाथ! कथं मृदु हससि ?

रघुनाथः। पितरौ मे प्रार्थयेते महाप्रभोः श्रीकृष्णचैतन्यस्या-शीर्वादो मम जीवने सार्थको जायतामिति।

रघुनाथपत्नी। किन्तु तव स्मितस्य कारणं किम् ?

रघुनाथः। पित्रोर्वाञ्छा यदहं वैराग्यवासनां परित्यज्य संसारी भवेयमिति। महाप्रभोरपि सैव वासनेति स्नेहान्धौ तावापातमात्रेण मन्येते।

वैराग्यं हृदयादुदस्य सलवं सांसारिकः स्यामहं
पित्रोरेष मनोरथो भगवताऽप्यास्ते प्रमाणीकृतः।
हेया फल्गुविरागितेति हृदयं बुद्ध्वा न तौ तु प्रभो-
र्व्यर्थं हृष्यत इत्युदेति वदने हा मे विषादात् स्मितम् ॥२०॥

आवयोः साधनप्रभावात् फल्गुवैराग्ये चिराय लोपं याते मम पूर्ण-वैराग्योदयो भविष्यतीत्येतदर्थिकां महाप्रभोरिच्छां पितरौ मे न चिन्तयतः।

रघुनाथपत्नी। नाथ! मातापित्रोराशीर्वादः परमसम्बलं पुत्रस्य। तयोर्दुःखं यथा न जायेत सर्वदा तथा भवतु। त्वज्जीवनसरणिमनुसृत्य यथा लोकोऽमृतत्वं भजेत तथा क्रियताम्।

रघुनाथः। अस्तु तत्, परं तव साधना कीदृशी भवेत् ?

रघुनाथपत्नी। तव साधनैव मम साधना। केवलं प्रार्थये तव साधनाया मम साधना कठोरतरा भवतु। पत्युर्दुःखलाघवाय श्रमापहाराय चित्तविनोदाय च पत्न्या जन्म। तत्रैव तस्याः कोटिजन्मार्जितपुण्यस्य

सार्थक्यम्। भगवत्सकाशे केवलं प्रार्थये—

भूयादुर्वरता तथा जनिभुवस्त्वज्जीवनस्रोतसा
येन प्रेमतरून् सभक्तिलतिकानुत्पादयेत् सा परम्।
वल्ली खुल्लतमा प्रफुल्लवदना सम्भूय तत्स्रोतसो
नर्तिष्यामि मुदा ततो मयि मुधा चिन्ता न कार्या त्वया ॥२१॥

रघुनाथः। देवि ! अपि स्मरसि यच्छ्रीकृष्णचैतन्यो मामित्थम् आह—

वृन्दावनात् प्रतिगते मयि नीलशैलं
व्याजेन केनचिदुपैष्यसि मत्समीपम्।
व्याजोऽपि कृष्णकृपया स्फुरितस्त्वयि स्या-
दीशेऽनुकम्पिनि कुतः प्रतिबन्धशङ्का ॥२२॥

रघुनाथपत्नी। तत्र किं भीतिकारणम्? त्वया सह महाप्रभु-सकाशमहमपि गमिष्यामि। यथा वैदिके काले तथा वर्तमाने युगेऽपि पत्या सह संसाराश्रमं परित्यज्य प्रव्राजिका भविष्यामि। पश्य—

सप्तग्रामसुता कलौ धृततनुस्त्रेतावतीर्णां सतीं
सीतां तामनुकुर्वती ननु वनं पत्या समं यास्यति।
साकेतं पुनरागता जनकजा नेयं तु गेहं क्वचित्
प्रत्यायाति पुरा भ्रमिष्यति परं पत्या समं सन्ततम् ॥२३॥

न वियुज्ये यथा नाथ त्वत्पादपङ्कजात् क्वचित्।
आशीरेषैव मे काम्या नाहं भोगाभिलाषिणी ॥२४॥

रघुनाथः। देवि, मैवं वादीः। पश्य,

दशरथतुल्यस्नेहस्तातो माता च कोशलसुतेव।
प्रव्रजिते मयि तनये त्वमेव भविष्यसि तयोरवलम्बः ॥
सा त्वं प्रव्रजिता चेत् तावशरणौ विपत्स्येते नियतम् ॥२५॥

रघुनाथपत्नी। तव क्षेमपथविचरणे कदापि बाधा न भविष्यति इति ध्रुवमेव। किन्तु प्रभो ! न मां विहाय दूरदेशे गच्छ। जगति केवलमेकमेव मे भयकारणम्! स तु त्वद्विरहः। अद्य कथं स्मरामि

प्रभो !—   यशोधरा यशोभागा पुत्रसन्न्यासदायिनी ।
सर्वस्वत्यागिनी किन्तु पतित्यागविरोधिनी ॥२६॥

अहो दन्दह्यमानत्वं तस्याः ! तथापि संदर्शनाय नाथस्य स्वकक्षाभ्र बहिर्ययौ ।

रघुनाथः । देवि ! सर्वत्र जगदम्बिकाया इच्छैव बलवती । स्वेच्छया नाहं कदापि ते दुःखकारणं भविष्यामि ।

रघुनाथपत्नी । ततो हि त्वं प्रियो मे ।

रघुनाथः । जगज्जननी सर्वथावयोर्मङ्गलं विधास्यति ।

रघुनाथपत्नी । [ स्वगतम् ] नारीसमाजो देशस्यार्धांशः । कलिप्रभावात् सोऽवसन्नो जातः । महाभारते नारी गृहदीप्तिरिति कथिता ; साम्प्रतं सा गृहपिञ्जरकोकिलेति वर्ण्यते । जगतो महतो हिताय पतिर्मे वार्षभानवीपूजावतारणाय सर्वथा प्रयत्नशीलः सततं तामेव ध्यायति । तथापीत्थं ब्रवीमि । [ पतिमुद्दिश्य ]
कथं भवान् प्रभोः श्रीकृष्णचैतन्यस्य गुणानुरागी संन् जगज्जननीं नितरां स्मरति ?

रघुनाथः । यतो मातुः कृपां विना सन्तानहितं न सम्भवति ।
किञ्च, महाप्रभुः स्वयमपि मातृभक्तानां प्रधानभूत इत्यहं मन्ये । पश्य,

मूर्धन्यो मातृभक्तानां चैतनाख्यो महाप्रभुः ।
सन्न्यासेऽपि स्मरन्नम्बां मुक्तकण्ठं प्ररोदिति ॥
इच्छया:किञ्च सोऽम्बाया न नीलाचलतोऽचलत् ॥२७॥

किञ्चांशमात्रं त्वमसीह यस्याः
सर्वोत्तमैर्दिव्यगुणैरुपेता ।
सा कीदृशी पूर्णकलेति चिन्ता
मां मातृभावानुगतं विधत्ते ॥२८॥

निश्चितं मातृसेवारक्षणपरायणो जगति मातृसेवाधर्मस्यैव प्रचारणपरो भविष्यामि । देवि ! त्वं मह्यं शक्तिं देहि ।

रघुनाथपत्नी । दासीं मां याचमानस्त्वं नापराद्धां कुरु प्रभो ।
शक्तिर्दास्यति शक्तिं ते सर्वकल्याणसाधिनीम् ॥२९॥

( इति निष्क्रान्तौ )

## प्रथमोऽङ्कः

### तृतीयं दृश्यम्

[ कारागारे रघुनाथः ]

रघुनाथः। अहो विधिनिर्देशात् महम्मदीय-भूस्वामि'चौधुरी'-महाशयस्य कूटकौशलेन मम पितृदेवो ज्येष्ठतातश्चाद्य सर्वैश्वर्यवञ्चितौ गृहात् पलायितौ। तयोर्बन्धनाय हननाय वा बद्धः परिकरः प्रतिपक्षेण। किन्तु पुण्यवतो मम पितुर्ज्येष्ठतातस्य च कथम् ईदृश्यवस्था ?

मातः! श्रीराधिके! तवेच्छानुसारेणाहं शत्रूणां हस्तेष्वात्मानं समर्पितवान्। तवेच्छा विजयताम्। कारारुद्धस्य दुःखदीर्णचित्तस्य मे शृणु प्रार्थनं देवि !

दितिसुतग्रासोपम-धराव्यापि-गाढतमो-
वदनव्यादानकाले घनवनपथे।
क्षणप्रभाघनच्छटा-तिरोहितजटाजूटा
त्वं हि मम श्रीराधिके वृन्दाविलसिते ॥३०॥

प्रचण्डझटिकाघात-विक्षुब्धतरङ्गजात-
प्रतिघातविपर्यस्ते मम प्राणपोते।
पारावारेऽकूले कूलं तदा मातः प्रेमाकुलं
शमितोर्मिक्षोभलीलं त्वं हि सुतहिते ॥३१॥

उच्चाचल-शृङ्गारूढे प्रच्युतपादप्रस्तरे
भूगर्भप्रोथिते मयि स्तिमितश्वसिते।
नासारन्ध्र-विलम्बित-मृत्युञ्जय-प्राणवात-
स्फुरण-कल्याणं त्वं हि श्रीकृष्णवाञ्छिते ॥३२॥

लेलिहान-कोटिजिह्व-प्रचण्डदुर्भाग्यदाव-
विदग्धे मम जीवनारण्ये भस्मपरिवृते।
निरभ्रनभोमण्डल-प्रादुर्भूत-मेघजाल-
दुर्वारवारिधारा त्वं वृकभानुसुते ॥३३॥

कालिन्दी-राधिते-राधे सुतानन्द प्रमोदिते ।
रघुनाथेऽधमे दीने कृपां कुरु सुरार्चिते ॥३४॥

( प्रविशति 'चौधुरी' पक्षीय उजिरः । )

चौधुरीपक्षीय उजिरः । भो रघुनाथ ! कोटीश्वरपुत्रस्त्वं कथं कारावासकष्टं सहसे ? पित्रोः सङ्केतस्थानं सूचय, नातिचिरादेव कारामुक्तो भविष्यसि ।

रघुनाथः । किन्तु तत् कथं सम्भाव्यते ? एष भूम्यधिकारी मम पितृज्येष्ठताततयोः सम्पल्लोभातुरस्तयोरनिष्टसाधनाय सङ्केतस्थानं ज्ञातुमिच्छति । तयोः सम्पदेवैतस्य लोभस्थानम् । तस्मात् कथम् अहं गुरुजनानामनिष्टसाधनं करिष्ये ?

चौधुरीपक्षीय उजिरः । तस्मात् त्वं सातिशयं विपत्स्यसे । "आत्मानं सततं रक्षेद् दारैरपि धनैरपि" इति शास्त्रोक्तिः । शास्त्रार्थं-माद्रियसे चेत् कथम् अन्यथाचरसि ?

रघुनाथः । आत्मरक्षणं कथमित्थं प्रियं भवेत् ? विशेषतः पुनर्या नारी जगति सर्वं विहाय भर्तृमङ्गलमेव चिरं कामयते कथं वा सा त्याज्या भवेत् । तस्मात् सर्वथाऽसद्धर्मं एषः ।

धनानि बहिरङ्गाण्यन्तरङ्गा सहधर्मिणी ।
धननाशे दलभ्रंशः कोशभ्रंशो द्वितीयके ।
कोशनाशाच्च्युतिर्वृन्तात् पद्मस्य निश्चितं वरम् ॥३५॥

उजिरः । भवतु, तद् भवतु । पत्नीत्यागाय नानुरुद्धोऽसि, केवलं ज्येष्ठतातस्य वर्तमानावस्थानं ब्रूहि ।

रघुनाथः । तन्नाहं कदापि करिष्यामि ।

प्राणनाशे क्षतिः का मे धर्मो हि केवलं बलम् ।
संरक्षक इहामुत्र रक्षणीयः सदाऽसुभिः ॥३६॥

उजिरः । ततोऽचिरादेव कठोरवेत्राघातजर्जरितो यमसदनं

गमिष्यसि। अरे रे !

सर्पस्य तुण्डे लघुदर्दुरस्त्वं
करोषि लम्फं नितरामशान्तम्।
कण्ठस्तवायं न चिराय रुद्धो
यथा भवेत्तत्र भव प्रवुद्धः ॥३७॥

रघुनाथः। [ सहास्यम् ] तथा भवतु ; श्रीराधिकायाः सन्तोषश्चेत् तथा भविष्यति।

उजिरः। सा का ?

रघुनाथः।

सा जगज्जननी माता मुरलीधरमोहिनी।
यस्याः प्रेमरसास्वादतत्परो हरिरीश्वरः ॥३८॥
कचिच्छ्वेतः कचित् पीतो भूत्वा लीलां तनोत्यलम्।
तदिच्छैवेह जीवानां सुखदुःखनियामिका ॥३६॥

उजिरः ! स्वयं मुरलीधरोऽपि न त्वां रक्षितुं समर्थो भविष्यति !

रघुनाथः। जनन्या यथा इच्छा। मातर्वार्षभानवि ! नमस्ते।

वलयिततनुवल्ल्या वल्लभं वेष्टयन्तीं
स्मितमधुरमुखाभां वल्लवीनां कदम्बे।
प्रियतमपरिरम्भोत्फुल्लनेत्रान्तरम्यां
मुरहरपरिवारं नौमि वृन्दावनेशीम् ॥४०॥

उजिरः। कथम् असच्छास्त्रमुच्चारयत्येष प्रगल्भः। [ उच्चैः ] प्रहरिन् प्रहरिन् !

प्रहरी। [ प्रविश्य ] महोदय ! भृत्येन किं करणीयम् ?

उजिरः। अस्य रघुनाथस्य वेत्राघातैः प्राणदण्डो विधेयः।

प्रहरी। किन्तु तत्र भूम्यधिकारिचौधुरीमहोदयस्यानुज्ञा लब्धव्या।

उजिरः। मयैवानुज्ञा दीयते।

प्रहरी। [ स्वगतम् ] अहो नवनीतकोमलतनुः कोटीश्वरनन्दनोऽयं

हृदयं ममाकर्षति। [उजिरमुद्दिश्य] तथापीयम् अनुज्ञा तेन स्वयमेव प्रदातव्येति मन्ये।

[चौधुरी महाशयः प्रविशति]

चौधुरी महाशयः। उजिर! को वृत्तान्तः ?

उजिरः। [कर्णे एवमेवम्]

चौधुरी। [रघुनाथं प्रेक्ष्य स्वगतम्] उजिरस्य मतं यद्यपि ग्रहणीयं तथापि, मनो मे दूयते।

अहो अगाधसत्त्वोऽयम् अनिन्दितकान्तिना वपुषा मम नयनयोः परमपरितृप्तिं साधयति।

सुघटितपिशितानामङ्गकानां प्रसङ्गा-
दनवनिम्नुलभेयं तानवी भाति कान्तिः।
नयनयुगलमेतद् यौवनेऽपि प्रशान्तं
क्वचन महसि लग्नं चित्तमस्य व्यनक्ति ॥४१॥

किञ्च,

विना निमित्तं कथमस्य पीडनं
मया विधीयेत नृशंसचेतसा।
न चास्य दोषोऽस्ति पितुश्च कश्चन
प्रवञ्चितः काममसौ ससोदरः ॥४२॥

तस्मात्—

प्रत्यवायहरणाय साम्प्रतं साकमस्य पितृसम्पदा मया।
दीयते च मम वैभवं महत् तेन तुष्टिमुपयातु मे प्रभुः ॥४३॥

तदेवं ब्रवीमि। [प्रकाशम्] तात!

लोला सम्पत्तदधिकचलं जीवनं मानवानां
मैत्री पुंसां प्रसरति पुनर्जन्मजन्मान्तराणि।
तत्ते वत्साचितचरणयोस्तात-तज्ज्येष्ठयोर्मे
भूयान्मैत्री निबिड-निबिडा वैरमस्तम्प्रयातु ॥४४॥

नाहं तव तातस्य ज्येष्ठतातस्य वा किमप्यनिष्टं चिन्तयामि।

अपिच—

महतः सुक्ष्-ात्मनः शुभे भवने यस्य भवेद्भवादृशः।
सह तेन जनेन मित्रता घटते नूनमशेषपुण्यतः ॥४५॥

रघुनाथः। [ स्वगतम्, सभक्तिगद्गदम् ]

तनयेऽसि कृपामयी परं ननु मातर्वृषभानुनन्दिनि।
छलितः पुनरेष मायया तव लीलामविदन् विषीदति ॥४६॥

[ प्रकाशम् ]

तात! भवन्तं दृष्ट्वैव मम भवन्तं प्रति पितरीवासक्तिः समुपजाता। जानामि भवान् न मे वंशस्य कदापि हानिकारको भविष्यति।

चौधुरीमहाशयः। तव पितरं ज्येष्ठतातं च बन्धुरूपेण प्राप्याहं परमाह्लादितो भविष्यामि।

वत्स! जगति सर्वम् आत्मसन्तोषवर्धनाय। मैत्रीहेतोः कस्मैचित् प्रणान् दातुं वयं शक्नुमः, पुनरन्यस्मै चित्तवैमुख्यात् कपर्दकमपि दातुं नेच्छामः। चित्तप्रसादश्च भगवन्मुखापेक्षी।

रघुनाथः। ज्येष्ठतात! अपि धर्मस्तत्र न बाधकः?

चौधुरीमहाशयः। कथं धर्मो बाधको भवेत्। धर्मो नामाभ्यन्तरीण वस्तु; शाश्वतं सत्यम्। तज् जने जने न पृथग् भवितुम् अर्हति। बाह्यावरणानि विवादहेतुकानि भवन्ति। किन्तु परस्परप्रीतिबन्धनेन बाह्यं वस्तु बहिरेव तिष्ठति; आन्तरं वस्तु पुनरन्तरेव। हृदयं मनुष्याणां प्रतिजनं समम्। यत्र स्वयम् आह्लाद विभुस्तिष्ठति। तं नियतप्रेक्षमाणो जनो भक्तः। भक्तानां न भवति विवादकारणं किमपि।

रघुनाथः। ज्येष्ठतात! भवदुपदिष्टं सत्यं सज्येष्ठाय पित्रेऽहं निवेदयिष्यामि।

उजिरः। तस्मादसौ मुक्तः।

चौधुरीमहाशयः। अथ किम्?

उजिरः। [ स्वगतम् ] अद्यमदेव हेतोरेतस्योपस्थितिम् अहं

नैच्छम्। अहो! धनमदोद्धतस्य जनस्य कार्यक्रमः परस्परसामञ्जस्य-रहित इच्छानुसारी भवति।

[ चौधुरीमहाशयमुद्दिश्य ] चौधुरीमहाशय! एतस्य मुक्तिप्रदानेन भवतो विपुला राजोचिता सम्पत्तिश्चिराय परहस्तन्यस्ता भविष्यति।

चौधुरीमहाशयः। तेन किम्? बाह्यसम्पद उत्तराधिकारी कः।

उजिरः। सम्पत्तिरुत्तरपुरुषानुगामिनी।

चौधुरीमहाशयः। तच्छृणु। ममोत्तरपुरुषेषु मुख्यतमोऽयं रघुनाथः। यः स्वचरित्रमहिम्ना न केवलं स्ववंशस्य किन्तु, मम वंशस्य, स्वदेशस्य च मुखम् उज्ज्वलतमं करिष्यति। तस्यैव हेतोः सम्पदियं मयाऽस्मै उद्दिष्टा। रघुनाथो यथा गोवर्धनस्य पुत्रस्तथा ममापि।

तत्तस्मै रघुनाथदास-कृतिने पुत्राय तातो यथा
सर्वं वित्तमकैतवं मम समुत्सृज्येऽहमिच्छावशात्।
श्रीमानेष यथेच्छमस्य भविता भोगे च दाने प्रभु-
र्विज्ञातं भवतां भवत्विति मया सप्रश्रयं प्रोच्यते ॥४७॥

परमानन्दो मम यत् सम्पन्मुखेनेदृशः पुत्रो मम हृदयं सर्वदाऽलं-करिष्यतीति।

[ सर्वे निष्क्रान्ताः ]

———

## प्रथमोऽङ्कः

### चतुर्थं दृश्यम्

[ प्रविशतो गोवर्धनदासस्तस्य पत्नी च ]

गोवर्धनपत्नी। नाथ! आश्चर्यमेतत्, प्रहरिशतदृष्टिं विभ्रमय्यैष मे पुत्रो रघुनाथः सर्वदा पलायत इति। असहाया रमण्यहम्; एकमेव पुत्रं विहाय कथं वा जीवितं धारयिष्यामि?

आकृष्यान्तरतः समग्रविभवान् निर्माति मातुर्विधिः
पुत्रं नाम निधिं तदीयविरहस्तस्मात्तया दुःसहः।
तातस्त्वं नहि वेत्सि पुत्रविरहज्वालामतोऽनाकुलः
साक्षीव प्रविलोकसे परमहो नोपायमालम्बसे ॥४८॥

गोवर्धनदासः। देवि! सावधानं शृणु। भगवदिच्छा नितरां बलवत्तमा। को वाऽत्रोपायः कर्तुं शक्यते। पश्य—

रूपेणाप्सरसः स्वभावमधुरा पत्नी महद् वैभवं
तारुण्यञ्च निजं न यं हि कुरुते भोगाय पर्युत्सुकम्।
बन्धस्तस्य तनोर्मनः कथमहो संयन्तुमीशो भवेत्
को वा स्याद् भवितव्यखण्डनपटुर्ध्यात्वेति धीरा भव ॥४९॥

अपिच

भगवद्भावमग्नस्य मनो भोगे कथं विशेत्।
प्रभुप्रेमसुधोन्मत्तं को निरुन्ध्याद् गुणेन वा ॥५०॥

तस्माद्

यथेच्छं चरतादेष यथेच्छं तिष्ठतात् पुनः।
भोगं यथेच्छं कुरुतान्न विघ्नः क्रियतामिह ॥५१॥

गोवर्धनपत्नी। किं वा मया रमणीजनेन कर्तुं शक्यते।

---

# द्वितीयोऽङ्कः

## प्रथमं दृश्यम्

[ पाणिहाटिधाम्नि नित्यानन्दाशीःपूतो रघुनाथः ]

दण्ड-महोत्सवः ।

[ सुरधुनीतीरे वृक्षतले समुपविष्टः सशिष्यो नित्यानन्दप्रभुः । प्रविशति दूरतो रघुनाथदासः । ]

रघुनाथः । [ स्वगतम् ] अहो ! सार्थकोऽयं दिवसो यद् बहुकष्टेन लब्धपित्रादेशस्य मे नित्यानन्दप्रभुदर्शनं जातम् । अहो प्रेममहिमा नित्यानन्दप्रभोः । स्वयंप्रभः सूर्यदेव इव राजते प्रभुवर्यः—यस्माज् ज्योतोराशिश्चतुर्दिशं निकामं विच्छुरति ।

नित्यानन्द इति प्रथामधिगतोऽन्वर्थां निधिस्तेजस-
श्चैतन्यस्य महाप्रभोः सुहृदयं कूले द्युधनद्याः स्थितः ।
देवस्यास्य कृपाबलेन करुणां लप्स्ये प्रभोरप्यहं
भेदः कायगतोऽनयोर्न तु हृदेत्याहुस्तदीया जनाः ॥ ५२

श्रीकृष्णचैतन्यमहिमप्रचारिन् प्रभो ! अधमानुरागिणो रघुनाथस्य साष्टाङ्गप्रणामान् गृहाण । ( प्रणम्य ) भवत्वेनमुपसर्पामि । ( नित्यानन्दाभिमुखम् उपसर्पति ) ।

कश्चन भक्तशिष्यः । देव ! तत्र नयनपातानुग्रहं करोतु भवान् । साष्टाङ्गं प्रणमति भवन्तं सप्तग्रामनिवासिनो गोवर्धनदासस्य पुत्रः श्रीरघुनाथः ।

नित्यानन्दप्रभुः । [ आत्मगतम् ] अहो ! सोऽयं रघुनाथदासो गोवर्धनदासस्य पुत्रः, यस्य वैराग्यमधिकृत्य बहुधा श्रूयते किंवदन्ती । अद्यैनं दृष्ट्वा सत्यतया प्रत्येमि "नह्यमूला जनश्रुति"रिति प्रवादम् । अहो भगवतः प्रेममहिमा !

वितीर्णसर्वस्वमशीर्णसम्पदं
युवानमेनं युवभार्यमुज्ज्वलम् ।
गृहात् समानीय पथि प्रतिष्ठितं
यदैश्वरं प्रेम चकार तद् भजे ॥ ५३ ॥

भवत्वेनं परिहासेन गृह्णामि । [ प्रकाशम् ] अयि चौर ! एह्येहि । बहोः कालादनन्तरं दर्शनं ददासि । ततो दण्डार्होऽसि सर्वथा । मम गणं दधिचिपिटकैः परितर्पय । चौरस्य तवायमेव दण्डः ।

रघुनाथः । [ सस्मितम् ] चौर ईदृशदण्डार्हश्चेत् अहं प्रतिजन्म भवद्धनापहारी भविष्यामि । दण्डदानविषये कदापि देवेन कार्पण्यं न कर्तव्यम् इति मे प्रार्थना । [ सर्वे हसन्ति ]

[ स्वगतम् ]

बाहुल्यात् समुपार्जितं विकुरुते यन्मानवानां मनो
भ्राता भ्रातरमात्मजश्च पितरं हन्तीह यस्याप्तये ।
तेनैतेन विपन्निदान-वसुना चेद् वैष्णवानां भवेत्
काचित्तृप्तिरतोऽधिकं न हि मया सौभाग्यमाशास्यते ॥५४॥

नित्यानन्दः । गदाधर ! सर्वत्र प्रचारयाद्यतनं दण्डोत्सव-वृत्तान्तम् । सहस्रशो जना आगच्छन्तु । रघुनाथचौरस्य दण्डदानैः सर्वे परितृप्ता भवन्तु ।

गदाधरः । प्रभो ! वाढम् ।

नित्यानन्दः । मुख्यतो दधि-चिपिटकं खाद्यं कदली-दुग्ध-शर्करा-मिष्टकादिकमपि प्रदेयम् । एतान्युपकरणान्यचिरादेव संग्रहीतव्यानि ।

गदाधरः । भवान् निश्चिन्तो भवतु । भवतो गणोऽस्मिन् विषये प्रयत्नपरो भविष्यति ; महोत्सवश्चायं युगयुगान्तरस्मरणपदवीम् आरोक्ष्यति ।

——

# द्वितीयोऽङ्कः

## द्वितीयं दृश्यम्

## [ प्रहसनदृश्यम् ]

( प्रविशति ढक्कावादकेन सह गदाधरदासः )

गदाधरः । भो भोः पाणिहाटिवासिनो जनाः ! भगवतः श्रीकृष्ण-चैतन्यमहाप्रभोः प्राणस्वरूपस्य चैतन्यलीलाप्रचारधुरन्धरस्य प्रभोर्नित्या-नन्दस्यादेशात् एष गदाधरदासोऽहम् उद्घोषयामि—"बहोः कालादनन्तरं दर्शनदानापराधाच्च चौरापवाददूषितस्य कोटीपतिगोवर्धनदासतनयस्य रघुनाथदासस्य शुद्ध्यथ रघुनाथदण्डमहोत्सवोऽनुष्ठीयते । तत्र दधिचिपिटककदलीमिष्टकादीनि भविष्यन्ति भोज्यानि ।

गङ्गातरङ्गविलसत्तट-पाणिहाटि-
ग्रामेऽवधूत-महिताश्रमसन्निधाने ।
भोज्यार्थिनः समुपयन्तु तदत्र दिग्भ्यो
दध्यादिवस्तुचयविक्रयिकाश्च कामम् ।।५५।।

( ढक्कावादको ढक्कां वादयति )

अहो प्रभावः प्रभोर्नित्यानन्दस्य ! एते घोषणसमनन्तरमेव समा-गच्छन्ति बहवः पण्यविक्रेतारो भोजनार्थिनश्च । तदहमन्तर्गच्छामि ( इति निष्क्रान्तः ) ।

[ प्रविशन्ति दधि-चिपिटक-कदली-मिष्टकविक्रेतारः ]

[ अदूराच्छ्रूयते भोजनार्थिनां कलकलः ]

दधिविक्रेता । भ्रातश्चिरटिप्पण-कारक ! एष एव ते नियमो यत्त्वं जिह्वाग्रतः पाकस्थलीपर्यन्तं सर्वत्र गतिपथे निजगमनप्रचारणं करोषि । भोक्तृवर्गस्य बोद्धृवर्गस्य हिताय वाऽहिताय वा स्यात् ।

चिपिटकविक्रेता । भो दुग्धसारचिरविपर्यास दधिवर्य ! टिप्पण-मस्मि चेत् त्वं चिक्कणोऽसि । अप्लुतयाऽन्नप्राशनान्नमपि जनस्य बहिः प्रापयसि । आत्मनश्छिद्रं प्राथम्येनापसारय, ततः परस्य च्छिद्रं पश्येः । पुरतः सूच्यग्रमपि न प्रसरतात्, पश्चात् तु गजोऽपि गच्छतु ।

दधिविक्रेता। तत्, तत् कथम् ?

चिपिटकविक्रेता। अपि न श्रुतम् अद्यतनं दण्डमहोत्सववृत्तम्। चौरस्य दण्ड:, तदर्थं महोत्सवः। यथा त्वम् अम्लः ; अहमस्मि सुमिष्टः। आवयोः सम्मेलनम्। किञ्च, एष रघुनाथोऽप्सरःसम-सहधर्मिणीं विहाय सदा पलायनतत्परः परमवित्तशालिना गोवर्धनदासमहोदयेन गृहं प्रत्यावर्त्यते। एतादृशस्य पलायनतत्परस्य चौरस्य दण्डाय महोत्सवोऽयम्। तत्र दधि केवलं वरणीयं नान्यत् किमपि, दध्येव श्रेष्ठमुपकरणमिति, तत् सुष्ठु।

दधिविक्रेता। तत् किं चिपिटकम् एव श्रेयसे स्यात्। तद्वा भवतु। षोडशवर्षीयाणामपि दन्तकडमडैस्तथाऽशीतिवर्षदेशीयानां दन्तोत्पत्तिस्थानसंघर्षणैश्च समुद्रकल्लकलोपमः कोलाहलः संजनिष्यते। तस्मादम्लं श्रेयः। अतो लोकाः कथयन्ति दधि-चिपिटकोत्सव इति, न कदापि चिपिटक-दधि-महोत्सव इति।

चिपिटकविक्रेता। एतत् सौभाग्यं ते शरीरस्य न्यूनत्वादेव। काले काले स्वरगुणत्वात् सङ्कोचनाच्च चिपिटकं भविष्यति चेपटकं, ततः चपेटकम्--ततः "चपेटक-दधि" इति। अहो नु मधुमधुरं तद् दधि भवेत्।

दधिविक्रेता। किं किं वदसि ? मां चपेटाघातेन तोषयितुं वाञ्छसि। रे मर्कटतुण्ड! रघुनाथ-दण्ड-पलाण्ड! मया सह तव तुलनं संमिश्रणं वा, तारकया सह पक्वदेहस्फोटकस्य ; शुक्रेण सह खद्योतस्य ; गौरी-शङ्करेण सह करोलडाङ्गाशेखरस्येव। अहं त्वाम् अद्य पिष्ट-पेषणनिष्पेषितं करिष्यामि।

चिपिटकविक्रेता। सम एव महोत्सवे आवां गच्छावः। कथं रुष्टो भवसि ? अनिवार्यमेव त्वया सह मम संमिश्रणम्। अनेनैव प्रकारेण प्रचरति जगत्। तथापि --

जठरानलनिर्वापणकुशलमहिम्ना त्वया सह मम।
यः खलु संयोगोऽयं स एव मां पीडयति सततम् ॥५६॥

दधिविक्रेता। किं कथयसि? अहं जठरानलस्य निर्वापक इति? त्वं पुनस्तं सन्धुक्षयसि? अरे रे शिलासार-मुद्गराकार! आस्तां जाठरवह्निरारण्यवह्निरपि न त्वां दग्धुं प्रभवतीति मन्ये। यत् त्वं नरोदर-गतः कथञ्चिज्जीर्यसि तत् पुनर्मत्प्रभावादेव। पश्य रे मूढ!—

अहमतिलघुपाको दुर्जरस्त्वं प्रकृत्या
जरसि च पुनरीषज्जारकं मामुपेत्य।
न हि भवसि यतस्त्वं भोजनार्हो विना माम्
अभिदधति जनास्त्वां तेन मन्नामपूर्वम् ॥५७॥

भवतु, पुरस्ताद् गच्छतोः कदलीविक्रेतुः सन्देश(लड्डुक)विक्रेतुश्च मतमत्र गृह्यताम्। तद् भवतु, आह्वय आह्वय।

चिपिटकविक्रेता। भो भ्रातरौ! अत्रागच्छतम्।

[ कदलीविक्रेता, सन्देशविक्रेता च प्रविशतः ]

चिपिटकविक्रेता। दण्डमहोत्सवे वयं झटिति सम्मिलिता भविष्यामः। किन्तु—

अनेन दधिविक्रेत्रा सह कलहो मेऽहमहमिकया।
जातो निर्मर्यादः स तावदादौ युवयोर्निर्णेयः॥५८॥

कदलीविक्रेता। मत्तो गरीयान् न कोऽपि विद्यते। यतोऽहं सर्वैः सह चरामि।

[ चिपिटकविक्रेतारं दधिविक्रेतारं चाङ्गुल्या पृथङ् निर्दिश्य ]

त्वया त्वया च भक्तेन पयसा पायसेन च।
एवमन्यैर्बहुद्रव्यैर्योगो मे जनरञ्जनः॥५९॥

किञ्च—

ब्रह्मविष्ण्वादयो देवाः प्रीयन्ते मयि सन्ततम्।
सम्पद्यते न नैवेद्यं तेषां यस्मान्मया विना॥६०॥

तस्मात् सर्वे नितरां शब्दायन्ते कदली कदलीति। अत्रत्ये कोलाहले नाहम् आत्मगौरवं परित्यक्तुम् इच्छामि।

सन्देशविक्रेता। कथम् अहं न श्रेष्ठः स्याम्? सर्वे कथयन्ति

सन्देशः सन्देश इति। फलतः पुरातनकालाद् आरभ्य वर्तमानसमय-पर्यन्तं सन्देशस्य नास्ति तुलनम्। न केवलम् आसमुद्रहिमाचलं, परम् आसुमेरु कुमेरुपर्यन्तं सर्वत्र सन्देशः सन्देश इति जायत आनन्दध्वनिः।

सन्देशो यदि नास्ति धिक् चिपिटकं रम्भादधिभ्यां समं
क्षीरं नीरसमं स चेन्न सविधे को वा पयः पीयते।
तस्मादेव जनः क्वचित् प्रियतमे कुर्वन्तमत्यादरं
"किं सन्देशमविन्दथा" इति जनं सोल्लुण्ठनं भाषते ॥६१॥

कदलीविक्रेता। तच् श्रोत्रविनोदनार्थं, न रसनाविनोदनाय।

सन्देशविक्रेता। अत एव त्वम् अङ्गुलोप्रदर्शनेन कदलीत्यभिधीयसे। किं वा कथयामि ते स्वरूपम्—

असारवस्तु ब्रुवता जनेन
यदुच्यते हा कदलीति लोके।
तेनैव ते ज्ञायत एव मानः
स त्वं मया स्पर्धस इत्यपूर्वम् ॥६२॥

दधिविक्रेता। आवयोर्दधिविक्रेतृचिपिटकविक्रेत्रोः संघर्षनिरा-करणाय युवाम् आहूतौ। तौ युवां स्वयमपि कलहे प्रवर्तेथे? सत्य-मुक्तमभियुक्तैः—

अपसार्याणि भूतानि येन सर्षपवस्तुना।
भूताक्रान्तं तदेवाभूदहो भूतस्य विक्रमः ॥६३॥

सन्देशविक्रेता। किं करोमि? भ्रातः, कथं सन्देशतः कदली भवेद् गरीयसी? अहो कालधर्मः!

चिपिटकविक्रेता। भ्रातरः! दण्डमहोत्सवोऽयम्। अवधूतो नित्यानन्दोऽत्राचार्यः, रघुनाथश्चौर इति संज्ञितो भोज्याधायकः। वयं च सर्वे खाद्यसंग्राहकाः। भूयः कर्तृपक्षीयाः सर्वे महाप्रभुश्रीचरण-वन्दनतत्पराः।

सन्देशविक्रेता। तस्मात् कोलाहलोऽस्माकं भवतु मृदङ्गतान-लयपरः, सर्वे वयं गायन्तश्चलामः। अहो! महत् सौभाग्यम्। आयाति कश्चिद् भक्तप्रवरः। एतेन कृतं सङ्गीतम् अस्माकं शान्तिं मेलनं च विधास्यति।

[ ततः प्रविशति भक्तः ]

सर्वे। भक्तवरं प्रणमामः। भवान् सङ्गीतमुखेनास्माकं चित्त-विनोदनं करोतु।

भक्तवरः। कल्याणमस्तु। शृणु महाप्रभु-विषये सङ्गीतम्।

[ मिलनात्मकं कीर्तनम् ]

पुण्या श्रीमहाप्रभुप्रेमगङ्गाधारा ॥
पूर्वगुरुपरम्परा-निर्झरोत्थ-स्नेहसारा
विश्वचित्तप्रसादिनी शान्तिवन्याकारा ॥६४॥
अद्वैत-श्रीहरिदास-नित्यानन्द-श्रीश्रीवास-
शची-सती-विष्णुप्रिया-मालिनीसञ्चारा।
दधि-चिपिटक-कदली-नवरङ्ग-चूतावली-
सर्ववस्तुसमस्नेहा दानध्यानसारा।
उच्चावचदूरकराहिंसाप्रचारा ॥६५॥

———

## द्वितीयोऽङ्कः

### तृतीयं दृश्यम्

[ प्रविशन्ति नित्यानन्दप्रभुः, रघुनाथदासो गोवर्धनादयो भक्ताश्च ]

रघुनाथः । भोः श्रीकृष्णचैतन्यलीलामहिमावतार प्रभो ! परमनुगृहीतोऽस्मि भवतामनेन दण्डग्रहणेन ।

विफलमनुपयोगात् सञ्चितं दीर्घकालाद्
दधिचिपिटकजन्म प्राप्य वित्तं मदीयम् ।
भजति यदिह मुक्तिं तत्तवैवानुकम्पा
जगति हि किमसाध्यं सन्निधेः सज्जनानाम् ।।६६।।

दीनदास रघुनाथस्य साष्टाङ्गं प्रणामाञ्जलिं परमकृपया भूयोऽपि परिगृह्णातु भवान् ।

नित्यानन्द-प्रभुः । [ सस्मितम् ] रघुनाथ ! पश्य, पश्य । कथं परमानन्देन नृत्यन्ति सर्वे भक्तजना गदाधर-मुरारि-कमलाकर-रामदास-सुन्दरानन्द-सदाशिव-पुरन्दर-धनञ्जय-जगदीश-परमेश्वरदासोद्धारणमुख्याः । तव दण्डग्रहणस्य फलमिदम् । बहोः कालादनन्तरं दर्शनदानचतुरस्य चौरस्येदृशदण्डो महाप्रभोरप्यभिप्रेत एव ।

रघुनाथः । भगवन्तं महाप्रभुं साष्टाङ्गं प्रणमामि ।

नित्यानन्दः । ( महाप्रभुं पश्यन्निवोच्चैः ) अहो पश्यत पश्यत भक्ताः सर्वे ! महाप्रभुः स्वयमेव रघुनाथं प्रति कृपापरवशोऽयात समागतः ।

[ नित्यानन्द-रघुनाथाभ्यां सह सर्वे महाप्रभुमुद्दिश्य दण्डवत् प्रणमन्ति ]

नित्यानन्दः । [ मानसदृष्टं महाप्रभुमुद्दिश्य ] महाप्रभो ! भवतां सान्निध्येन परमनुगृहीता वयम् । अपि कुशलं स्वरूपदामोदर-राय-रामानन्द-प्रमुख-साक्षाल्लीलाप्रत्यक्षकारिणां भक्तानाम् ?

[ रघुनाथमुद्दिश्य ] रघुनाथ ! रघुनाथ ! तात !

पूर्वं शान्तिपुरे प्रशान्ततिमिरेऽद्वैतप्रभोर्मन्दिरे
चैतन्यस्य कृपा यदापि भवता तत् साम्प्रतं स्मर्यताम् ।
भूयस्त्वामनुकम्पितुं स हि महान् देवः कृपामेदुरो
दूरादेत्य विलोकते मधुरया सस्नेहया त्वां दृशा ॥६७॥

रघुनाथ ! सर्वान्तःकरणेन महाप्रभोराशीर्वादान् गृहाण । आकर्ण-विस्तृतलोचनाभ्यां पश्य महाप्रभोर्नेत्रारविन्दयुगलं ; सर्वपिपासाशान्त्यर्थं चकोरो भूत्वा पिब पिब श्रीमहाप्रभोरनवद्यरूपसुधाचन्द्रिकाम् ।

रघुनाथः । [ साष्टाङ्गं प्रणम्य ] महाप्रभो ! महाप्रभो ! अधम-दीनदासस्य रघुनाथस्य कोटीकोटीप्रणामान् गृहाण, गृहाण प्रभो ।

अहो दीनातिदीनम् अधमाधमं प्रति तवेदृशी कृपा ! भक्तदल-हृदयशतदलविहारिपरमविभो ! भक्तचित्तकोरकविकाशनाय तवेदृशः प्रयत्नः ! सर्वावतारेष्वसि महिष्ठो गरिष्ठो वरिष्ठः । अहो ! मूर्त-करुणारूपधर ! मा मा मामीदृशं करुणकरुणं प्रेक्षस्व !

गदाधरदासः । नित्यानन्दप्रभो ! अदूरे पश्य स्वपत्न्या राधा-देव्याः स्वहस्तपक्कम् अन्नमादाय परमपुलकितस्त्वद्गतमनसा समायाति पण्डितः श्रीराघवः ।

नित्यानन्दः । अहो स्मर्यते किल, तद्दत्तसेवाग्रहणमद्यत्वे प्रतिश्रुतं मया ।

यत् सत्यं श्रद्धालुरयं पण्डितपरिवारः ।

राधाऽकृत्रिमभक्तिभासुरमतिस्तस्याः पतिस्तादृशः
श्रीमान् राघवपण्डितश्च कुरुतः किं किं न मां सेवितुम् ।
किञ्चैतौ भगिनी च तस्य दमयन्त्याख्या प्रभोः प्रीतये
प्रत्यब्दं प्रहिणोति धाम्नि विविधं भोज्यं परश्रद्धया ॥६८॥

[ प्रविशति भोज्यपात्रहस्तो राघवपण्डितः ]

राघवपण्डितः । [ नित्यानन्दमुद्दिश्य ] आनीतं ते सेवाद्रव्यं मया ।

नित्यानन्दः । श्रीलराघवपण्डित ! जयतु श्रीराधाप्रतिमा श्रीराधा । [ स्वगतम् ] महाप्रभो ! चतुर्महापात्रेभ्यो दण्डमहोत्सव-

भोज्यं दीयते मया, तथा श्रीराधापक्वमन्नव्यञ्जनादिकञ्च। भवता कृपया ग्रहणीयं सर्वम्। [तूष्णीं स्थित्वा, चतुर्दिशं सविस्मयं विलोक्य]

अहो! राजपथादारभ्य न केवलं नदीतटपर्यन्तम्, नदीगर्भेऽपि राजन्ते भक्तजना महाप्रसादग्रहणोन्मुखाः। स्वयं महाप्रभोर्भुक्तावशिष्टं प्रसादं सर्वे भक्ता गृह्णन्तु। रघुनाथ! पश्य पश्य,

त्वद्दण्डोत्सवडिण्डिमेन रसताऽत्युच्चैरुपामन्त्रिताः
पश्यैते परितः पतन्ति रभसाद् भोज्यार्थिनः सज्जनाः।
श्रेणीशस्त इमे निविश्य बिसिनीपत्रेषु पत्रान्तरे-
ष्वाहार्यं निहितं झटित्युदरसात् कर्तुं समुद्युञ्जते ॥६६॥

[दीयतां भुज्यतामिति महाकलकलः]

[ततः स्वकगणेन सह नृत्यति श्रीलनित्यानन्द प्रभुः। हरिध्वनिः सर्वा दिशो मुखरीकरोति]।

रघुनाथः। (स्वगतम्) अहो मनोलोभनं नृत्यं नित्यानन्दप्रभोः।

गदाधरप्रभुः। स्वयं महाप्रभुर्नृत्यतीवेति मे प्रतिभाति।

रघुनाथः। परमकरुणावतार नित्यानन्दप्रभो! भवता तु सेवा न परिगृहीताऽधुनापि। अनुगृह्णातु भवान्।

नित्यानन्दः। रघुनाथ! त्वया सह करिष्ये प्रसादग्रहणम्।

[राघवपण्डितमुद्दिश्य] पण्डितप्रवर! एष रघुनाथोऽद्य त्वदालये रजनीयापनं करिष्यति।

राघवपण्डितः। परमसौभाग्यं तदस्माकं देव! तात रघुनाथ! तव सानुग्रहोपस्थितिं सर्वान्तःकरणेन कामये।

रघुनाथः। पण्डितप्रवर! धन्योऽस्मि। प्रभो नित्यानन्द! तव कृपया जीवनं मे जातं सुधन्यम्। सर्वभक्तजनपदरजोऽद्य मया तवैव कृपया लब्धम्। त्वत्कृपयैव लभ्यते महाप्रभोः कृपा।

नित्यानन्दः। परमभक्तस्य तव जीवनं भविष्यति निरङ्कुशम्। शीघ्रमेव यास्यसि त्वं पुरीधाम्नि महाप्रभुसकाशम्! चिरं द्रक्ष्यसि महाप्रभोः प्रकटलीलाम्। स्वरूपदामोदरस्य च हस्ते भविष्यसि न्यस्तः।

भो भो भक्तगण ! परमशुभदिवसोऽयमस्माकं यस्मिन् दण्ड-महोत्सवोऽनुष्ठितः। दण्डरूपेण विहितोऽद्यतन-दधि-चिपिटक-महोत्सवोऽतः प्रभृति दण्डोत्सवनाम्ना लोके ख्यातो भविष्यति।

[ पुनः पुनर्हरिध्वनिः ]

[ राय-नित्यानन्दो नरीनृत्यते। सर्वेषां भक्तजनानामपि नृत्यम्। ततो नामसङ्कीर्तन-पूर्वकं सर्वेषां बहिर्गमनम्। ]

———

# तृतीयोऽङ्कः

## प्रथमं दृश्यम्

[ ततः प्रविशति गोवर्धनदासः ]

गोवर्धनदासः। नमो नमो जगज्जनन्यै महाभावस्वरूपिण्यै श्रीराधिकायै।

जननि ! विचित्रमिदं तव जगत्। अत्रानुपार्श्वं राजन्ते सीताराम-रावणौ, राधाश्याम-कंसौ, गोपाबुद्धाङ्गुलिमालौ—यथा त्रेतायां, द्वापरे, तथा कलि-प्रारम्भे पुनरद्यत्वेऽपि। अहो एकतो गीताद्वैततत्त्वम्, अन्यतः पाषण्डिसम्प्रदायः।

अथच महापुरुषस्य प्रभावेण किं न संभवति। यथा हरिदासप्रभोः प्रभावेन लक्षहीरा परमा वैष्णवी जाता। किञ्च—

साहचर्यं समासाद्य दिनानि यस्य कानिचित्।
पुत्रोऽभूद्भगवत्प्रेममत्तो भवबहिर्मुखः ॥७०॥

मत्पत्नी पुनर्जानाति यदनभिज्ञोऽहं पुत्रवैराग्यस्येति। उपायान्तराभावान्मयायमभिनयः क्रियते। यतो मत्कुले कश्चिद् वैष्णवो जायतामिति न खलु न ममाभिप्रेतम्, किन्तु पत्न्या मनोवृत्त्यनुरोधादाकारगुप्तिः क्रियते। तथापि स्नुषायाः समवस्थां संचिन्त्य नितरां पर्याकुलोऽस्मि।

नवोढायाः काम्यः प्रणयसरसो यः प्रियतमः
स चास्या दुर्दैवान्मिलित इह संसारविमुखः।
तमप्येनं भक्त्या पतिमनुचरन्ती स्मितमुखी
ज्वलन्त्यन्तर्गूढं व्यथयति मनो मे कुलवधूः ॥७१॥

तथापि हरिदास-प्रभोर्माहात्म्यमनपलपनीयमेव।

गोवर्धनपत्नी। [प्रविश्य] किं किमुक्तं भवता? हरिदासस्य माहात्म्यमिति? सोऽपि साधु योऽनायासं बहुकोटीश्वरं भिक्षुकस्तरे स्थापयितुं यतते?

गोवर्धनदासः। प्रिये! किं वदसि? कथं हरिदासः कोटीश्वरं भिक्षुकपर्यायीभूतं करोति?

गोवर्धनपत्नी। [अश्रूणि विसृज्य] हा हताऽस्मि मन्दभाग्या। अपि मम पतिरन्धः? यत् सत्यं दिवान्धा रात्रौ, रात्र्यन्धाश्च दिवेत्येवं रीत्या सर्वेऽपि क्वचित् किञ्चित् प्रपश्यन्ति। एषोऽन्धो मे पतिस्तु कदापि न पश्यति। अहो! एतदर्थमहं सर्वदा वदामि—पुरुषाणां केवलं बहिर्गृहावस्थानं सर्वानर्थस्य निदानमिति।

गोवर्धनदासः। तत् प्रिये! त्वं बहिर्गृहालङ्करणं चिराय भव। अहमन्तस्तिष्ठामि। संसारदावानलज्वालातो दूरे स्थित्वा जनन्याः श्रीश्रीराधिकायाश्चरणसेवनं कुर्वन् जीवनस्य साफल्यं चरमां शान्तिं च लभेय।

गोवर्धनपत्नी। अहर्निशं गूढदावानलदहनाद् बहिर्गृहकोलाहलः कोटिशो वरम्।

गोवर्धनदासः। किन्तु प्रिये कुत्र दावानलः? कथं वा ज्वलसि? वस्त्रं तेऽतीव विशुष्कं मृत्तैलस्पर्शलेशहीनम्, आर्द्रताया नामापि तत्र नास्ति। अथ च चक्षुषी ते जलमिषेणाग्न्युद्गरणं करोति। यत्फलेन त्वत्तोऽप्यभ्यधिकं साम्प्रतमहम् अन्तर्जालं पुटपाक इव ज्वलामि। अहो! अधन्यं तस्य पत्युर्जीवनं यस्य सती साध्वी भक्तिमधुरिमम्यानन्द-मन्दाकिनी सहधर्मिणी कदापि क्रन्दति, न केवलं क्रन्दति, हठात् तर्जन-

गर्जन-भर्त्सनपुरःसरं दृढमुष्टिबन्धं क्रन्दति, भूयोऽपि शनैः शनैर्हस्ताभ्याम् अश्रूणि निःसार्य निःसार्य क्रन्दति। पुनश्च दण्डायमाना क्रन्दत्युपविश्य क्रन्दति, शयाना च क्रन्दति। अहो! कारणाकारण-क्रन्दनं नाम नारीजीवनं यथा वर्षापगमे कदम्बकानने निरभ्राकाशाद् रौद्रमयी वृष्टिः।

गोवर्धनपत्नी। नाथ! कथं सुखबोध्यकारणे निर्हेतुकम् उपमानमवलम्बसे। न मे कविता स्फुरति।

गोवर्धनदासः। देवि! तत् सरलं किल कारणम् अतीव कठिनम्, यथा बाल्यकाले भविष्य-कविजनस्य सहजपाठ्य-गणितम्। पुनः कविता न ते स्फुरति चेत् कथं वनिताऽसि? सहधर्मिणी सर्वदा स्वभावकविः, विशेषतो बहिर्गृहस्थितस्य पत्युः।

गोवर्धनपत्नी। तथाप्युपहासः? शृणु मे मनोवेदनम्।

यदा यदा त्वं हरिदास-साधो-
माहात्म्यमुद्घोषयसि प्रतीतः।
चित्ते बतोदेति तदा तदा मे
मद्वंशनाशैकफला क्रियाऽस्य ॥ ७२ ॥

भवति चेन्ममैकमात्रवंशधरः सन्न्यासी, को दद्यात् पूर्वपुरुषेभ्यस्तिलाञ्जलिम्? नाहमिच्छामि वंशहीना भवितुम्।

गोवर्धनदासः। प्रिये! तवैवेच्छयाऽत्यल्पे वयसि पुत्रस्य विवाहः संघटितः, आनीता चाप्सरोऽधिकसौकुमार्या कन्यका। प्रेमवर्त्मनि मम पुत्रः स्नुषा च प्राग्रेसरत इति मन्ये। अवधीयतां तावत्—

आस्ये सदा हास्यसमुज्ज्वलप्रभे
प्रेमोदयं सूचयतो न किं तयोः।
परस्परालोकसमुत्सुके दृशौ
कुतोऽनुरागस्य विजृम्भणं विना? ॥ ७३ ॥

गोवर्धनपत्नी। अत एव मया कथितम्—भवान् अन्ध इति। चक्षुर्युगलं ते सम्पूर्णतया ज्योतिर्हीनम्।

गोवर्धनदासः। किन्तु प्रजाः सर्वाः कथयन्ति—यदहं भूयसा चक्षुष्मान् इति।

गोवर्धनपत्नी। नाहं तव प्रजापुञ्जस्यान्यतमा। ममैक एव पुत्रः, तस्य सन्न्यासं नाहं सोढुं शक्ष्यामि। धनैः पुरुषा जीवितुं शक्नुवन्ति चेज् जीवन्तु नाम। नार्यो वयं मातरो वयं तद्विषये नितान्तमशक्ताः। पुत्रस्य मे रघुनाथस्य वदनं संसारविषय उन्मनस्कत्वं सूचयति। यत् पुनर्भवतोक्तम् अनयोः प्रफुल्लमुखत्वमिति तत्र कारणन्त्वन्यत्। पश्य,

नारीचित्तं मधुर-सरसं दुर्विगाहं प्रकृत्या
नित्यं तच्चानुसरणपरं चित्तवृत्तेः प्रियस्य।
तस्मात् पत्युः स्वगृहविमुखस्यानुसृत्याभिलाषं
फुल्लं वध्वा मुखमथ सुतस्यापि वाञ्छाप्रपूर्त्या॥ ७४॥

जनन्यहं किमस्य प्रतिकुर्याम्। तत् प्रार्थये देव! सावधानता सर्वथाऽवलम्बनीया। विवाहो नाम न सर्वरोगहरमौषधम्।

गोवर्धनदासः। किन्तु पण्डितास्तथैव मन्यन्ते।

गोवर्धनपत्नी। मन्यन्तां तथा पण्डिताः। किन्तु न वयं योषितस्तथा मन्यामहे।

गोवर्धनदासः। विषय एष एकान्ततो नारीजनगवेषणसमालोचन-सापेक्षः। पुत्रवधूं ते पृच्छ। अहं बहिर्यामि।

( इति निष्क्रान्तः)

गोवर्धनपत्नी। वधूमातः! मातः! इहागच्छ।

[ रघुनाथपत्नी प्रविशति ]

गोवर्धनपत्नी। वधूमातः! श्वशुरस्ते ज्ञातुमिच्छति, कथं रघुनाथो मे सर्वदोन्मनस्क इव लक्ष्यते इति?

रघुनाथपत्नी। मातः! किमिति न जानासि यत् पुत्रस्ते कियतश्चित् कालात् केवलम् अपार्थिवविषयानेव चिन्तयति। किमधिकं क्षुत्-पिपासादिप्रतीकारेऽपि प्रायेणानवहितो वर्तते इति।

गोवर्धनपत्नी। अथ त्वया कदाचिदयम् एतदधिकृत्य किमपि कथितो बोधितो वा ?

रघुनाथपत्नी। बहूक्तं, किन्तु नायं स्वपथादीषदपि चलति। बोधितस्तु—

संसारासारतां वक्ति स्तौति सन्न्यासपद्धतिम्।
ममानुकूल्यमाशास्ते स्वाभिप्रायानुवृत्तये॥ ७५॥

गोवर्धनपत्नी। मातः! कामं मया मन्यते यत् त्वयास्य वैराग्य-वृत्तेरनुसरणमेव क्रियते न प्रातिकूल्यमिति।

रघुनाथपत्नी। मातः! पतिर्मे सर्वथा गम्भीरमननशीलो भगवद्भक्तो नित्यध्यानपरायण इति किं नास्माकं सौभाग्यमेव।

एकोऽपि यदि जायेत वंशे भागवतोत्तमः।
आ विंशतेः कुलान्येष पूर्वजानां समुद्धरेत्॥ ७६॥

गोवर्धनपत्नी। अयि निर्बोधे कुलध्वंसकारिके! किं वदसि मम पुत्रो नित्यध्यानपरायण इति।

तथातिदूरमारूढेऽप्यस्य वैराग्यचेष्टिते।
किमेतावद्दिनं यावन् मूढे न बोधिता वयम्॥ ७७॥

अस्मिन् परिवारे तवागमनात् प्राङ् नासावीदृश आसीत्। त्वमेवास्य मनोगतेः परिवर्तनकारणम्। तव संस्पर्श एवास्य मनः संसारविमुखं करोति स्म। दूरमपेहि, दूरमपेहि। [ पतिमुद्दिश्य ] भो भोः श्रृणु, कीदृशी वधूस्त्वयाऽनीतेति, पत्युर्ध्यानपरायणता तस्यै किल रोचते। अहो! त्वं त्वमेव मे कुलध्वंसकारणम्।

पुत्र रघुनाथ! जनन्या मे हृदयमलङ्कृत्य सदैव त्वं तत्र तिष्ठ, नाहं कदापि त्वां वस्त्राञ्चलान् मोचयिष्यामि।

[ इत्युन्मत्तेव निष्क्रान्ता ]

रघुनाथपत्नी। अहो मे दुरदृष्टमहिमा !

शिष्टाचारो हृदयविधुरः पत्युरौदास्यहेतो-
र्यन्मां घोरं रुजति तदिदं कथ्यते कस्य वाऽग्रे।
श्वश्रूदेव्याः परुषवचनान्यद्य चाविर्भवन्ति
क्षारं लिम्पन्त्यशरणतया हन्त गाढं क्षते मे ॥ ७८ ॥

तदिदानीं किं करोमि मन्दभाग्या ? भवतु, श्वशुराय सर्वं निवेदयामि।

अस्मिन् विपत्समुद्रे मे श्वशुरः केवलः प्लवः।
एकस्तत्रभवान् वेत्ति दुःखिन्या मानसीं व्यथाम् ॥ ७९ ॥

( इति निष्क्रान्ता। )

---

## चतुर्थोऽङ्कः

[ पुरीधामगमनप्रवृत्तो रघुनाथः प्रविशति ]

रघुनाथः। अद्य चतुर्थो दिवसो मे पितृगृहान्निर्गतस्य। सर्वत्र संप्रेरिताः स्युर्मम पित्रा जना मम पुरीधामगमने बाधाप्रदानाय सप्तग्रामं प्रति मम पुनः संप्रेषणाय च। अहो मे चेतसोऽनवस्थितता !

स्नेहः पित्रोः सहजसुहृदोर्मित्रता बान्धवानाम्
आस्यं पत्न्याः प्रणयमधुरं चैकतो रुन्धते माम्।
अन्यत्रायं बहुजनिसुहृच्च् श्रीलचैतन्यचन्द्रः
स्वीकर्तुं मां कृतपरिकरस्तेन पर्याकुलोऽस्मि ॥८०॥

अथापथेन विपथेन गहनकान्तारपथेन पुरीधाम प्रति धावामि। किन्तु पादयुगलं मे न चलतीव। तथाप्यवश्यमेव मया गन्तव्यम्। विजयतां महाप्रभुः श्रीकृष्णचैतन्यः।

[ दूराच्छ्रूयते जनकलकलः। ]

पिपासादिः के न्वत्रागच्छन्ति ?

[ प्रविशति दस्युदलपतिः स्वदलेन सह । ]

दस्युदलपतिः । कस्त्वम् ? कस्मात् स्थानादायातोऽसि ? कुत्र वा यासि ?

रघुनाथः । रघुनाथनामाऽहं कश्चन गौरभक्तः पुरीधाम्नि गन्तुकामोऽस्मि । आयामि च वङ्गदेशस्य सप्तग्रामाख्यस्थानात् ।

चण्डः । तस्मात् त्वं गोवर्धनदासस्य प्रजापुञ्जस्यान्यतमोऽसि ?

रघुनाथः । अथ किम्, साक्षात् तस्मादेव प्रजातोऽस्मि ।

मुण्डः । अयि पण्डित ! प्रजातोऽस्मि इति किम् ?

दस्युदलपतिः । एष गोवर्धनदासस्य पुत्र इत्यात्मानं ख्यापयति ।

चण्डः । तस्माद् अस्य सकाशे महद् वित्तं निश्चितं प्राप्स्यते । एहि एहि, पशुबन्धं बद्ध्वा त्वां नेष्यामो यूपकाष्ठं प्रति ।

दस्युदलपतिः । [ स्वगतम् ] अहो जातं परम् आनन्दकारणम् ! एनं मारयित्वा वा संरक्ष्य वा प्रचुरवित्तलाभं करिष्ये । [रघुनाथमुद्दिश्य] अयि वृषलकेतो ! अङ्गराजस्य दातुः कर्णस्यैकमात्रतनय ! देहि ते सर्वस्वम् । अन्यथा अचिरादेव त्वं स्वर्गे विहरिष्यसि ।

रघुनाथः । न मे किञ्चनास्ति वित्तम् । मम प्राणा अपि समुत्सृष्टाः श्रीश्रीमहाप्रभवे । प्राणान् मे भवन्तो रक्षन्तु वा नयन्तु वा न मे किमपि वक्तव्यमास्ते । जय श्रीमहाप्रभो !

दस्युदलपतिः । अयि जडबुद्धे ! महाप्रभुस्ते किं करिष्यति ? सर्वं वित्तम् अचिराद् देहि, अन्यथाऽकारणं प्राणांस्त्यक्ष्यसि ।

रघुनाथः । कपर्दकहीनेन मया किं दातव्यम् ।

दस्युदलपतिः । भोः सत्यवादिन् ! यदि यथा त्वं भाषसे, तथा सत्यमेव त्वं भवसि गोवर्धनदासस्य पुत्रस्तदा त्वया सह न्यूनकल्पेन दशसहस्रमुद्रा आसते इति नास्ति सन्देहः । यदि न दास्यसि, सुन्दरेण वपुषा ते वयं क्रीडिष्यामः । धनुष्कोटिभिः सहस्रशः कुट्टयित्वा ते वपुर्वयं मोक्षं लप्स्यामहे ।

रघुनाथः। नास्ति मन्निकटे वराटिकापि। भवद्भिर्यथेच्छं क्रियताम्।

चण्डः। अनेन धूर्तेन सहालपनेन किम् ?

दस्युदलपतिः। अथ यदि त्वत्सकाशे नास्त्येव किमपि तर्हि क्रियतामिदमुपायान्तरम्।

रघुनाथः। किमिति ?

दस्युदलपतिः। एवमनुरुध्यतां ते पिता—

दस्योः करे मां पतितं वनान्ते
जीवन्तमाप्तुं यदि वोऽस्ति वाञ्छा।
अकालहीनं लिपिवाहकाय
प्रदत्त मुद्रा रजतस्य लक्षम् ॥८१॥

रघुनाथः। नाहं तत् कदापि करिष्यामि। पितुरर्थास्तस्यैव। नाहं तद्विषयेऽनुरोधं करिष्ये। सर्वस्वमुत्सृज्यात्मनिवेदितोऽस्मि श्रीश्रीमहाप्रभोश्चरणकमलयोः। स्वकं मे किमपि नास्ति।

ततो यथेच्छं कुरु यच्चिकीर्षितं
न बाधनं तत्र मया विधास्यते।
असाधुजुष्टे पथि तिष्ठता पुन-
र्न जीवनं त्रातुमसारमिष्यते ॥८२॥

दस्युदलपतिः। तथा सति स्वर्गलोकविहाराय सज्जो भव। भो भो अदूरस्थिते वृक्ष एनं बद्ध्वा खण्डशः कुट्टयत।

[ दस्यवो रघुनाथं वृक्षे रज्जुबद्धं कुर्वन्ति। ]

रघुनाथः। महाप्रभो! महाप्रभो! अन्तिमसमये दासानुदासस्य गृहाण प्रणामसन्ततिम्। तवेच्छा विजयताम्।

[ दस्युदलपती रघुनाथप्राणहरणाय धनुषि ज्यारोपणं करोति। ]

कपिलाक्षः। [ स्वगतम् ] अहो! महिममयी परमस्नेहजननी चास्य वदनस्य द्युतिः। अयं मम मृतपुत्र एव कायं धृत्वा पुनः समायात इति प्रतिभाति। तादृशी नासिका तादृशमेव भ्रूयुगलम्

—केवलं बाहुल्येन सौष्ठवम् आप्तम्। तदस्य जीवनार्थम् अवश्यं मया यतितव्यम्।

[ दस्युदलपतिमुपसृत्य ]

भो दलपते! सानुनयं निवेदयामि, मा तावदस्य नवनीतकोमले शरीरे विषदिग्धं बाणं निक्षिप।

हतेनानेन नार्थः स्याज्जीवितेन भवेद् यदि।
तस्माद्धनार्थमेवायं रक्षितव्योऽतियत्नतः ॥८३॥

किञ्च—

अहमेवतस्य पितुः सकाशं गत्वा भवत्प्रार्थितं मुद्रालक्षम् आनेष्यामि। मोचयैनं रज्जुबन्धनात्।

दस्युदलपतिः। कस्त्वम् एनं प्रति दयाप्रदर्शनाय?

कपिलाक्षः। अहम् एतस्याकारणबन्धुः। यस्मिन् मे चित्तं स्वत एव स्निह्यति, मयि जीवति न कोऽपि तस्य केशाग्रस्पर्शनमपि कर्तुं धृष्णुयात्।

दस्युदलपतिः। अहो ईदृशस्ते मोहः! यस्यान्नं भक्षयसि, तमवमन्यमानोऽपि न लज्जसे?

चण्डः। ईदृशो व्यामोहः कपिलाक्षस्य मार्जारचक्षुषः स्वाभाविक एव। [ दलपतिमुद्दिश्य ] दलपते! मा कुरु विलम्बनम्। विलम्बे कार्यहानिः स्यात्। कपिलाक्षं धूर्तमेनं दशरथनन्दनं च युगपत् स्वर्गद्वारे संप्रेषय।

रघुनाथः। महाप्रभो! महाप्रभो! कथं मम हेतोरेते कलहं कुर्युः। अहो दौर्भाग्यम्। दस्युदलपते! मामेव मारय। क्षुद्रं मे जीवनम्। एतेन किम्?

[ ततः प्रविशति दस्युदलपतेः पत्नी। ]

दस्युदलपतिपत्नी। आः कथम् एष कोलाहलः संवृत्तः? [ सर्वान् उद्दिश्य ] अन्नपरिवेषणाय चिरं प्रतीक्षमाणायाः कष्टं मे न यूयमनुभवथ। [ सर्वतो दृष्ट्वा ] अये कथं संघर्षतत्परा यूयं सर्वे? किं

संघटितम् ? [ रघुनाथमुद्दिश्य ] वत्स ! कथय कथं विवदन्त एते सर्वे ? को वा त्वम् ? [ स्वगतम् ] अहो लावण्यमस्य वपुषः !

रघुनाथः। मातः ! मदर्थमेवैतेषां विवादः। पुरीधाम गन्तुकामो गौडीयोऽस्मि नाम्ना रघुनाथः। भगवतः सकाशे प्रार्थये मम मरणमेतेषां विवादस्यावसानाय भवत्विति।

दस्युपत्नी। अये ! अश्रुतपूर्वम् ईदृशम् अकारणमातृसंबोधनम्। निगूढसत्त्वोऽयं परमभक्तजन इति नास्ति सन्देहः। [ पतिमुद्दिश्य ] नाथ ! दूरं निक्षिप ते धनुः। [ दस्युदलपतिर्धनुर्दूरे क्षिपति। ]

दस्युपत्नी। हत्वा नैनं लप्स्यसे कञ्चनार्थं
पापं भूयः स्यात् परं प्राणिहन्तुः।
जीवंश्चायं किन्तु ते नाथ कुर्या-
च्चातुर्वर्ग्यं तादृशोऽस्य प्रभावः ॥८४॥

तन्मुच्यताम् अयं द्वितीयो ध्रुवः प्रह्लादो वा। [ रघुनाथमुद्दिश्य ] पुत्र ! पुनरपि मां मातृसम्बोधनेन धन्यां कुरु। अहो ! दुःखं तव जनन्याः, या तव दुर्दशामस्मिन् समये स्वगृहे स्थित्वा स्वहृदयेनानुभवन्त्यपि निरुपाया केवलं रोदिति। पश्य—

क्षेमं वा यदि वाऽक्षेमं यत्र क्वचन जायताम्।
दूरस्थितापि जननी नूनं पुत्रस्य वेत्ति तत् ॥८५॥

रघुनाथः। परमकल्याणमयि जननि ! अत एव आ बाल्यात् मातृनामव मह्यं रोचते। भगवतो मातृमूर्तिमेवाहम् आराधये। महाप्रभोर्हृदयान्तर्वर्ति चिरमातृत्वमेव मां समाकर्षतितराम्।

दस्यवः सर्वे। महात्मन् ! क्षमस्व नः।

रघुनाथः। मम हेतोर्भवतां क्लेशोऽजनिष्ट, ततोऽहमेवास्मि क्षमार्हः। भवतां कृपां प्रार्थये।

सर्वे। विजयतां भगवान् श्रीमहाप्रभुः।

( सर्वे निष्क्रान्ताः )

---

## पञ्चमोऽङ्कः

नीलाचलपुरे श्रीरघुनाथदासः।

[ ततः प्रविशन्ति मुकुन्दः, महाप्रभुः, रघुनाथः, स्वरूपः, अन्ये च भक्ताः। ]

मुकुन्दः। देव! वङ्गदेशादेकाकी समागतोऽयम् अदूरे दण्डवत् प्रणतो रघुनाथदासः। अस्य पिता सुप्रसिद्ध-धनाधिपः सप्तग्राम-कृष्णपुर-निवासी गोवर्धनदासः।

महाप्रभुः। तं मत्सकाशमानय।

मुकुन्दः। [ रघुनाथमुपसृत्य ] रघुनाथ! त्वां महाप्रभुराह्वयति। आगच्छ।

रघुनाथः। एष गच्छामि। ( उपसृत्य महाप्रभुमवलोक्य ) हन्त! सविस्मयानन्दम् एनं चैतन्यचन्द्रं पश्यामि।

अविरलगलदस्रैः प्रेमधारासहस्र-
स्नपितनिखिलविश्वः पूर्णलीलावतारः।
सतत-वितितसत्त्वस्वेदमूर्च्छा-प्रकम्पो
लसतु हृदि ममेशः श्रीनवद्वीपचन्द्रः॥ ८६॥

[ रघुनाथो महाप्रभुं साष्टाङ्गं वन्दते। ]

महाप्रभुः। रघुनाथ! गाढम् आलिङ्ग माम्। उत्तिष्ठ, उत्तिष्ठ।

[ रघूनाथः स्वरूपादीन् प्रणमति ; ते च तम् आलिङ्गन्ति। ]

महाप्रभुः। अहो! रघुनाथः परमक्लान्त इव लक्ष्यते। मुकुन्द! गोविन्दं मद्वचनाद् ब्रूहि—एतदर्थं झटिति खाद्यपानादिकं प्रदेयमिति।

[ रघुनाथमुद्दिश्य ]

रघुनाथ! कदा गृहाद् बहिर्गत आसीः?

रघुनाथः। द्वादशदिवसेभ्यः प्राक्।

महाप्रभुः। किम्? न कोऽपि पञ्चदशदिवसेभ्यो न्यूनैर्दिवसै-र्भागीरथीकूलादत्रागन्तुं शक्नोति। त्वयाऽसाध्यं साधितम्। भोजन-विषये का व्यवस्थासीत्?

रघुनाथः। देव! पथि कस्यचन गोपस्य गृहे मया पीतमासीद् किञ्चिद् दुग्धम्।

मुकुन्दः। ततस्ततः।

[ रघुनाथ इतस्ततो वीक्षमाणो नीरवस्तिष्ठति। ]

महाप्रभुः। मा लज्जस्व। वद; श्रोतुकामा वयम्।

रघुनाथः। देव! पितृप्रेरिता जना मां भूयोऽपि गृहं नेष्यन्तीति भयान्नाहं परिचितेन पथा समागतवान्।

मुकुन्दः। श्रुतमस्माभिरितः पूर्वमेव यदेष भगवत्प्रेमाकुलो वैराग्यम् अवलम्बितुं वारं वारं गृहात् पलायमानः पित्रा लोकबलेनार्थबलेन च पुनः पुनर्गृहं प्रत्यावर्तित इति।

महाप्रभुः। तस्मात् त्वमख्यात-कुख्यात-ग्रामादिकं परिक्रम्यात्र समागत उन्मत्तवद् धावन् द्वादशभिर्दिनैः? अहो ते वैराग्यस्य परा काष्ठा! [ रघुनाथं सस्नेहदृष्टिपातेनाभिषिञ्चति। ]

[ रघुनाथो मौनी तिष्ठति। ]

महाप्रभुः। भोजनादिकमपि सम्यग् उपेक्षितम्।

रघुनाथः। एषु दिवसेषु चतुर्वारमात्रं मया भुक्तम्।

महाप्रभुः। तर्हि केनोपायेन विषयविष्ठागर्ताद् रक्षितोऽसि? जानीहि कृष्णकृपयेति।

रघुनाथः। देव! नाहं जानामि कृष्णम्। अहं केवलं जानामि, त्वत्कृपैव मां गृहादत्रानीतवतीति। किञ्च,

त्वत्कृपावारिसेकान्मे हृदि वैराग्यपादपः।
प्ररूढोऽदीर्घकालेन नूनं मुक्तिं फलिष्यति॥८७॥

अपि च हे मदेकदेव !

दया त्वदीयैव मयाऽवलम्बितुं
समिष्यते विश्वसुहृन्महाप्रभो !
पाथेयमादाय तव प्रतिश्रुतिं
स्मृत्वा च तेऽङ्घ्रिं गृहतो विनिर्गतम् ॥ ८८ ॥

महाप्रभुः । भक्ताः ! सव शृणुत ।

यद्यप्यस्य पिता ज्येष्ठतातश्च न शुद्धवैष्णवौ परं वैष्णवप्रायौ । तथापि विषयविषजर्जरितगृहपरिजनसङ्गाच्छ्रीकृष्णकृपाहेतोरयं रक्षितोऽस्ति । अहो अनिर्वचनीयमहिमा खलु श्रीकृष्णकृपा !

न विना श्रीकृष्णकृपां जन्मान्तरानुबन्धदृढीभूताम् ।
भवतीदृक् तीव्रतरा विरागसम्पन्मनुष्याणाम् ॥८९॥

अपि च, ये विषयाभिलाषं परित्यज्य शास्त्रानुसरणपूर्वकं श्रीकृष्णं भजन्ते ; ते देवर्षिपित्रादीनाम् ऋणान्मुक्ता भवन्ति । [ स्वरूपमुद्दिश्य ] स्वरूप ! कथं त्वं तूष्णीं तिष्ठसि ? रघुनाथः खलु महार्हं रत्नम् । तस्माद् असौ तवैव हस्ते न्यासीकृतो मया । गोविन्द ! गोविन्द !

[ गोविन्दस्त्वरितं प्रविशति ]

गोविन्दः । महाप्रभो ! गोविन्दोऽहमत्रास्मि ।

महाप्रभुः । गोविन्द ! एष रघुनाथः प्रायेणाभुक्तो वीतनिद्रो द्वादशभिर्दिवसैर्महता क्लेशेन कृष्णपुरादत्रागतः । तदस्य सेवायाम् आत्मानं सर्वथा नियुङ्क्ष्व । रघुनाथ ! त्वमपि समुद्रस्नानानन्तरं श्रीमज्जगन्नाथदर्शनं कृत्वा प्रसादं गृहाण । [ स्वगतम् ] अहो !

एतावन्तं कालमासीद् गणो मे
हन्त न्यूनो येन भक्तेन पुंसा ।
अत्रागत्या तस्य पूर्णोऽभवत् स
स्नातश्चाहं प्रीतिधारासहस्रैः ॥ ९० ॥

[ सर्वान् उद्दिश्य ] कठोरनियमसकुशलः परमभक्तश्चायं रघुनाथः पार्थिवीमगाधसम्पदमुपेक्ष्य श्रीकृष्णचरणतलं शरणमुपागतः। अस्य क्लेशपरिहाराय सुखविधानाय च भवन्तो यत्नपराः सर्वदा भवेयुः।

श्रीकृष्ण! श्रीहरे! सर्वथा रघुनाथस्य मङ्गलं विधेहि।

[ निष्क्रान्ताः सर्वे ]

——

## षष्ठोऽङ्कः

( ततः प्रविशन्ति गोविन्दो महाप्रभुः स्वरूपश्च। )

गोविन्दः। देव ! भवतामादेशश्चेत् किञ्चिच् श्रीपादपद्मे निवेदनीयमास्ते।

महाप्रभुः। गोविन्द ! ब्रूहि।

गोविन्दः। वङ्गदेशात् सद्यः समागतो रघुनाथो दिवसपञ्चकम् अत्र अन्नग्रहणं कृतवान्। षष्ठदिवसात् स जगन्नाथसिंहद्वारे रात्रौ प्रसादार्थिरूपेण दण्डायमानो दृष्टः। लभ्यते चेत् किञ्चित् अश्नाति, अन्यथाभुक्त एव तिष्ठति। चिरं सुखेन लालितपालित इत्थं करोति चेद् अचिरेणास्य स्वास्थ्यहानिः संघटिष्यते न वा ?

स्वरूपः। अत्र महाप्रभुरेव प्रमाणम्।

महाप्रभुः। गोविन्द ! स्वरूप ! रघुनाथः सुष्ठु कृतवान्।

विरागिणा नाम हरेरजस्रं
जप्यं परापेक्षितया न भाव्यम्।
न स्यात् परापेक्षिजनस्य सिद्धि-
रसिध्यतः कृष्णकृपा कुतः स्यात्॥ ६१॥

किञ्च, जीवनं कृष्णनामग्रहणाय ; भजनपरिपक्वताय पुनः प्राणधारणम्।

स्वरूपः। महाप्रभोरुपदेशवाणीं रघुनाथोऽपि शृणोतु। तद् गोविन्द ! तमत्राह्वय। [ गोविन्दो बहिर्गच्छति। ]

[ महाप्रभुमुद्दिश्य ] रघुनाथो भवन्मुखादुपदेशं श्रोतुमिच्छति। किन्तु दैन्यवशाद् विनयवशाच्च भवन्तं साक्षान् न किमपि पृच्छति।

महाप्रभुः। स्वरूप ! अगाधसत्त्वोऽयं रघुनाथो वैष्णवधर्ममहा-महीरुहस्यान्यतम-श्रेष्ठविटपरूपेण चिरं शोभिष्यते।

तस्मात्तवैव हस्ते न्यस्तोऽयं रघुनाथः प्रागेव।
यथोपयुक्ता शिक्षा तस्मै देया त्वया सयत्नेन ॥६२॥

[ ततः प्रविशति गोविन्देन सह रघुनाथः। ]

रघुनाथः। देवद्वयं साष्टाङ्गं वन्दे।

स्वरूपः। रघुनाथ ! महाप्रभोरुपदेशलाभस्तवेप्सित इति हेतोर्महा-प्रभुसकाशे त्वामहमाहूतवान्। ( महाप्रभुमुद्दिश्य ) देव ! रघुनाथस्य कर्तव्यं किं तदसौ श्रोतुमिच्छति भवत्सकाशात्।

महाप्रभुः। तस्य शिक्षणविषये स्वरूप ! त्वमेव प्रमाणम्। सर्वतोभावेनैष तवैव न्यासः। तथापि मन्मुखादेव श्रोतुमिच्छति चेन्निश्चितं मयोपदेशोऽस्मै देयः।

गोविन्दः। देव ! भोजनविषये यद् भवता वक्तुं प्रारभ्यत, तस्योपसंहारः क्रियताम्।

महाप्रभुः। तच्च शृणु। विरागी जिह्वालम्पटो न भवेत्। जिह्वालम्पटश्चतुर्विधप्राकृतरसानां जायते दासः।

वैराग्यं बहुमानपूर्वकमुपासीनेन सिद्धीप्सुना
जिह्वालम्पटता घटेत न यथाधीयेत यत्नस्तथा।
सामग्र्या उदयाच्चतुर्विधरसा ये स्थायिभावे रतौ
जायन्ते रसनापरो न खलु तानप्राकृतान् विन्दते ॥९३॥

स्वरूपः। अतो महाप्रभुणैव रघुनाथ उपदेष्टव्यः।

महाप्रभुः। स्वरूप ! त्वमेव तस्य प्रकृष्ट उपदेष्टा। रघुनाथ ! स्वरूप एव तवोपदेष्टृरूपेण मया निर्दिष्टः। तव साध्यसाधनतत्त्व-

शिक्षाप्यस्य सकाशाद् भविष्यति। ममाप्यज्ञातं जानात्येष स्वरूप-दामोदरस्ते गुरुः।

स्वरूपः। हरे हरे! किमिति मामतिरञ्जनेन वर्णयति देवः। किञ्च,

प्रभो तव मुखाम्बुजाद् विगलितोपदेशामृतं
निपीय चिरमप्यमी यदि न याम तृप्तिं वयम्।
तदत्र नचिरागतस्त्वयि च गाढभक्तिं श्रितः
कथं न तृषितो भवेत्त्वदुपदेशपानाय सः ॥६४॥

महाप्रभुः। स्वरूपदामोदरस्य स्वरूपम् एव स्वयं निगूहनप्रतीकम्। भवतु, मया संक्षेपेण रघुनाथ उपदिश्यते।

[ रघुनाथो महाप्रभुं स्वरूपं च साष्टाङ्गं प्रणमति। ]

महाप्रभुः। रघुनाथ! यन्मयेदानीम् उच्यते यद्यपि तत् त्वम् अनुतिष्ठन्नेव वर्तसे तथापि गुरुमुखाच् श्रवणस्य वैशिष्ट्यमस्तीति मयोपदिश्यसे।

न ग्राम्यवार्णीं शृणुयाः कदाचि-
न्न ग्राम्यवार्तां कथयेः कदाचित्।
विभूषणादावथ भोजनादौ
न चातिलौल्यं कलयेः कदाचित् ॥६५॥

किञ्च—

अमानी मानदो भूत्वा कृष्णनाम सदा जपेः।
राधाकृष्णार्चनं कुर्या मनसा व्रजमण्डले ॥६६॥

रघुनाथः। [ शिरसा प्रणम्य ]

देवस्याननपङ्कजात् समुदितं पीयूषधाराभरं
देवानामपि दुर्लभं परिपिबञ्जातोऽस्मि मृत्युञ्जयः।
नीतः क्वापि विलीनतां भगवता मोहो मदीयो महान्
कल्पिष्ये न पुनर्गृहाय ननु मे संकल्प एव स्थिरः ॥६७॥

[ निष्क्रान्ताः सर्वे ]

———

## सप्तमोऽङ्कः

[ प्रविशतः स्वरूपो महाप्रभुश्च । ]

महाप्रभुः । स्वरूप ! रघुनाथः कीदृश आस्ते ?

स्वरूपः । महाप्रभोः कृपया सर्वं शुभम् । किन्तु नासौ जगन्नाथ-सिंहद्वारे दण्डायमानस्तिष्ठति, मध्याह्ने सत्रं वा गच्छति ।

महाप्रभुः । तेन सुष्ठु आचरितम् । कथं वा प्रार्थी भवेत् ? सिंह-द्वारेऽपेक्षमाणताऽपि परमुखापेक्षिता ।

स्वरूपः । महाप्रभो ! स्नेहातुरेण गोवर्धनदासेन प्रेरितौ द्वौ भृत्यौ कश्चन पाचको ब्राह्मणश्च । तैर्भृशमनुरुद्धोऽपि नासौ तेषां सेवां कथञ्चन गृहीतवान् । भूयस्तैः सह प्रेरिताश्चतुःशतमुद्रा अपि नासौ गृहीतवान्, केवलमष्टाणकमात्रं प्रतिमासं गृह्णाति स्म । किन्तु साम्प्रतं वर्षद्वयानन्तरं नायं तदपि गृह्णाति ।

महाप्रभुः । स्वरूप ! तत्परिमितोऽर्थोऽपि स्वस्य हेतोर्न तेन गृहीत आसीत् । किन्तु मदर्थमेव । तेन स मामभोजयत् । परम् अपि जानासि कथं स तेनार्थेन साम्प्रतं मां न भोजयति ?

स्वरूपः । देव महाप्रभो ! मन्ये तस्य मनोभाव इत्थमेव—विषयिणोऽर्थं गृहीत्वाहं महाप्रभुं सेवे ; तेन महाप्रभोर्मनः सन्तोषं नावाप्नोतीति ।

तथेदमपि तस्य मनोगतमासीदिति मन्ये—

मम प्रतिष्ठैकफलं निमन्त्रणं  
न जायते तृप्तिरनेन हा प्रभोः ।  
मन्ये मनो रञ्जयितुं मम प्रभु-  
र्नोपेक्षते मद्विहितं निमन्त्रणम् ॥६८॥

महाप्रभुः । स्वरूप ! सत्यं ब्रवीमि परमं सुष्ठु समाचरितं रघुनाथेन । रघुनाथो मे परमप्रियः । अन्यथा कथं स मम मनो जानीते । पश्य,

भुञ्जीत चेद्विषयिणां सकृदप्यजान-
न्नन्नं तदैति मन आविलतां नितान्तम् ।
कृष्णस्मृतिर्न पुनराविलचेतसि स्या-
दित्येतदन्नमहितं किल दातृभोक्त्रोः ॥९९॥

स्वरूपः । महाप्रभो ! अतीव दृढसङ्कल्पोऽयं रघुनाथः ! असौ माधुकरीं वृत्तिमपि विहाय मा नाम कस्यचन भोक्तव्यमन्नं तस्योदरं प्रविशत् इत्येवं विचिन्त्य विपणिके विक्षिप्तं कुक्कुरादिभिरप्युपेक्षितं गलितम् अन्नं गृह्यते ।

पश्यतु महाप्रभुः,

राजोचितसुखभोगैराबाल्यं लालितो महता यत्नेन ।
श्रीमान् रघुनाथोऽयं धर्मार्थं किं किं न करोति दुष्करम् ॥१००॥
मा भूदपरस्य हानिरित्येवं मनसि दृढं विभाव्य धीमान् ।
प्राणिभिरनादरहतं पङ्किलमन्नं संगृह्य सेवते सः ॥१०१॥

महाप्रभुः । स्वरूप !

प्राणारामं परमरुचिकरं कायसन्तर्पणं तद्
भक्तं मह्यं प्रवितर रघुणा गृह्यते प्रत्यहं यत् ।
एतत्तुल्यं महिमपुलकितं नास्ति पूतं जगत्यां
यावज्जीवं तदमृतमधुरं नित्यभक्ष्यं ममास्तु ॥१०२॥

अपि च भोः स्वरूप !

भूयोऽपि रघुनाथस्य सुमहद् वैष्णवोचितम् ।
श्रोतुमिच्छामि चरितं तन्मामाख्यातुमर्हसि ॥१०३॥

स्वरूपः । तव प्रत्यक्षार्थमहं गोविन्दसाहाय्यकेन रघुनाथमाह्वयामि ।

[ गोविन्दमाहूय ] गोविन्द ! मद्वचसा रघुनाथमत्रानय ।

महाप्रभुः । तात ! त्वरितं याहि । ( गोविन्दो निष्क्रान्तः । )

स्वरूपः । परिप्रश्नास्तस्य सहस्रशो वर्तन्ते । किन्तु नासौ कदापि त्वत्सकाशं प्रष्टुमागच्छति । कोटीश्वरस्य पुत्रस्याद्यत्वे त्वत्कृपया महाप्रभो ! जीर्णकन्था परिधानम् । सप्तप्रहरा याप्यन्ते नामस्मरणेन ।

आहारनिद्रादिषु चत्वारो दण्डा याप्यन्ते। बहूनि दिनान्याहारो निद्रा च साकल्येन वर्ज्यते। जिह्वालाम्पट्यान्न तेन कदापि भुक्तम्।

[ गोविन्दो रघुनाथेन सह प्रविशति। ]

[ रघुनाथः प्राथम्येन महाप्रभुं ततः स्वरूपञ्च साष्टाङ्गं प्रणमति। ]

महाप्रभुः। रघुनाथ! अहं त्वद्वृत्तं सर्वं ज्ञात्वा सातिशयं प्रीतोऽस्मि। गुरुभक्तिरेव भक्तिमार्गे परमं साधनम्। त्वयि सा महता लावण्येन परिस्फुरिता। अशनवसनादिविषयेऽपि तव वीतस्पृहत्वं वैष्णवानां स्पृहणीयम्।

रघुनाथः। परमपूजनीय देवदेव! भवताम् आशीर्वादानां फलमेतत् सर्वम्। अधमाधमोऽहं न प्रशंसनलेशभाजनम्।

महाप्रभुः। अस्मादेव दीनभावगौरवात् त्वमस्माकं सर्वेषां स्नेह-भाजनमसि। [ स्वरूपमुद्दिश्य ]

स्वरूप! तव स्वरूपमस्मिन्नेव प्रियशिष्ये सुष्ठु संक्रमितं त्वया। एतेन मे महान् हर्षः। रघुनाथाय दास्याम्युपहारम्।

स्वरूपः। महाप्रभोः कृपैवास्माकं बलं, केवलं संबलम्।

महाप्रभुः। [ रघुनाथमुद्दिश्य ] रघुनाथ! अहं वैष्णवप्रवरस्य श्रीशङ्करानन्दसरस्वतीयतेः सकाशाद् वत्सरत्रयात् प्राग् इमां गोवर्धनशिलां गुञ्जामालां च लब्धवान्। ततः प्रभृति गोवर्धन-शिलामिमां साक्षात् कृष्णरूपेण गुञ्जामालाञ्च साक्षाच्छ्रीराधिका-रूपेण पूजितवान्।

साक्षात् कृष्णात्मिका सेयं गोवर्धनशिला शुभा।
श्रीराधारूपिणी चापि गुञ्जामाला मनोहरा।
सेवार्थं ते ददे तुभ्यं पूजाक्रममतः शृणु ॥१०४॥
कुम्भपरिमितं तोयं मञ्जर्यश्चाष्टौ तुलस्याः।
उपचारः सेवायाः कुरु सात्त्विकसेवां शुद्धचेतसा।
मृदुमञ्जरीमुभयतः पत्रद्वयात्मिका मञ्जरी तु सा ॥१०५॥

तन्मत्त एतद्द्वयं गृहाण।

स्वरूपः। रघुनाथ! प्रभुं साष्टाङ्गं प्रणम्य कृपार्हो भव। [रघुनाथस्तथा करोति। महाप्रभुः सस्नेहम् उपहारद्वयं दत्त्वा रघुनाथस्य मस्तके करविलेपनं करोति। ]

स्वरूपः। रघुनाथ!

महाप्रभुसेवितमिदं जाने प्राणेभ्योऽपि प्रियं युगं ते।
स्नेहात्तथापि वदामि भव भाजनं समुचितं दानस्य वत्स ॥१०६॥

किञ्च,

अकिञ्चनेन मयाऽपि शिष्यप्रीत्यै किञ्चन दीयते। गृहाणैतद् वस्त्रखण्डद्वयं श्रीराधाकृष्णयोरुपवेशनपीठं मृत्कुम्भञ्च।

रघुनाथः। परमपूज्य गुरुदेव! गुरोराशीर्वादेन मानवजीवने किं न सम्भवति?

स्वरूपः। महाप्रभोः कृपयेति ब्रूहि।

रघुनाथः। (उभयमुद्दिश्य)

तव गुरोस्तव चापि महागुरो-
रमृतसोदरदृष्टिर्मयि पातिता।
निपतितं जनमद्य भवावटे
करुणया नयतामपुनर्भवम् ॥१०७॥

स्वरूपः। ममाशीर्वादात् त्वम् एकायनस्कन्धी एकान्तिनामेकान्ती भव।

यस्येयं प्रशस्तिः श्रूयते—

ब्राह्मणानां सहस्रेभ्य एकोऽपि सत्रयाजकः।
सत्रयाजिसहस्रेभ्य एको वेदान्तपारगः ॥१०८॥
सर्ववेदान्तिकोटिभ्य एको विष्णुपरायणः।
वैष्णवानां सहस्रेभ्य एकान्त्येको विशिष्यते ॥१०९

इति। ईदृशैकान्तिषु त्वं गरिष्ठो भव।

महाप्रभुः। रघुनाथ! ममाप्येष आशीर्वादः—एतद्द्वयस्य सात्त्विकपूजनेन त्वमचिरादेव श्रीकृष्णप्रेमधनं लभस्व।

रघुनाथः। अहो मे आनन्दोल्लासः। महाप्रभोरर्चनोपकरणं मम हस्ते समागतम्। कथं न्वेतत् सौभाग्यम्? शिला मे गोवर्धन-विहारिणः, गुञ्जा च कृष्णमनोहारिण्याः श्रीराधिकायाः स्वकीयं रूपम्। अहो! आनन्देन हृदयं मे मत्तमयूर इव नृत्यति। काचनापूर्वानु-भूतिर्मां विवशीकरोति।

देवदेवौ! क्षमेथां माम्, क्षमेथां दीनदासं रघुनाथम्।

स्वरूपः। अहो आनन्दो मे यत् स्वयं महाभावमयी वैराग्यविद्यामयी वार्षभानव्येनमधिकरोति। रघुनाथ! त्वं वैराग्यविद्याया वृन्दावने-श्वर्या भव द्वितीयं वपुः। भव परवैराग्यविद्यावारिधौ श्रीराधाकुण्डे नित्यस्नातः; वैराग्ययुग्भक्तिरसामृतसिन्धौ नित्याभिषिक्तः; वैराग्य-विप्रलम्भनित्यविभावितश्च। भव सर्वकालेषु वैष्णवानाम् अनन्य-शरणम्।

[ रघुनाथः शनैः शनैर्दक्षिणकरं संप्रसार्य गुरोश्चरणं स्पृशति; महाप्रभोश्चरणाय च हस्तं प्रसारयति किन्तु मूर्च्छां तमापद्यत। ]

महाप्रभुः। श्रीकृष्णस्येच्छा विजयताम्।

( महाप्रभुर्गायन् निष्क्रामति )

जलदश्यामं नयनारामं वन्दे नन्दनन्दनम्।<br>
पीतसुवसनं स्मितसुशोभनं चारुचन्दनचर्चनम्।<br>
विश्ववाञ्छनं वत्सलाञ्छनं वनमालाविभूषणम्।<br>
मणिमनोहरं मधुमञ्जीरं मञ्जुमुरलीमोहनम्॥११०॥

[ सर्वे निष्क्रान्ताः ]

—·—

# अष्टमोऽङ्कः

स्थानम् —गोवर्धनदासस्य पुरीस्थ-गृहप्राङ्गणम्।

[ पुरीधाम्नि शोकविह्वला रघुनाथजननी ]

( प्रविशति बलरामाचार्यः )

बलरामाचार्यः। अहो दौर्भाग्यम् !

सिद्धार्थे नृपनन्दने विधिवशात् संन्यासितां संश्रिते
क्रन्दन्ती किल दृष्टिशक्तिरहिता जाता पुरा गौतमी।
अद्येयं रघुनाथदास-जननी गोवर्धनार्धाङ्गिनी
संजाता चिररोदनाद् गतमतिः पुत्रस्य सन्न्यासतः ॥१११

गोवर्धनराजपरिवारस्यैकातपत्रा कर्त्री दयनीयावस्थाम् अद्य प्राप्ता। ( पादशब्दश्रवणमभिनीय ) कोऽयम् आयाति ?

[ ततः प्रविशत्यनुसन्धानतत्परा रघुनाथपत्नी। ]

रघुनाथपत्नी। अहो कष्टम् !

सन्न्यासिनः प्रियतमस्य वियोगदुःखं
यावन्ममोपशमनं न हि याति तावत्।
आराधनीयचरणा जननीव सेयं
श्वश्रूर्गता बत मनोविकृतिं दुरन्ताम् ॥११२॥

तदिदानीं किं करोमि मन्दभाग्या ? [ पुरतो दृष्ट्वा ] अये अत्र भवान् बलरामाचार्यः ! यावदेनम् उपसर्पामि। ( समीपं गत्वा ) आचार्यदेव ! श्वश्रूमाता मे हठात् पुत्र पुत्र इति करुणं लपन्ती बहिर्गता। नाहं तां कुत्रापि पश्यामि। कृपया भृत्यैः सह भवान् अनुसन्धानतत्परो भवतु।

बलरामाचार्यः। वधूमातः ! अदूरात् पादशब्द इव श्रूयते। अये ! अत्रैव समागच्छति रघुनाथजननी। भोः कष्टम् !—

किं नाम दुर्लभं तद्धि वस्तु जीवनचालकम्।
यद्विलोपान्मनुष्योऽसौ जीवितोऽपि मृतो ध्रुवम् ॥११३॥

[ वधूमातरमुद्दिश्य ] त्वं प्राग्रेसरी भव। मातरं समाश्वासय।

( प्रविशति गोवर्धनपत्नी। )

गोवर्धनपत्नी। कुत्र मे पुत्रो रघुनाथः? तस्मिन् दिनेऽहं जगन्नाथ-मन्दिरसिंहद्वारे तं दण्डायमानम् अपश्यम्। अहो इयं वधूमाता, श्वशुरस्य परमादरिणी चक्षुर्मणिरूपिणी वधूमाता मे सर्वेषाम् अनिष्टानां मूल-कारणम्। तस्या एव प्ररोचनायाः फलतः पुत्रो मे सन्न्यासी जातः।

रघुनाथपत्नी। मातः! मातः! मा करुणपरिदेवनं कार्षीः। जनाकीर्णमिदं पुरुषोत्तमधाम। मुहूर्तेन भविष्यति विशालो जनसमागमः। कृपया मातः! आत्मप्रशमनतत्परा भव।

गोवर्धनपत्नी। अयि चरमदुष्कृतकारिणि! दूरं याहि। मत्-समक्षतो दूरं याहि।

बलरामाचार्यः। रघुनाथमातः! समाश्वसिहि।

मातर्निवेशय मतिं जगतामधीशे
स्निग्धेन पश्य नयनेन वधूं सुशीलाम्।
श्रीमन्महाप्रभुसमादृतसन्ततेस्त्वं
मातासि धैर्यमवलम्ब्य भव प्रसन्ना ॥११४

रघुनाथपत्नी।

पूर्वं या मे जननी चिरादवर्तत साधन-भजनव्रतिनी।
सेदृगवस्था जाता देव जगन्नाथ सान्त्वय मातृहृदयम् ॥११५॥

बलरामाचार्यः।

मातर्भगवत्कृपया मनोरथः को न सिध्यति जगति जन्तोः।
मन्ये ते प्रार्थनया नीरुगचिराद् भविता जननी यथा प्राक् ॥११६

गोवर्धनपत्नी। कथमहमत्रानीता? कुत्र वा मे वधूमाता? कियद्दूरे वा सप्तग्रामः? कुत्र वा मे पतिः? कुत्र वा मे जन्मजन्मान्तर-सर्व-साधनाफलस्वरूपः प्राणप्रियतमः पुत्रो रघुनाथः?

रघुनाथपत्नी। इयमहमस्मि। मातः! भगवान् परमकरुणा-शीलः। मा कुरु चिन्ताम्। सन्न्यासिनः पुत्रस्य मातैव जगति जगज्जननीस्वरूपतां पूर्णत्वेनार्हति।

बलरामाचार्यः। वधूमातः! तव श्वश्रूमातुस्तुलनं नासीत्।

रघुनाथपत्नी। देव! अद्याऽपि मे मातुस्तुलनं कुतः? एकमात्र-तनयविरहाज्जननी मे दुःखदीर्णा कथमपि जीवितं धारयति। अस्याः स्नेहः पुत्रं पुत्रवधूं प्रति च समान एव।

बलरामाचार्यः। तत्र मातुश्चित्तक्षोभवेगप्रशमनाय भगवत्पादपद्मे स्तुतिं निवेदय। कृपालुदेवता सर्वं मङ्गलमयं विधास्यति।

रघुनाथपत्नी।

जगन्नाथ! श्वश्रूर्मम विगलदश्रूत्तरमुखी
सुदूरादायाता सुतविरहभीताकुलमतिः।
त्वमस्या दुःखिन्याः प्रियतमजनन्याः करुणया
मनो मोहान्मुक्तं तव चरणसक्तं कुरु विभो ॥११७॥

गोवर्धनपत्नी। ( शान्तिमवाप्य ) अहो पतिप्राणा मे वधूमाता! सा मदर्थं भृशं दुःखं भजते। मातः! मा त्वं दुःखिता भूः। तव प्रार्थनया सर्वं दुःखं मेऽपसृतमिव।

रघुनाथपत्नी। नहि नहि मातः! भगवान् परमकरुणामयः। तस्य कृपा हि नः परमं सम्बलम्।

बलरामाचार्यः। विभुर्विजयताम्। सतीलक्ष्मीर्विजयताम्।

[ निष्क्रान्तो बलरामाचार्यः। ]

[ ततः प्रविशति शोकव्याकुलितहृदयो गोवर्धनदासः। ]

गोवर्धनदासः। [ पुत्रवधूमुद्दिश्य ] मातः! चिरकल्याणि! त्वदर्थमेव मम मनो दूयते। नक्तंदिवं तनयविरहोन्मत्ताया मातुः कुते खिद्यसे, न कुतोऽपि शान्तिलेशस्त्वामङ्गीकरोति। अहो कष्टम्!

रघुनाथपत्नीं। पितः! सत्यमेव न मे किमपि दुःखम्। परम-स्नेहमयी मम जननी पुत्रविरहव्याकुला मम जननी जगति सर्वथा तुलनारहिता।

गोवर्धनदासः। वधूमातः! सत्यमेव तव श्वश्रूमातुस्तुलनं नास्ति। दिवसयामिन्यौ सायं प्रातरहर्निशं हरिसेवापरायणाया अस्याः कथमीदृश्यवस्था जाता? चरमपरीक्षास्थानमिदं जगत्। कार्य-कारणसमवायो बहुषु क्षेत्रेषु केवलमनुभवसिद्ध एव।

मातः! एकदा किं किं न ममासीत्?

गृहालोकः पुत्रस्तुलनलवहीना च गृहिणी
स्नुषा च त्वं स्नेहोत्तरलहृदया बान्धवजने।
असीमं चैश्वर्यं वद मम किमासीन्न हि पुरा
तदेतन्मे पर्याकुलमकृत दग्धा विधिलिपिः॥११८॥

रघुनाथपत्नी। पितः! भवादृशस्य महात्मनो न कदाचन भविष्यति दुःखं चिरस्थायि। भवादृशा एव जगतः शिक्षास्थानम्।

गोवर्धनदासः। सत्यमेव, किं वा मे दुःखं यस्यास्त ईदृशी पुत्रवधूः। पुत्रशतादपि गरीयसी ह्येकाकिनी मे वधूमाता। मातृहृदयमहिम्ना जगत् सर्वं परिपालय पोषय मे जननि! यथेमं वृद्धसन्तानं, तथा तरुणं सन्तानगणमपि।

रघुनाथपत्नी। विजयतां पिता, माता मे शान्तिं लभताम्।

गोवर्धनदासः। अक्षय्यं ते कल्याणं भूयात्।

गोवर्धनपत्नी। मातस्त्वमेव सर्वशान्तिस्थानमावयोः।

[ सर्वे निष्क्रान्ताः ]

——

# नवमोऽङ्कः

[ प्रविशन्ति श्रीसनातनः, श्रीरूपः, श्रीरघुनाथः,
श्रीजीवः श्रीगोपालभट्टश्च । ]

श्रीसनातनः । ( रघुनाथमुद्दिश्य ) अतस्त्वया न गृहाद्बहिर्यामिनो-यापनं करणीयम् । दृष्टं तावन्मया व्याघ्र एकोऽद्य त्वामुपेक्ष्य काननं प्राविक्षदिति ।

श्रीरूपः । आर्य !

महाप्रभोरन्तिक एव योऽयं
वर्षाण्युषित्वा खलु षोडशापि ।
प्राप्तोऽत्र वाञ्छन् भृगुपातमृत्युं
व्याघ्रात् कुतस्तस्य भयं मुमूर्षोः ॥११९॥

रघुनाथः ।

श्रीमन्तौ कृपया नितान्तगलितौ सोदर्यमर्यादया
निःसीमप्रणयस्पृशा यदिह मां संपश्यतश्चक्षुषा ।
नीतं तेन कृतार्थतां विगणयन्नात्मानमेषोऽधमः
प्राणान् पापपरिप्लुतानपि चिरान्न त्यक्तुमिच्छाम्यहम् ॥१२०॥

गोपालभट्टः । अहो दौर्भाग्यं, प्रायेण समसमय एव महाप्रभुस्तस्य स्वरूपं स्वरूप-दामोदरश्च महातिरोधानं प्रापतुः । तथापि तयोरेवाशीर्वाद-बलात् परमसौभाग्येन वयं रघुनाथं प्राप्तवन्तः—यन्मुखान् महाप्रभो-र्गूढ-लीलाविषयकं सर्वं परमप्रामाणिकरूपेण लभामहे ।

श्रीजीवः । ( सनातनमुद्दिश्य ) ज्येष्ठतात ! एनं प्रति महाप्रभोः कृपाऽसाधारणी । महाप्रभुः स्वार्चित-गोवर्धनशिला-गुञ्जाहारावस्मै दत्तवान् । अस्य हेतोः सादरं महाप्रभुः कर्दमाक्तं पर्युषितमन्नम् अमृतवद् उपादेयमित्युद्घोष्य भक्षितवान् ।

सनातनः । [ स्वगतम् ] आबाल्यं कठोरतपश्चरणशीलोऽयं वैष्णवानामादर्शतामुपगतः । एष सर्वथाऽस्माकं भविष्याशास्थलम् ।

[ रघुनाथमुद्दिश्य ] प्रिय रघुनाथ !

महाप्रभुरसम्मतः सततमङ्गनादर्शने
विहाय जननीसमाः कतिचिदङ्ग सीतादिकाः ।
कथं स शिखिसोदरां स्थिरमतिः स्त्रियं माधवीं
स्वके प्रणयभाजने न्यधित सार्धपात्रत्रये ? ॥१२१॥

एतद्विषयकवृत्तान्तं श्रोतुं विद्यतेऽस्माकं महत् कौतूहलम् । तदनेनास्माकं श्रोत्रविनोदनं ज्ञानविवर्धनञ्च कुरु । यतः,

त्वत्तोऽन्यो न पुमानत्र विशेषज्ञो विलोक्यते ।
वर्षषोडशकं यत् त्वं साहचर्ये प्रभोरगाः ॥१२२॥

रघुनाथः । परमपूजनीया भक्तबन्धवो गुरुजनाश्च सव ! कठिनोऽयं प्रश्नः । तथापि यथाशक्ति समुत्तरं दास्यामि । जानन्ति किल भवन्तो भक्तानां मानवर्धनविषये महाप्रभोस्तुलनं क्वापि नास्तीति ।

यदा सन्न्यासमवलम्ब्य महाप्रभुरुडिष्यादेशं ययौ तस्थौ च वासुदेवसार्वभौमस्य गृहे, तदा महाप्रभुदर्शनार्थं ययुर्जगन्नाथमन्दिरस्येतिहासलेखकः शिखिमाइतिस्तस्य भ्राता मुरारिर्भगिनी च माधवी दासी । ततश्च—

आलोक्यव मुरारिरस्य भगिनी श्रीमाधवी च प्रभुं
साक्षाद् भागवतोऽवतार इति तं सञ्चिन्तयामासतुः ।
प्राणांश्चार्पयतां प्रभोश्चरणयोः किन्त्वेतयोः सोदरोऽ-
श्रद्धालुः शिखिमाय्तिरत्र सुतरां प्राकाशयत् संशयम् ॥१२३॥

सनातनः । ततः, ततः ।

रघुनाथः । कालेनेत्थं विसंवादो ववृधे यच्छिखिमाइतिना सह मुरारिमाइतेस्तस्य भगिन्याश्च वाक्यालापोऽपि नासीत् । किन्तु महाप्रभोः कृपया शिखिमाइतेः सम्यग्बोधो जागर्ति स्म । तत्र माधवीदास्या भक्तिः प्रधानं कारणम् । शिखिः स्वयमेव प्राथम्येन स्वीय-

प्रबोधसमये माधवीं महाप्रभोर्निजजनरूपेण घोषयामास। महाप्रभुः स्वयञ्चैनां श्रीराधाया गणरूपेण स्वीचकार। फलतः,

आचारशुद्धा तपसा समुज्ज्वला
पूतान्तरा वैष्णवभक्तिमेदुरा।
भूयस्तया भक्तिबलस्य माधवी
दासी गतेयं प्रियपात्रतां प्रभोः ॥१२४॥

एषा "पुरुषोत्तमदेवाख्य" संस्कृतनाटकस्य रचयित्र्यपि।

गोपालभट्टः। महाप्रभोर्महापण्डितस्य माधवीदास्याः शिक्षा-दीक्षादिकं प्रति समादरः परमसमीचीन एव। किन्तु कथं पात्रपरिगणने माधव्या अर्धपात्रत्वम्? तद्विषयकं कारणं ब्रूहि।

रघुनाथदासः। पूज्यपादा गोस्वामिनः! महाप्रभोर्भाषणस्याशयमित्थमेवाहं मन्ये। यतः स्वरूपदामोदरो व्रजलीलाया ललिता, रायरामानन्दश्च विशाखा, शिखिमाइतिश्च रागलेखा, माधवीदासी च कलाकेलीति,

अत्रावतारेऽप्यत एव कारणात्
तेषां गणेया ध्रुवमेव पात्रता।
आपेक्षिकन्यूनतया तु माधवी
दासी प्रणीता प्रभुणार्धपात्रताम् ॥१२५॥

नात्र नारीं प्रति न्यूनताबुद्धिरारोपणीया।
वस्तुगत्यापि,

महाप्रभुसमः क्वचिन्न हि बभूव भावी न वा
न चास्ति जगतीतलेऽनुपधि-मातृभक्तः पुमान्।
स एष जननीसमा निखिलयोषितो मन्यते
यदत्र गुरुलाघवं तदवधत्त वैयक्तिकम् ॥१२६॥

श्रीजीवः। इत्थं भवद्भिर्महाप्रभुसम्पर्कि समालोचनं सर्वदा क्रियते चेन् महान् अस्माकं उपकारो भविष्यति।

श्रीसनातनः । निश्चितमेव रघुनाथः सर्वेषाम् अस्माकं हितसाधने दत्तचित्तो भविष्यति ।

रघुनाथः । महाप्रभोगूढचरितालोचने का मे शक्तिः । तथापि या या घटना मे प्रत्यक्षास्तास्ता भवत्सकाशे उपस्थापयितुं सुतरां वाञ्छामि ।

सर्वे । तेनैव गुरु प्रयोजनम् अस्माकम् ।

[ निष्क्रान्ताः सर्वे ]

———

## दशमोऽङ्कः

[ ततः प्रविशन्ति रूप-सनातन-रघुनाथभट्ट-गोस्वामिनः ]

रूपः । अहो ! कठोरश्रमसहिष्णुरयं दृढप्रतिज्ञो रघुनाथः ।

स्वरूपपरिदर्शितां सरणिमेष भक्त्या श्रयन्
महाप्रभुपदान्तिकेऽवसदनेककालं यतः ।
तदस्य नियमव्रतं यदपि हन्त नासङ्गतं
तथापि जगतीदृशं नियमपालनं दुर्लभम् ॥१२७॥

अपि च—

सान्निध्येन महाप्रभोरगमयद् दीर्घाणि वर्षाणि यो
मार्गादेशगुरुश्च यस्य ववृते श्रीमान् स्वरूपः स्वयम् ।
कामं चित्रमिदं न तस्य चरिते कृच्छ्रव्रताराधनं
किन्त्वन्यो नियमं तथातिकठिनं नो पालयेद् भूतले ॥१२८॥

सनातनः । दैन्यप्रकटने त्यागविषये चास्य तुलनं नासीन् नास्ति न भविष्यति वा ।

पलमपि जलमेष नो पीयते नान्नमत्त्यल्पकं
द्विपलपरिमितं पिबत्यन्वहं तक्रमात्रं व्रती ।
स्मरति परमसौ स्वरूपं प्रभुञ्चातिवेलं रुदन्
श्लथयति न किलाल्पमात्रं व्रताचारमव्याकुलः ॥१२९॥

रघुनाथभट्टः । आर्य ! अस्मिन् परोक्तविषये विस्तरतः श्रोतुमिच्छामि ।

सनातनः । किं विस्तरेण । भक्ष्यवस्तुमात्रमसौ त्यजति । अपरञ्च,

दण्डवत् सहस्रमेष सम्यगातनोत्यहर्निशं करोति
लक्षसंख्यनामधेयसंजपं हरेरनन्यमानसेन ।
श्याम-राधयोः समर्चनं हृदा प्रसाधयत्युदित्वराश्रु
याममादधाति चिन्तनं महाप्रभोरिति क्षिणोत्यहानि ॥ १३०

अपि च,

प्रतिदिनमवगाह्य स्नाति राधाख्यकुण्डे
नमति विततभक्त्या वैष्णवान् द्वे सहस्रे ।
इति नियमपरोऽयं सार्धसप्तैव यामान्
गमयति, शयनेन त्वर्धयामं कदाचित् ॥१३१॥

रघुनाथभट्टः । अहो ! कठोरव्रतं रघुनाथस्य । अहो कोटीश्वरपुत्रस्य महामहीयांस्त्यागः । कुत्र वा गताऽप्सरःसमा स्त्री, इन्द्रसमं वैश्वर्यम् ? क्व वा सर्वैश्वर्यविनिमयेन लालनपालनम् एकमात्रपुत्रस्य हिरण्यगोवर्धनदासयोः, कुत्र वा गोवर्धनकान्तारे राधाकुण्डवृक्षतले वा दिवसयामिनीयापनम् ?

अथवा, एषैव गतिः श्रीकृष्णचैतन्योन्मादस्य ।

भवतु तन् नाम । महाप्रभोः क्रोडाश्रयिणोऽस्य परिचितिरासीत् "स्वरूपस्य रघु" रिति, साम्प्रतं वृन्दावनवासिनोऽस्य नाम भवतु "दासगोस्वामिप्रभु" रिति ।

सनातनः । भट्टगोस्वामिन् ! सुष्ठु भणितं भवता । अस्माकं वृन्दावनेऽनेन प्रियनाम्नैषोऽभिहितो भवतु । अन्यच्च वैशिष्ट्यमस्य वार्षभानवीपूजनम् ।

नूनं प्रभुरदसीयामवेक्ष्य निरतिशयरतिं राधायाम् ।
सह गोवर्धनशिलया गुञ्जाहारं ददौ रघुनाथाय ॥ १३२॥

तत्रापि, गुञ्जाहारं प्रत्येवास्य विशेषाकर्षणम्। रागानुगा भक्तिरस्य विजयताम्।

श्रीरूपः। अहो! - तस्मादेष श्यामकुण्डं विहाय राधाकुण्डे वसति। अत एवासीत् प्रकृष्टखननेन राधाकुण्डप्रकाशनायास्य तादृश्याकूतिः, यदर्थं प्रचुरार्थ-प्रणामिप्रदानकारिणो बदरीनारायणादेशक्रमेणारिष्टग्राम-वासिनः श्रेष्ठिनो वैष्णववर्यस्य श्रीरघुनाथपादप्रान्त आगमनम्। भगवत्कृष्णचैतन्याविष्कृतराधाश्यामकुण्डद्वयस्यैव प्रकटप्रकाशनञ्च। अहो धनदानाय व्याकुलता तस्य श्रेष्ठिवर्यस्य!

देवादेशवशीकृतेन बदरीतीर्थात् तदोपेयुषा
काकूक्त्याऽनुनयो व्यधायि सविधे ह्येवं रघोः श्रेष्ठिना।
दीनोऽहं प्रहितः परं बदरिकानारायणेन स्वयं
तद् देवेन दयावता धनमिदं मद् गृह्यतां गृह्यताम् ॥१३३॥

रघुनाथभट्टः। किन्तु श्रीरूपगोस्वामिवर! कथं रघुनाथस्या-सम्मतिरासीत् तदर्थग्रहणे?

श्रीरूपः। जानीहि, अस्य स्वभाव ईदृश एव। तत्रापि,

वैराग्यं सुचिरात् समाश्रितवतो दीनस्य मे वैष्णव-
स्यार्थापेक्षिणि कर्मणीह मनसो युक्ता प्रवृत्तिः कथम्?
जाने श्रीरघुनाथदाससुकृती मत्वैवमात्मन्यहो
प्रत्याचष्ट पुरा धनानि धनिनो दातुं स्वयं वाञ्छतः ॥१३४॥

सनातनः। ततः स्वयं भगवता नारायणेन संप्रेषितोऽयं जन इति ज्ञात्वा तस्यार्थग्रहणे सम्मतिरासीत्। तेन तत आदेशो दत्तः कुण्डद्वय-पङ्कोद्धारसेवायै।

रघुनाथभट्टः। आर्य गोस्वामिप्रभो! खननसमये श्यामकुण्डस्य वक्रत्वे कारणं किम्?

सनातनः। श्यामकुण्डे कालवशात् कश्चन प्रकाण्डो वृक्ष उद्भूतः तस्य चोच्छेदमन्तरेण खननात् कुण्डं तदसमकोणमीषद् वक्राकृति बभूव। वृक्षस्य तस्यानुच्छेदे कारणञ्चेत्थम्—

प्राग्यामिन्यां खननदिवसाच्छ्यामकुण्डस्य तस्य
प्रत्यक्षोऽभूत् सपदि रघुनाथस्य भीमाग्रजन्मा ।
"वासं कुर्मो वयमिह तरौ भ्रातरः पञ्च नित्य-"
मित्येवं सोऽवददपि तदा तं तरुं छेत्तुकामम् ॥१३५॥

ततश्च

दूरे सन्तु जगद्वरेण्यचरणास्ते पाण्डवा भ्रातरः
कोऽपि स्यादनिकेतनो यदि पुनः प्राणीति शङ्काकुलः ।
दास-श्रीरघुनाथ एष सदयस्तं शाखिनं नाच्छिनत्
किञ्चित्कुञ्चितकायकं समभवत्तच्छ्यामकुण्डं ततः ॥१३६

श्रीरूपः । सर्वत्रैव महामाहात्म्यं रघुनाथस्य । जीवनयापने, कर्म-साधने, भक्तिसाधने च ।

श्रीसनातनः । कथं न ब्रवीषि, ज्ञानसाधनेऽपि ।

श्रीरूपः । आर्य ! तस्मिन् विषये भवान् एव प्रमाणम् । विवृणोतु भवान् ।

श्रीसनातनः । शृणुत । कवित्वशक्तिरस्य सर्वप्रशंसनयोग्या । अस्य "स्तवावली" भविष्यति चिराय विश्वभक्तवन्दनीया । श्रीरूप ! अपि स्मरसि नव-नव-प्रज्ञोन्मेषणेऽस्य कीदृश्यनुरक्तिरुत्कण्ठा च ?

रघुनाथभट्टः । देव ! ब्रूहि ; ब्रूहि ।

सनातनः । ( रूपम् अङ्गुल्या निर्दिश्य )

अनेन खलु निर्मिते ललितमाधवे नाटके
सुखोर्मिशतसङ्कुलं हृदयमस्य जातं तदा ।
कदाप्युरसि धारयंस्तदथ दूरतः स्थापयन्
विलोक्य वरपुस्तकं व्यसृजदस्रमुत्कण्ठया ॥१३७॥

भट्टगोस्वामिन् ! ग्रन्थेऽस्मिन् तथास्य प्रेमातिशयो जातो येन संशोधनार्थमपि रघुनाथस्तं ग्रन्थं हस्तान्तरितीकर्तुं नैच्छत् ।

रघुनाथभट्टः । अहो ! अपूर्वप्रेमासक्तिर्दास-गोस्वामिप्रभोः । तर्हि केनोपायेन श्रीरूपेण संशोधनार्थं प्राप्तोऽसौ ग्रन्थः ।

सनातनः। तदर्थं भूयोऽचिरेण श्रीरूपेण लिखितासीत् 'दानकेलि-कौमुदी', तं ग्रन्थं प्राप्य रघुनाथो "ललितमाधव" श्रीरूपहस्तेऽददात्।

श्रीरूपः। सत्यं रघुनाथोऽशेषप्रेमभाण्डागारम्; तत्र स्वार्थस्य लेशोऽपि नास्ति, केवलम् अहेतुकप्रेमधनम्।

रघुनाथभट्टः। धन्या वयं कलियुगेऽपि यदीदृशस्य
श्रीमत्प्रभोः सुचिरसङ्गसुखेश्वरस्य।
दीनस्य विश्वसुहृदो रघुनाथदास-
गोस्वामिनः सहचरत्वमवाप्तवन्तः ॥१३८

श्रीजीवः कुत्रास्ते? गोपालभट्टगोस्वामी वा? निश्चितं तौ द्वौ रघुनाथदासगोस्वामिना सह वैष्णवदर्शनस्मृतिशास्त्राणि पर्यालोचयतः। विजयतां सर्वाश्रयो महाप्रभुः।

[ सर्वे निष्क्रान्ताः ]

———

# एकादशोऽङ्कः

[ ततः प्रविशति श्रीजीव-कृष्णदास-कविराज-
समन्वितो रघुनाथः । ]

रघुनाथः । अहो कालेन महातिरोधानमाप्तौ मे परमसुहृदौ श्रीरूप-सनातनगोस्वामिप्रवरौ भ्रातरौ । ततः प्रभृति

राधाकुण्डं व्याघ्रतुण्डायते मे
नागप्रख्यो भाति गोवर्धनागः ।
वृन्दारण्यं शून्यमाभाति सर्वं
प्राणाः प्राग्वत् किन्तु देहे ध्रियन्ते ॥१३९॥

अथवा प्राणानां को दोषः ? विधात्रा स्वेच्छया ते वज्रसारैर्निर्मिताः । नाहं जीवामि चेत् प्रकटदुर्विषह-दुःखभारं को वा वहतु ?

अहो कष्टम् !

पूर्वं प्रभु-स्वरूपौ ततो गतौ रूप-सनातनौ ।
अधमं मामधिकृत्य विधातृपुरुषं निराकुलं मन्ये ॥१४०॥

इत्थं प्रयोजनसमुदयैर्विरहितोऽपि जीवामि । दन्तैस्तृणं धृत्वा केवलं याचे—श्रीगान्धर्वा स्वपदनलिनान्तं मां नयतु । अहं श्रीकृष्ण-समन्वितां राधां याचे । तस्या दर्शनार्थं प्रयोजने सत्यहं द्वारकापुरी-मपि मानसगरुडेन उड्डीयापि गमिष्यामि । किन्तु दृढेयं मतिः ।—

"अनादृत्योद्गीतामपि मुनिगणैर्वैणिकमुखैः
प्रवीणां गान्धर्वामपि च निगमैस्तत्प्रियतमाम् ।
य एकं गोविन्दं भजति कपटी दाम्भिकतया
तदभ्यर्णे शीर्णे क्षणमपि न यामि व्रतमिदम् ॥"

कृष्णदासकविराजः । देव दासगोस्वामिप्रभो ! कथं भवता वार्षभानवीपूजा गरिष्ठा मन्यते ? केवलगोविन्दभजना भवते न रोचते ?

रघुनाथदासः । वत्स ! मातृमुखी साधना प्राथम्येन महाप्रभोरपि । श्रीराधिकाया लीलाया रसास्वादनार्थमेव महाप्रभोर्गौरलीलावतार इति न कश्चन सन्देहः । मत्प्रभुणा श्रीस्वरूपदामोदरेण कथितम् —

"राधाकृष्णप्रणयविकृतिर्ह्लादिनी शक्तिरस्मा-
देकात्मानावपि भुवि पुरा देहभेदं गतौ तौ ।
चैतन्याख्यं प्रकटमधुना तद्द्वयञ्चैक्यमाप्तं
राधाभावद्युतिसुवलितं नौमि कृष्णस्वरूपम् ॥" इति ।

वस्तुतस्तद्रसास्वादनप्रकर्षसौकर्यार्थं स्वीयनीलवर्णं परित्यज्य श्रीराधिकाया गौरवर्णमपि महाप्रभुर्जग्राह । तथा सति गुरुपरम्परयैव वयं राधाभावभाविनः ।

श्रीजीवः । अप्येतदेकमेव कारणं प्रभो !

रघुनाथः । भूयोऽपि पश्य, मातुर्जागतरूपमपि तुलनामुखेन पश्य । पिता कठोरो माता सुकोमला ; पिता प्रज्ञागम्भीरो माता स्नेहसुरुचिरा ; पिता बहुभ्य इतस्ततो विचरति, माता केवलं पुत्र-कन्याभ्यो गृहान्तस्तिष्ठति—सन्तानं विहाय निमेषाय क्रन्दनशब्दा-गमबहिर्भूतस्थानेऽपि न गच्छति । फलतो मातुर्हृदयमाधाय श्रीकृष्णः सर्वान् रक्षितुं प्रीणयितुञ्च यतते । तस्मान्मे मातृसाधने मती रतिः, मातृसाधनैव मे परा गतिः ।

श्रीजीवः । अस्माकं परं सौभाग्यं यद् भवत्सकाशे अद्यावधी-दृशीम् अमृतमयीं कथां वयं श्रोतुं पारयामः ।

तथाप्येषा चिन्ता नः पीडयत्येव—

राजन्तां "स्तवमाल"या विलसिताः पीयूषयूषोपमा-
स्त्व"न्मुक्ताचरिता"दि-पुस्तकचयाः कामं गभीरार्थकाः ।
किन्त्वेतामधरीकृतामृतधुरां कान्तोपदेशावलीं
रक्षिष्यन्ति परम्परागततया के वोत्तरेषां कृते ॥१४१॥

रघुनाथः। मम त्वत्र कापि चिन्ता नास्ति। कुतः—

आयुष्मन्तौ स्नेहसर्वस्वभूतौ
श्रीजीव-श्रीकृष्णदासौ सुवृत्तौ।
दायादौ स्तो यस्य का तस्य चिन्ता
तौ रक्षेतां सम्प्रदायं मदीयम् ॥१४२॥

अहं पुनः केवलमेतदर्थये
धामोत्तमेऽस्मिन् विमले व्रजाजिरे।
श्रीराधिकासाधकयोः पुरो हि वां
निमीलयेयं नयने चिराय मे ॥१४३॥

अहो! कृष्णदास! ननु श्रीजीव! पश्य पश्य श्रीगौराङ्गो मां भूयोऽपि पर्याकुलयति।

"महासम्पद्दावादपि पतितमुद्धृत्य कृपया
स्वरूपे यः स्वीये कुजनमपि मां न्यस्य मुदितः।
उरोगुञ्जाहारं प्रियमपि च गोवर्धनशिलां
ददौ मे गौराङ्गो हृदय उदयन्मां मदयति॥"

[ इति मूर्च्छति।]

श्रीजीवः। अहो कष्टं रघुनाथदासप्रभोः! मातर्गान्धर्विके! एनं ज्ञानलोकं पुनरागमय। भूयोऽपि अधममिमं जनं पितृहीनं मा कुरु।

रघुनाथदासः। (पुनः संज्ञामुपाश्रित्य) साधु श्रीजीव! साधु, मातृनाम कुरु। मातरं प्रणमामि।

श्रीजीव! श्रीकृष्णदास! अन्तिमसमये ममैतौ द्वावभिलाषौ भवद्भ्यां पूरणीयाविति प्रार्थये।

गोवर्धनाभिधशिलां मम जीवनान्ते
गोस्वामिनं गमयतं कृतिलोकनाथम्।
किञ्चाग्रतो हि भवतोः सरसि प्रिये मे
जह्यामसून् गुरुभरान् बहुवासनाभिः॥ १४४॥

श्रीजीवः । किन्तु भवन्तं विहाय कथं वा वयं जीवितं धारयामः । तादृशं दौर्भाग्यं सर्वथाऽस्माकं दूरत आस्ताम् । अन्ततो वर्षशतं भवतां परमायुः स्यात् ।

रघुनाथः । नवतिवर्षवयस्कस्य भूयोऽपि दीर्घतरं जीवनं मे ?

[ सर्वे निष्क्रान्ताः । ]

---

## द्वादशोऽङ्कः

[ प्रविशतो रघुनाथः कृष्णदासश्च । ]

कृष्णदासः । [ त्वरितं प्रविश्य ] देव देव ! पश्यतु भवान्, इत एवागच्छति महासौभाग्यादद्य राढैकचक्राग्रामतो जननी श्रीजाह्नवीदेवी ।

( प्रविशति जाह्नवीदेवी । )

रघुनाथः । ( साष्टाङ्गं प्रणिपत्य )

यो जग्राह तनूमकारणकृपादानोत्सुको भूतले
नित्यानन्दमहाप्रभुर्हलभृता तुल्यः प्रभोरग्रजः ।
धन्यं सोऽपि यया स्वजन्म मनुते नम्रोत्तमाङ्गेन तां
वन्दे नन्दितभूतलामहमिमां देवीं यथा जाह्नवीम् ॥ १४५ ॥

कच्चिदक्लेशेनात्रागतवती तत्रभवती ? अहो ! शुभागमनं भवत्या अस्माकमत्रत्यानां भक्तानां महानन्दकारणम् । मातः ! कीदृशा आसते सर्वे वङ्गीया भक्ताः ?

जाह्नवीदेवी । भक्तवर ! वङ्गीयभक्तानां कुशलम् । किन्तु

हाहा वत्स तिरोभवन्ति भुवनाखिलसहायाः क्रमा-
च्चैतन्यस्य महाप्रभोरिति भृशं चेतोऽद्य मे खिद्यते ।
भक्तास्ते नयनानि सम्प्रति निबध्नन्तीह गोस्वामिनि
श्रीवृन्दावनवासिनि त्वयि तथा श्रीलोकनाथेऽपि च ॥ १४६ ॥

तव दीर्घायुरहं कामये ।

रघुनाथः। मातः! जनन्या वाञ्छाक्रमेण सन्तानानाम् उन्नतिरवनतिर्वा सदा संघटते। गौडीय-वैष्णवभक्तगणास्तथा च महाप्रभोर्भिन्नस्थानीया शिष्यपरम्परा भवत्या एव सन्तानाः। तवाशीर्वादात् सर्वेषां क्षेमं राजते इत्यत्र कः सन्देहः।

जाह्नवी देवी। वृन्दावनवासिनं परमवैष्णवं त्वां दृष्ट्वा संस्मरामि तव मातरं पत्नीं च।

वारं वारमहं स्मरामि यतिनं त्वां वीक्ष्य वृन्दावने
पत्नीं ते जननीञ्च वत्स जगतः कल्याणकामे भृशम्।
सर्वैश्वर्ययुतं युवानमपि ये श्रेष्ठं भवन्तं चिराच्-
श्रीचैतन्यमहाप्रभोश्चरणयोरुत्सृष्टवत्यौ पुरा ॥ १४७ ॥

परमकल्याणकारणं वैष्णवधर्मस्य एतद्द्वयम् अद्य परममङ्गलदिनेऽहं भृशं संस्मरामि। प्रभूतवित्तशालिनो गोवर्धनदासमहोदयस्य पुत्रस्त्वं सुचिरं साधनहेतवे सुकठिनतपश्चरणशीलो निराहारो वीतनिद्रः श्रीराधिकाचरणद्वन्द्वं संसेवमानो जीवनं यापयसीति सर्वेषां सर्वकालीनानां भक्तानां तवादर्शो ज्ञाननेत्रोन्मेषकारणं स्यात्।

किन्तु पुत्र! कथं त्वं श्रीराधिकां सर्वहृदयेन पूजयसि?

श्रीरघुनाथदासः। मातः पश्य, तस्य फलं चाक्षुषमेव।

नित्यानन्दस्य पत्नी क्व खलु भगवती क्वैष दीनो दविष्ठो
मृत्योर्द्वारे शयानोऽपटुकरणतया वञ्चितो वाञ्छितार्थात्।
मूर्तिः श्रीराधिकाया यदिह मम पुरो जाह्नवी त्वं समेता
दूराद् वङ्गप्रदेशात् तदिदमविकलं राधिकार्चाफलं मे ॥
॥ १४८

(सबाष्पं) सत्यं नाहं कृष्णमपि प्रार्थये; केवलं मातृकृपाम्।

जाह्नवीदेवी। [स्वगतम्] अहो सर्वत्रोपास्यदृष्टिर्वैष्णवाचार्यस्य रघुनाथस्य। कोटीसूर्यसमप्रभ एष जनः, अथच अम्लं दधि विना किमपि न भुङ्क्ते। प्रधान एव खलु तपश्चर्यायाः। [रघुनाथमुद्दिश्य]

रघुनाथ ! यस्त्वं नवीनेऽपि वयसि मातृमुखं परिजनवर्गं विहाय कदापि न विरहवेदनाभिभूतोऽभवः स त्वं कथमद्य परिणते वयसि वृन्दावन-धाम्नि वैक्लव्यं दर्शयसि ?

रघुनाथः । त्वां दृष्ट्वा संस्मरामि किल बलरामसदृशं महाप्रभोरग्रजं श्रीलश्रीनित्यानन्दप्रभुम्, यः केवलम् अकारणकृपावितरणायैव जन्म परिजग्राह । तस्यैव स्वयं शक्तिर्भवती ईश्वरी मत्समीपं समागता । सुचिरकालसाधनस्य सिद्धौ संप्राप्तायां कथं न मे आनन्दाश्रूणि निर्गच्छेयुः ? मातः ! केवलं प्रार्थये न झटिति स्थानान्तरगमनमानसा भवेति ।

जाह्नवीदेवी । पुत्र ! माता मातेव । यत्र तत्र वा स्थास्यामि नाहं त्वां कदापि स्वक्रोडाद् दूरे गणयिष्यामि ।

पुत्र ! अप्यवधूतप्रभुं प्रति किमप्यास्ते तव निवेदनीयम् ?

रघुनाथः । जननि ! तस्य भगवतः सकाशे केवलमिदमेव प्रार्थये राधाकुण्डतीरे श्रीजीव-कृष्णदासादिपुरतो मातृनाम जपनतत्परश्चिर-निद्रामाप्नुयाम् इति ।

जाह्नवीदेवी । पुत्र !

तपश्चर्याश्चर्या यदतिमहती ते क्षितितले
स्पृहा चेयं स्वार्थान्वयरहित-लोकोत्तरविधौ ।
तदेषा ते वाञ्छा नियतमधिकुर्यात् सफलतां
न कर्म स्याद् व्यर्थं कृशमपि कथा कैव महतः ॥ १४६ ॥

किञ्च, यथा श्रीलसनातनगोस्वामिप्रभुः सम्बन्धज्ञान-तत्त्वस्याचार्यः, श्रीरूपश्चाभिधेयाचार्यस्तथा कृष्णरतेर्मूर्तविग्रहस्त्वमपि जीवपरमप्रयोजन-कृष्णरतितत्त्वस्य. अर्थात् प्रयोजनतत्त्वस्याचार्यरूपेण चिरस्थायिस्थानं वैष्णवसौरमण्डले लप्स्यसे । स्वीकृतो भविष्यसि च निखिल-वैष्णवजगतो भजनगुरुरूपेण ।

वत्स ! किमन्यत् ते प्रियं कुर्याम् ?

रघुनाथदासः। मातः! अतः परमपि किं मे प्रियं स्यात्!
तथापि यदि भगवती वाञ्छति तर्हीदमपि भवतु

उन्मत्तं वित्तमोहाद् भवतु धनवतां मानसं वीततृष्णं
दीना वैराग्यवन्तो वसुनि मृगतृषासन्निभे सन्तु नित्यम्।
सूनुं वा स्वामिनं वा भजनपथगतं मास्म रुन्धन् पुरन्ध्र्यो
राधे कृष्णेति वाणी वसतु मुखमनु प्राणिनां नित्यकालम्॥ १५०॥

जननी स्वर्गः क्षितितलगर्वः
शमयतु सुतगणमानसदुःखम्।
जननीहृदयं तनये सदयं
क्वचिदपि न भवतु सकृदपि रूक्षम्॥ १५१॥

जननीवदनं सान्त्वनसदनं
मा भूत् कथमपि मलिनच्छायम्।
जननीत्याख्या परमाभिख्या
सूनोर्मदयतु सततं हृदयम्॥ १५२॥

———

# दीनदास-रघुनाथ-महानाटकस्य श्लोकसूची

—o) * (o—

# दीनदास-रघुनाथ-महानाटकस्य
## छन्दःसूची

अनुष्टुप्—७—१०, २४, २६-२७, २६, ३४—३६, ३८-३६, ५०-५१, ५६-६०, ६३, ७०, ७५-७७, ७६, ८३, ८५, ८७, ६६, १०३-४, १०८-६, ११३, १२२, १४०।

आर्या—८६।

आर्यागीति—१००-१०१, १०६, ११५-१६।

इन्द्रवंशा—१२४-२५।

इन्द्रवज्रा—१५, २८, ८४, ६०, १३८—३९, १४२।

उद्गीति—१६, ५८, १०५।

उपगीति—५६।

उपजाति—१, ६, १६, ३७, ६२, ७२-७३, ८१, ८८, ६१, ६५, ६८, ११६, १४३।

गीति—२५, ६२, १३२।

चित्रलेखा—१०२।

तोटक—१३।

द्रुतविलम्बित—१०७।

नाराच (महामालिनी)—१२६।

पृथ्वी—६४, १२१, १२६-२७, १३७।

मन्दाक्रान्ता—११, ४४, ७४, ७८, ८०, १३५।

मात्रा—११०, १५१-५२।

मालिनी—१४, १७, ४०-४१, ५७, ६६, ८६, १३१।

वंशस्थविल—४२, ५३, ८२।

वसन्ततिलक—२२, ५५, ९९, ११२, ११४, १४४।

—०)(०)(०—

# Manjusha Vol. XV

( 824 pages )

Contains five full length modern Sanskrit dramas ( महिममयभारतम्, निष्किञ्चनयशोधरम्, वीरभा, भारतहृदयारविन्दम् and भास्करोदयम् ), Sanskrit letters of the late Appa Sastri Rashivadekar, Proverbs from many languages, Aesop's Fables in Sanskrit, Rabindranath's story and poems, an unpublished Sanskrit kāvya, a series of articles on the interpretation of the Vedas, Panini and Whitney, Grammatical discussions on पूर्वतन, ऊर्ध्वतन, छात्री, छात्रा etc., on the Anubandhas of Panini, on several rules of Panini etc. etc.

Price : Rupees Eight only. Postage extra.

Vol. VII (about 400 pages) Technical Terms and Technique of Sanskrit Grammar—Samāsa, Kāraka and Vibhakti. Kālidāsa and Bhavabhūti (5 instalments). Was Pāṇini a Communist ? Kālidāsa and Shakespeare. Greek Proverbs (64 pages). On तरप् and तमप्. On सुहृत and भ्रातृव्य. Meaning of शफोरु. 9 storiettes, 3 long stories, मृगया in Sanskrit Drama, etc., etc. 10/-.

Vol. VIII (about 200 pages) Short stories, long stories, humorous skits, महाभाष्यरत्नमञ्जूषा. Meanings of Sanskrit proper names. Sanskrit stanzas and their parallels from European languages. Sanskrit equivalent of bread. Notes and Queries. Tagore's short story. On देवानांप्रियः. On the derivation of कार्मुक, On Abhinavagupta. On Śārṅgarava and Śāradvata. Tagore's Urvashi. Common Errors. So-called Solecisms of Kālidāsa. Rs. 3/8/-.

Vol. IX (nearly 300 pages). So-called Solecisms of Kālidāsa. Literary Parallels. Common Errors. Technical Terms of the Mugdhabodha. Tagore's story and poems. Contradiction in Terms. On the correct derivation of प्रवीण, सिकता etc. वाग्मी vs. वाग्ग्मी. बिभीषण versus विभीषण. On फ, ढ, ख, छ, घ in Pāṇini. A new stanza from Vyāḍi's Saṃgraha. Meaning of रद विलेखने. सतीर्थ्य versus सतीर्थ. The Anubandhas ट, क, प, उ, ष in Pāṇini, The Technical Terms—Upasarga, Nipata, Karmapravacaniya, Gati, etc. Apurva in Mimamsa. In Defence of the Padapāṭha. On ऊकालोऽज्झ्रस्वदीर्घप्लुतः. On वामदेव्यं साम. रेफ versus रकार. Rs 6/-

Printed and published by Sri Visvanath Chatterjee, M.A. from 8, Bhupendra Bose Avenue, Calcutta-4. Printed at the Gupta Press, 37/7 Baniatola Lane, Calcutta-9.

चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर पाहि माम्।
चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्ष माम्॥

श्रीशिवः शरणम्

क्षितीशचन्द्र-चट्टोपाध्याय-प्रवर्तिता

# मञ्जूषा

क्षितीशचन्द्र-स्मरणाङ्कः

Kshitish Chandra Chatterji
Memorial Number



क्षितीशचन्द्र-चट्टोपाध्यायः

Kshitish Chandra Chatterji

(*b.* 24th November, 1896. *d.* 8th November, 1961)

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

क्षितीशचन्द्र-चट्टोपाध्याय-प्रवर्तिता

# मञ्जूषा

असतो मा सद् गमय,
तमसो मा ज्योतिर्गमय,
मृत्योर्माऽमृतं गमय ॥

बृहदारण्यकोपनिषद्, १-३-२८ ।

## क्षितीशचन्द्र-स्मरणाङ्कः

## Kshitish Chandra Chatterji Memorial Number

चैत्र, १८८३
March, 1962

# Foreword

It is with a very heavy heart that we are presenting what we apprehend would be, for the present at least, the last number of the *Manjusha*. The Founder-Editor of this Journal, Prof. Kshitish Chandra Chatterji, had been seeking to serve the cause of Sanskrit studies in India with a single-minded devotion for nearly the whole of his career as a Professor. Among all his serious work in this connexion, we have to give to *Manjusha* a very high place. This Journal, one of the dozen Sanskrit journals that are still alive and about which India could boast of at the present day, brought in quite a new atmosphere and a distinctively modern approach in the study of Sanskrit. Prof. Chatterji had concentrated on the study of Sanskrit Grammar, in which he has made some very fruitful contributions. Grammar and Linguistics are generally considered to be dry-as-dust subjects, but Prof. Chatterji even in his *Manjusha* brought in occasionally a play of his humour through Sanskrit, and that was not the least thing in ensuring the popularity of the *Manjusha*.

Sanskrit studies unfortunately are at a discount in India at the present day. We had all hoped that, after Independence, Sanskrit would once again be given something like the status which is its due. It ought to have been made at least one of the Official Languages of India. Surely, for communication with the outer world, when formalities are to be observed, it should have been Sanskrit, and no other Indian language. That was

the proper language for our Ambassadors to present their credentials in. Sanskrit is our mental and spiritual link with the Indo-European speaking Europe and America. It is also our great link through Buddhism and Brahmanism with the countries of Central Asia of ancient times, and of South-East Asia, Indo-China and Indonesia, and also with Vietnam, and China, Korea and Japan. Sanskrit, as Sri Rajagopalachari, the veteran administrator and political leader of India, has rightly described, forms "the symbol of our Seniority among the Nations of the World".

Sanskrit is a great discipline, and we very frequently forget this central fact in our Sanskrit studies. To preserve the integrity of this discipline, a handful of Sanskrit scholars, who themselves were erudite and who had a whole-hearted devotion to the cause, have been trying during the last three generations to maintain the dignity of Sanskrit studies through their own exertions—through their own contributions in the domain of Sanskrit research as well as by trying to inspire students and others. Prof. Kshitish Chandra Chatterji was emphatically one of this small band of selfless scholars who had devoted themselves to this task, and whatever they did was from an inner urge : the great satisfaction which they derived from these studies formed for them its only reward. Their work was not for money, but it was, as Tulasidasa said about his own great work, the *Ramayana*, translated into his mother-tongue Awadhi, स्वान्तः-सुखाय, for the happiness of his own inner being.

I need not give a sketch of the career of Prof. Kshitish Chandra Chatterji. This has been done elsewhere in this same number. I was privileged to have him as an esteemed colleague for a long number of years in the University of Calcutta. He had taken his M. A. in Sanskrit, and had studied Comparative Philology and Linguistics under Dr. I. J. S. Taraporewalla, of illustrious memory, who was for a number of years Professor of Comparative Philology in the University of Calcutta. Prof. Kshitish Chandra Chatterji spent most of his life in the University of Calcutta as a Lecturer in the Department of Comparative Philology, and in that capacity I had him as my colleague. We all admired not only his great erudition but also certain sterling qualities of his character. He was steadfast in his own convictions, and intellectually he was absolutely honest. It is very rare to find a man of that calibre in any department of life.

Coming from not a very rich middle class family, he himself was never able to make money, and a large proportion of his slender means as Lecturer in the University of Calcutta was devoted almost entirely to the dissemination of Sanskrit learning through Journals. He brought out an Indological Journal of very high repute, *The Calcutta Oriental Journal*, which created a very favourable impression among scholars, and was responsible in publishing a number of very good articles on different aspects of Indology by eminent scholars. Then his next venture was the *Manjusha*, and this *Manjusha* he has been publishing, although with great financial

loss, for 16 years and more. With the exception of a small grant of Rs. 2500/- from the Central Government, which came to him just before his death, all the expenses were borne by him. It was too much to expect an impecunious scholar, though of great reputation, to be the financier as well as the editor of a learned paper of this type. Up to the last Prof. Chatterji was very optimistic, and what he had closest to his heart was to make the *Manjusha* a bigger and a better paper. But unfortunately this could not happen, as he fell ill, and finally, as is the fate of all human beings, he joined the majority on the 8th of November, 1961.

We now find it difficult to combine both the erudition of the departed scholar, and the wherewithal which is so very necessary and which he alone could somehow find out. It is therefore with a very sad heart that we are forced to stop the further publication of the *Manjusha*. If better times come, possibly the work may be taken up again. Prof. Chatterji's only son is a Lecturer in English in Jadavpur University, near Calcutta, and he has in him the love for Sanskrit and the family tradition in Sanskrit studies. But without adequate financial resources, much as he would have liked to continue his father's work, he cannot do it, at least for the present.

We can only hope that those who have liked the *Manjusha*—and we flatter ourselves that their number is not small throughout the whole of India—will give an occasional thought to this Journal

which had been so remarkably serving the cause of Sanskrit, and will have a prayer for the illustrious founder of this Journal—*requiescat in Pace.*

**Suniti Kumar Chatterji**

Calcutta,
25th January,
1962.

Emeritus Professor of Comparative Philology, University of Calcutta, and Chairman, West Bengal Legislative Council.

———

## मुखबन्धः

सुतरां भाराक्रान्तेनान्तःकरणेन निवेद्यतेऽस्माभिर्मञ्जूषाया इयं सञ्चिका, आशङ्क्यते चान्ततोगत्यायमेवास्या मञ्जूषायाः पश्चिमोऽङ्क इति। अस्याः पत्रिकायाः प्रतिष्ठाता च सम्पादकश्चाध्यापकः क्षितीशचन्द्रचट्टोपाध्यायस्तस्याध्यापकजीवनस्य प्रायेण सर्वं कालमनन्यनिहितया निष्ठया भारतवर्षे संस्कृतानुशीलनकर्मणि व्यापृत आसीत्। अत्र तस्योल्लेख्येषु कर्मसु मञ्जूषेयं सविशेषमुच्चैः पदमर्हति। यास्तावद् दशद्वादशसंख्यकाः संस्कृतपत्रिका अद्यापि जीवन्ति यदर्थमिदं भारतवर्षं प्रभवति गर्वमनुभवितुम्, 'मञ्जूषा' तासामेकतमा। संस्कृतानुशीलनविधौ मञ्जूषा काञ्चन नवीनरीतिं विशिष्टामाधुनिकधाराञ्च प्रावर्तयत्। विशेषेण मनो न्यवेशयदयम् अध्यापकश्चट्टोपाध्यायमहोदयः संस्कृतव्याकरणचर्चायाम्। व्याकरणे तस्य विशेषतः फलोपधायकमवदानं विद्यते। व्याकरणं भाषातत्त्वं च साधारण्येन नितरां नीरसमिति मन्यते, अध्यापकश्चट्टोपाध्यायस्तु तस्य मञ्जूषायामपि संस्कृतद्वारेण हास्यरसं प्रासारयत् इदमपि मञ्जूषाया जनप्रियतायामन्यतमां प्रधानकारणतामगाहत।

भाग्यदोषाद् वर्तमाने काले भारतवर्षे संस्कृतचर्चायाः समादरो न

दृश्यते। सर्वे वयमेवमाशामपुष्णीम यत् स्वाधीनतालाभादूर्ध्वं संस्कृतस्य मर्यादा यथायोग्यम् अर्पिता भवेदिति, अन्ततो भारतस्य राष्ट्रियभाषास्वन्यतमत्वेन संस्कृतं गण्येतेति। बहिर्विश्वेन सह सम्बन्धरक्षाविधौ संस्कृतेन व्यवहारः समुचित आसीत्, न पुनरन्यया कयापि भारतीयया भाषया। अस्माकं राष्ट्रदूतानां परिचयपत्रोपस्थापने सैवासीद् युक्ततमा भाषा। 'इन्दो युरोपीय'-भाषिणा यद्वा आर्य-वाचं प्रयुञ्जानेन युरोपेण आमेरिकया च सहास्माकं मानसमाध्यात्मिकञ्च योगसूत्रं संस्कृतमेव। प्राचीन-मध्यासियास्थितदेशैरग्निकोणस्थितासियाखण्डस्य देशैर्भारत-चीनद्वीपान्तर-भारत-चम्पाराज्य-कम्बुज-चीन-कोरिया-जापानादिभिश्च सह संस्कृतं महद् योगसूत्रम्। भारतस्य प्रवीणशासको राजनैतिकनेता च श्रीमान् राजागोपालाचार्य-महोदयोऽवितथमेवोक्तवान् यत् "संस्कृतं खलु विश्वस्य जातिपुञ्ज-मध्येऽस्माकं ज्येष्ठत्वस्य प्रतीकम्" इति।

संस्कृतं हि महाविनयमादधाति चारित्रिकमिति संस्कृतचर्चामूलकथा प्रायेणास्माभिर्विस्मर्यते। तस्यैतस्य विनयाधारस्य विशुद्धिरक्षार्थं साधनायामचलनिष्ठा मुष्टिमेया ये नाम कतिपये संस्कृतज्ञा विद्वांसोऽतीतपुरुषत्रयं यावत् संस्कृतस्य मर्यादारक्षार्थं संस्कृतगवेषणाविधौ स्वकीयेन दानेन शिष्याणामन्येषाञ्चानुप्रेरणमाधातुञ्च प्रयासमास्थितवन्त उत्ससृजुश्चात्मानमेतदर्थम् एतस्याम् अल्पीयस्यां निःस्वार्थ-विद्वद्गोष्ठ्यां नूनमन्तर्भवत्येवाध्यापकः क्षितीशचन्द्रचट्टोपाध्यायः। यत्किमपि ते चक्रुस्तत्र सर्वत्रैवान्तःकरणमासीदेषां प्रेरकम्। विद्यानामासामनुशीलनेन या नाम महती तृप्तिस्तैरनुभूता सैवासीत्तेषामेकमात्रमुपायनम्। नैषां धनार्थं कर्म, किन्तु तुलसीदासो यथा तदीयमहत्यां कीर्तौ स्वीयावधीभाषयानूदिते रामायणे कथितवान् "स्वान्तः सुखाये"ति एवमेतेषामप्यन्तरात्मन आनन्दार्थम्।

अध्यापकस्य क्षितीशचन्द्रचट्टोपाध्यायस्य कर्ममयजीवनमधिकृत्य न

मया किमप्यालेख्यमङ्कयिष्यते, प्रदत्तं तत् पुनरन्यत्रास्यामेव सञ्चिकायाम्। कलिकाताविश्वविद्यालये बहून् कालान् विशिष्टसहकर्मिरूपेणेनमहं लब्धुं सविशेषं सुयोगमासादितवान्। स संस्कृतमवलम्ब्य एम् ए परीक्षामुत्तीर्ण आसीत् अधीतवांश्च प्रख्यातनाम्न आचार्यस्य एरज-जहांगीर-सुहरावजीतारापुरपालकमहोदयस्य सकाशे तुलनामूलकं भाषातत्त्वं भाषाशास्त्रं च। विश्वविद्यालयेऽस्मिन् तुलनामूलक-भाषातत्त्वस्य प्रधानाध्यापक आसीत् तारापुरपालक-महोदयः कियतश्चिद् वर्षान्। अध्यापकक्षितीशचन्द्रचट्टोपाध्यायस्तदीयजीवनस्य भूयसोंऽशांस्तुलनामूलक-भाषातत्त्वाध्यापनयैव व्यतीतवान्, तदेव च सूत्रमासाद्य तमहं सहकर्मिविधया लब्धवांश्च। न केवलं वयं तस्य पाण्डित्यमेव प्रशंसितवन्तः परं तस्य चारित्रिकीरकृत्रिमाः कियतीश्चिद्वृत्तीरपि। स्वेषु विश्वासेषु सुतरामचलः स बुद्धत्रापि सज्जन आसीत्। जीवनस्य तासु तास्ववस्थास्वीदृक्चरित्रो जनः स्वल्प एव दृश्यते।

प्रभूतार्थिकसमृद्धेरभाजने मध्यमवित्ते क्वचन संसारे स प्रादुरासीत्। न तेन कदाचिद् धनं सञ्चितम्। कलिकाताविश्वविद्यालयस्याध्यापकतया यत् किञ्चन स्वल्पं धनमार्जयत्तस्य बहुलभागान् विविधपत्रिकाद्वारेण संस्कृतविद्याप्रचारार्थं न्ययोजयत्। स भवानुच्चैर्विख्यातं प्राच्यविद्याविषयकं किञ्चन मासिकपत्रं "दि-कलकत्ता-ओरियेनण्टल-जर्नल" नामकं प्राकाशयत्। पत्रिकायामस्यां विदुषामुत्कृष्टताबुद्धिरासीत् प्रकाशिताश्चात्र विख्यातानां विद्वदग्रेसराणां प्राच्यविद्याया विभिन्नदिग्दर्शिनः केचन भूरिप्रशंसार्हा निबन्धाः। ततः परमस्य प्रयासफलं "मञ्जूषा"। अधिषोडशवर्षान् यावत् तेनेयं प्रकाश्यते प्रभूतमर्थापचयं स्वीकुर्वतापि। मृत्योः कियत्कालात्पूर्वं भारतसर्वकारप्रदत्तां सार्धद्विसहस्रात्मिकामेकां क्षुद्रां वृत्तिं विना सर्वोऽपि व्ययस्तेन स्वयमेव कृतः। तादृशः ख्यातिमान् बुधवर्य ईदृश्याः पाण्डित्यपूर्णपत्रिकायाः सम्पादनमर्थचिन्तां चैकः कारष्यतीत्यत्यच्चैः किलाशास्तत्रा-

स्माभिः कृतासीदिति ध्रुवमेव। अध्यापकश्चट्टोपाध्यायः सुतरामाशावादी आसीत्। तस्य सर्वप्रधानान्तरिकी वासना मंजूषामुन्नततरां बृहत्तरां च कर्तुम् उदग्रासीत्। दुर्भागधेयविलसितेन तदेतन्नाघटत यतः स रुजाक्रान्तोऽभूत् अन्ततश्च मंजूषाया भाग्यलिपिं प्रमाणयन् खिष्टीयैकषष्ट्युत्तरैकोनविंशशततमाब्दस्य (१९६१) नवम्बरमासीयाष्टमदिवसे सर्वेषां गतिमगमत्।

स्वर्गतस्य सुधीवर्यस्य यथा पाण्डित्यमासीद् यथा चास्ते धनानामेकान्तप्रयोजनं—यत् तेन जीवता कथमपि व्यवस्थापितम्—अनयोर्द्वयोरिदानीं समन्वयसाधनं सुदुष्करमस्माकम्। अत एव सखेदमवरुध्यतेऽस्माभिरित ऊर्ध्वं मंजूषायाः प्रकाशः। अथ चेत्सुसमयः समापतेत् काममिदं पुनः प्रारभ्येतापि। अध्यापक-चट्टोपाध्यायस्यैक एव पुत्रः कलिकातासमीपवर्तिनि यादवपुरविश्वविद्यालये आङ्गलविभागीयोऽध्यापकः। अस्ति च तत्र श्रीमति संस्कृते प्रत्यनुरागः संस्कृतचर्चायाः कुलपरम्परागतमैतिह्यञ्च। परं यथावश्यकम् आर्थिकी व्यवस्था नास्तीति सत्यामपि पित्रारब्धकर्मणः सम्पादनेच्छायां नैतत्तेन कर्तुमर्हम्—अन्ततो वर्तमाने समये।

वयं केवलमिदमेवाशास्महे यद् येभ्यो मञ्जूषा समरोचत—येषां संख्या निखिले भारतवर्षे नैकान्ततो न्यूनेत्यस्माकमस्त्यात्मप्रसादः—ते संस्कृतप्रचारार्थं विलक्षणं कर्म कुर्वतीम् इमां मञ्जूषामवसरे मनसि करिष्यन्ति प्रार्थयिष्यन्ते चैतस्याः प्रवर्तकस्य चिराय शान्तिमिति॥

श्रीसुनीतिकुमार-चट्टोपाध्यायः

कलिकाता-नगरी,
२५ जनवरी, १९६२॥

कलिकाता-विश्वविद्यालयस्य तुलनामूलक-भाषातत्त्व-विभागस्य
सम्मानितः प्रधानाध्यापकः पश्चिमवङ्ग-विधानपरिषदध्यक्षश्च॥



# श्लिष्यते

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते। छान्दोग्योपनिषत् ४।१४।३

नाधर्मः श्लिष्यते प्राज्ञं पयः पुष्करपर्णवत्।
अप्राज्ञमधिकं पापं श्लिष्यते जतु काष्ठवत्॥

[ दोषाः श्लिष्यन्ति*वर्त्मसु महाभारत, १२। सुश्रुतसंहिता २।१९२।३ ]

अपरिचयात्तु न श्लिष्यते मे मनसि। स्वप्नवासवदत्त १।५।१४

तस्माद्धर्मोत्कर्षवशाच्चिरन्तना देवादिभिः प्रत्यक्षं व्यवजह्रुरिति श्लिष्यते।

ब्रह्मसूत्रभाष्य १।३।३३

स्वेनासङ्गदोषेण वागादिषु लब्धप्रसरास्तदभ्यासानुवृत्त्या संश्लिष्यमाणा विनेशुः।

ब्र० सू० भा० १।३।७

नह्यसति पर्जन्ये रसपुष्पपलाशादिवैषम्यं तेषां जायते, नाप्यसत्सु स्वस्वबीजेषु, एवं जीवकृतप्रयत्नापेक्ष ईश्वरस्तेषां शुभाशुभं विदध्यादिति श्लिष्यते।

ब्र० सू० भा० २।३।४२

पौराणिका अपि पृथिवीच्छायां शर्वरीमुपदिशन्ति। सा च कृष्णाभासेत्यतः कृष्णं रूपं पृथिव्या इति श्लिष्यते। ब्र० सू० भा० २।३।१२

दुःखेन श्लिष्यते भिन्नं श्लिष्टं दुःखेन भिद्यते।
भिन्नश्लिष्टा तु या प्रीति र्न सा स्नेहेन वर्धते॥ पञ्चतन्त्र।

यो हि ब्रह्मक्रतुः स ब्राह्ममैश्वर्यमासीदेदिति श्लिष्यते। ब्र० सू० भा० ४।३।१५

सेतुसामान्यात्तु सेतुशब्द आत्मनि प्रयुक्त इति श्लिष्यते। ब्र० सू० भा० ३।२।३२

स्वेनासङ्गदोषेण वागादिषु लब्धप्रसरास्तदभ्यासानुवृत्त्या संश्लिष्यमाणा विनेशुर्विनष्टा विध्वस्ताः। बृ० आ० उ० भा० १।३।७

अतस्ते परित्यक्तदेहबीजभूताभिरद्भिर्मूर्छिता इवाकाशादिक्रमेणेमामवरुह्य कर्मनिमित्तजातिस्थावरदेहैः संश्लिष्यन्ते प्रतिबद्धकरणतया अनुद्भूतविज्ञाना एव।

छा० उ० भा० ५।१०।६

देवादिकेषु परस्मैपदिषु श्लिष आलिङ्गन इति पठ्यते। अत एवात्मनेपदे प्रयोगाः प्रमादिका इति प्रतिभान्ति। वस्तुतस्तु कर्मकर्तरीमे प्रयोगा बोद्धव्याः। अत एव लौकिका इमे प्रयोगाः प्रायेणाकर्मका उपलभ्यन्ते।

The root श्लिष् is Parasmaipadin in the Brāhmaṇas and Ubhayapadin in the Upaniṣad. It is read in the Dhātupāṭha as श्लिष

आलिङ्गने and is दिवादि परस्मैपदी, so श्लिष्यते in the above passages would appear wrong at first sight. But the श्लिष् read in the Dhātupāṭha is transitive and श्लिष्यते is used intransitively in the above passages. As a matter of fact in almost all cases where श्लिष् is used intranisitively in the sense of 'to stick to' 'to fit in' as here the root is used in the Ātmanepada. The reason is not far to seek. When intransitive it is used in the कर्मकर्तृवाच्य and is therefore Ātmanepadin. Following in the footsteps of Vāmana we may say: श्लिष्यत इति कर्मकर्तरि. Under B. S. iv. 3. 22 we find the transitive उपश्लिष्यन्ति in the parasmaipada*: ये तु वादिनो हृदि श्रिताः कामा वासनाश्च हृदयसम्बन्धिनमात्मानमुपसृप्योपश्लिष्यन्ति हृदयवियोगेऽपि चात्मन्यवतिष्ठन्ते पुटतैलस्य इव पुष्पादिगन्ध इत्याचक्षते।

The Kāśikā (iii.4.72) and Durga's Kṛdvṛtti (479) say श्लिषादयः सोपसर्गाः सकर्मकाः, but they are transitive even when used without upasarga. Thus we find in the Kāvyādarśa:

मधुरा रागवर्धिन्यः कोमलाः कोकिलागिरः।
आकर्ण्यन्ते मदकलाः श्लिष्यन्ते चासितेक्षणाः ॥२।३१॥

Jayadeva has श्लिष्यति कामपि चुम्बति कामपि कामपि रमयति रामाम्।

---

# शब्दकथा

"रविवारेर युगान्तर"पत्रे ( 29 September, 1961 ) दशमपृष्ठे पञ्चमस्तम्भे दृष्टम्—मध्यशिक्षापर्षत्कर्तृपक्ष...जानाइयाछेन ये, पर्षतेर अनुमोदित कोन स्कुले पडितेछेन ना एवं पर्षतेर आञ्चलिक एक्तियारेर मध्ये वसवास करितेछेन...इति। पर्षद् इत्यस्य प्रथमैकवचने पर्षद् पर्षत् इति रूपद्वयं भवति, परं षष्ठ्येकवचने पर्षद इत्येव भवति न पुनः पर्षत इति। अत एव वङ्गभाषायामपि 'पर्षदेर' इत्येव साधु न पुनः 'पर्षतेर' इति। केनापि स्वप्नेऽपि 'सम्पतेर' 'विपतेर' इत्यादिकं नोच्चार्यते।

तत्रैव दृष्टम्—ताँहार पितृदेव स्वर्गतः चारुचन्द्रभट्टाचार्येर आद्यश्राद्ध सम्पन्न हइवे इति। सर्वं विसृज्य स्वर्गतमपि विसर्जनीयोऽनुधावति।

---

* The Parasmaipada is due to the exigencies of metre.

# मुनिप्रवरः श्रीपाणिनिः

[ स्वर्गतस्याप्पाशास्त्रिराशिवडेकरस्य ]

येन धौता गिरः पुंसां विमलैः शब्दवारिभिः।
तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः॥

इह खलु जगति यद् यदवलम्ब्य प्रवर्तते लोकानां व्यवहारस्तत्र भाषैव प्राधान्यमवगाहते। यदि ह्यत्र भाषैव न स्यान्न किञ्चिदनुष्ठातुं प्रभवेयुर्लोकाः। एतदेवोक्तमाचार्येण दण्डिना--

इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते॥ इति।

भाषा च नामेयमपरा युवतिः। यथा हि निर्विश्य तानि तानि युवतिजनविलसितानि विमोहितान्तःकरणस्तदेकतानतामापन्नः कामिजनः समनुभवति प्रमोदातिशयम्, एवं भाषागतानपि तांस्तांश्चमत्काराननुभवन्ननन्यमानसत्वमापन्नो रसिकः समास्वादयति विगलितवेद्यान्तरं कमपि सम्मोदम्।

यथा पुनर्नानाविधालङ्कारशालिनी सौन्दर्यसमुद्भासिता विविधभावमनोहरापि युवतिर्विना शरीरसंस्कारं नांशतोऽपि प्रभवत्याक्रष्टुं मनो दयितस्य प्रत्युत तिरस्कारमेवोत्पादयति, एवं भाषापि तैस्तैरुपमादिभिरलङ्कारैः समुल्लसिता रसैश्च शृङ्गारादिभिः समुज्ज्वला विना व्याकरणाख्यं संस्कारं न प्रभवत्याक्रष्टुं मनः प्राज्ञानाम्, प्रत्युत ग्राम्यपदभाजनीभूतान् निवर्तयत्येनानात्मन आस्वादात्। ते हि व्याकरणसंस्कारशून्याया अपशब्दलक्षणाया भाषायाः प्रयोगे प्रत्यवायमवगच्छन्तो दूरत एवैनां परिहर्तुमीहन्ते।

अस्ति चापशब्दप्रयोगे प्रत्यवायोऽपि। तथाह्युक्तं भाष्यकृता—तेऽसुरा हेलयो हेलय इति कृत्वा परा बभूवुस्तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्द इति। दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥ इति च। विवृतं चैतत् कैयटेन—मिथ्या

प्रयुक्त इति। यदर्थप्रतिपादनाय प्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषात् प्रतिपादयन्नभिमतमर्थं नाहेत्यर्थः। वागेव वज्रो हिंसकत्वात्। यथेन्द्रशत्रुः स्वरदोषाद् यजमानं हिंसितवानित्यर्थः। इन्द्रस्याभिचारो *वृत्रेणारब्धस्तत्रेन्द्रशत्रुर्वर्धस्वेति मन्त्र ऊहितः। तत्रेन्द्रस्य शमयिता शातयिता भवेति क्रियाशब्दोऽत्र शत्रुशब्द आश्रितो, न तु रूढिशब्दः; तदाश्रयणे हि बहुव्रीहितत्पुरुषयोरर्थाभेदः। तत्रेन्द्रामित्रत्वे सिद्धे यदिन्द्रस्य शत्रुः (शातयिता) भवेत्यर्थे प्रतिपाद्येऽन्तोदात्ते प्रयोक्तव्य आद्युदात्त ऋत्विजा प्रयुक्त इत्यर्थान्तराभिधानादिन्द्र एव वृत्रस्य शातयिता सम्पन्न इति।

यथा चापशब्दप्रयोगो दोषाय एवं साधुशब्दप्रयोगोऽपि महीयसे फलाय प्रकल्पते इत्यप्यभिहितं तत्रैव। एकः शब्दः सुप्रयुक्तः सम्यग् ज्ञातः स्वर्गे लोके कामधुग् भवतीति।

अतश्च न प्रयोज्या भाषायामपशब्दाः। अपशब्दज्ञानं च नहि विना व्याकरणज्ञानेन सम्भवति व्याकरणविरुद्धानामेवापशब्दत्वात्। अत एव चावश्यकं व्याकरणम्। भूयांसि चान्यान्यपि व्याकरणप्रयोजनानि महाभाष्ये द्रष्टव्यानि रक्षोहागमलघ्वसन्देहादीनि। विस्तरभिया तु नात्रोपह्रियन्ते।

व्याकरणानि पुनरेतान्यष्टौ स्मर्यन्ते पुराणेषु। यथा भविष्यमहापुराणे ब्राह्मे पर्वणि प्रथमेऽध्याये —

प्रथमं प्रोच्यते ब्राह्मं द्वितीयमैन्द्रमेव च।
याम्यं प्रोक्तं ततो रौद्रं वायव्यं वारुणं तथा॥
सावित्रं च तथा प्रोक्तमष्टमं वैष्णवं तथा॥ इति।

वोपदेवस्त्वन्यानेवाष्टावादिशाब्दिकान् प्राह। यथा—

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः॥ इति।

* अत्र वृत्रपदं वृत्रोत्पादकं त्वष्टारं लक्षयति। तैत्तिरीये त्वष्टुरेव यजमानत्वश्रवणात्।

एतेषु चाखिलेषु पाणिनेरेवाचार्यस्य प्राधान्यम्। एतत्प्रणीतमेव च व्याकरणं सर्वतः समुत्कृष्टम्। अत एव चातिक्रम्य शाकटायनादिमुनिविरचितानि व्याकरणान्यारूढमेतद्वेदाङ्गपदम्। वैदिकशब्दानां च व्याकरणं न पाणिनेरिवान्यस्य संलक्ष्यते। यथा ह्युदयशैलशिखरमारूढे भगवति दिवाकरे विलुप्यन्ते महास्तिरोभवन्ति नक्षत्राणि नांशतोऽपि विद्यन्ते खद्योताः प्रपद्यते च निष्प्रभत्वं भगवान् हिमरश्मिः, एवमेव प्रादुर्भूते पाणिनीये व्याकरणे स्मरणीयां दशामापन्नान्यैन्द्रादीनि व्याकरणानि। भूयोभिः पुनरेतानि नाम्नापि न स्मर्यन्ते। यद्यप्याविर्भूतान्येव कियन्तिचिदपराण्यपि व्याकरणानि, तथापि नैनानि पाणिनीयव्याकरणस्य तुलामारोढुं प्रभवन्ति। अन्यादृशमेव हि माहात्म्यं भगवतः सर्वमङ्गलाधीश्वरस्य प्रसादतः समासादितपाण्डित्येन महामुनिना पाणिनिना प्रणीतस्य व्याकरणस्य।

स चायं महामुनिः पाणिनिः कदा कं वा जनपदमात्मनोऽवस्थानेन मण्डयामासेत्येतदिदानीं विचारयितुमिच्छामः। नानाविधाः किलात्राशयाः पाश्चात्त्यानां तदनुयायिनां च तद्वचनप्रभावप्रतिहतमतिप्रसराणां केषाञ्चिद् भारतवर्षीयाणाम्। एते हि प्रदर्श्य प्रमाणाभासपुरस्कृतास्तास्ता युक्तीर्हठादेवाकृष्याकृष्य केशेष्विव गृहीत्वाऽर्वाचीन एव समये विनिपातयन्ति सप्रयासं भगवतः पाणिनेरवस्थानम्। दिष्ट्या तावन्निर्दयतरं सर्वतः समाकृष्यमाणमेतन्नाद्यापि शकलीभूय शून्यतामापन्नम्। किमिव हि नाम दुष्करं प्राज्ञजनप्रज्ञया। भवतु कः पुनरत्राशय एतेषामिति प्रथमतः प्रदर्श्य परस्तात् स्वीयं मतं वक्ष्यामः।

अत्रैवमाहुरमी नव्याः*। सुविदितप्रायमेवैतदशेषाणां विदुषां यत्कात्यायन एव मुनिः पाणिनीयसूत्रेषु वार्त्तिकं प्रणिनायेति। ततश्च निर्णीते कात्यायनसमये पाणिनेरप्यवस्थितिसमयोऽवश्यं निर्णीतः

* एन्शंट इण्डियाख्य (प्राचीन भारताख्य) प्रबन्धे रमेशचन्द्रदत्तमहाभागः।

स्यात्। स चायं मोक्षमूलरेण निर्णीतः। तथाहि कात्यायनः किल मुनेः शौनकस्यान्तेवासी। शौनकश्च मुनिः ख्रिस्तीयसंवत्सरारम्भतः प्राक् चतुर्थ्यां शताब्द्यां समुत्पन्न इति। कात्यायनसमकालिकत्वाच्च तस्मिन्नेवावसरे पाणिनेरवस्थितिर्निःसन्देहा। गोल्डस्टुकरमहोदयस्तु वार्त्तिकप्रणेतुः कात्यायनात् सुतरामेव प्राचीनेन भवितव्यं पाणिनिना, अनुमीयते च ख्रिस्तीयवर्षोपक्रमात् पूर्वं नवम्यां दशम्यां वा शताब्द्यां प्रादुर्भूत आचार्यः पाणिनिरिति प्राह। भारतवर्षीय आर्यकुले च समधिगतजन्मा श्रीमान् रमेशचन्द्रदत्तमहाभागः प्रत्याख्याय गोल्डस्टुकारमतं सुदूरं च निरस्य मोक्षमूलराभिप्रायं ख्रिस्ताब्दप्रक्रमतः पूर्वमष्टम्यां शताब्द्यां पाणिनेरवस्थितिर्न किल न सम्भवास्पदत्वमवगाहत इत्याह।

प्रदर्शितो नव्यमतोद्भासः। सम्प्रति कियद्भायमावहति प्रामाण्यमिति विचारयितुमिच्छामः। पाश्चात्त्यानां तदनुयायिनां च मते नन्दराज्यस्य ख्रिस्ताब्दतः प्राक् चतुर्थशताब्द्यां संवृत्तत्वादेवोक्तं मोक्षमूलरेण तस्मिन्नवसरे पाणिनेरवस्थानमिति सम्भाव्यते। आचार्यो हि पाणिनिर्गुरुदक्षिणार्थी राजानं नन्दमुपजगामेति किंवदन्तीति प्राहुर्नव्याः। तन्नवीनानामपि तावद् दृष्ट्या भवतु मनागिव सोपपत्तिकत्वं मोक्षमूलराभिप्रायस्य। इतरयोस्तु मते किं वोपष्टम्भकमिति विचारयन्तोऽपि न प्रतिपद्यामहे। एतदपि नांशतोऽप्यवबुध्यतेऽस्माभिः कुत्र वा समुल्लिखितं कथं च वा प्रतीयतां शौनकच्छात्रत्वं वार्त्तिककारस्य मुनेः कात्यायनस्येति। शौनकस्य च मुनेः ख्रिस्ताब्दतः प्राक् चतुर्थ्यामेव शताब्द्यां समुत्पत्तिरित्येतदपि कथं नाम शक्यं संसाधयितुमित्यपि न जानीमः। अत्र चार्थे न तथाविधानि कानिचिदपि प्रमाणान्युदलिखद्दत्तमहाभागो येन समाधीयेरन्नाशङ्काः प्रेक्षावताम्। अतश्चातुपादेयान्येव मतान्यमीषामेतानीत्याचक्ष्महे। एकान्ततः पुनर्विस्मयते नश्चेतः सत्यपि भारतीयप्रबन्धेषु पाणिनीयादिसमयनिर्णये भारत-

त्र्वर्षीयस्य दत्तमहाशयस्य पाश्चात्त्यैकशरणतामवेक्षमाणानाम् । क्वचिदुन्मत्तप्रलपितान्यार्याणां वचनानि येन सुदूरं परित्यज्यैतानि पाश्चात्त्यानामेव वचनानि श्रुतिसमकक्षतामारोप्यन्ते । अथवा सदृशमेतत्पाश्चात्त्यविद्यासंस्कारस्य भवतु । पारमार्थिकं तावदाचार्यस्य पाणिनेः समयं निर्णेतुं प्रवर्तामहे ।　　　( क्रमशः )

---

## भेक-मूषिक-कथा

[ श्रीफटिकलालदासः ]

कासारतीरे कृतरन्ध्रगेहे सुखाद्यजातैः परिपूर्णगर्भे ।
प्राज्यान्नभोजाद् भृशपीवराङ्गो न्युवास कश्चित् किल खेटमूषः ॥१॥
मण्डूक एकः सरसीनिवासी चख्यौ तमाखुं समुपेत्य तीरम् ।
"एह्येहि बन्धो मम गेहमद्य, सुभोज्यपेयैर्भव तत्र तृप्तः ॥"२॥
मूषस्तदासौ मनसाऽचिचिन्तद्, "भाग्योदयोऽयं त्रिदशप्रसादात् ।
जाने न कस्याद्य मुखं विलोक्य कल्ये ह्यकार्षं सुखसुप्तिभङ्गम् ॥३॥
कीलाललीलां परितो विलोक्य नूतनानि खाद्यान्यपि भक्षयित्वा ।
विज्ञाय रीतिं च जलेचराणां विनोदमाप्स्यामि नवं नवं च ॥"४॥
मण्डूकमूचे स ततः प्रकाशं "गृहाण बन्धो मम धन्यवादम् ।
निमन्त्रितोऽहं भवने त्वया यत् प्रीतोऽसि मन्ये प्रति मामवश्यम् ॥५॥
हृष्टोऽस्मि तेऽनेन निमन्त्रणेन, किन्त्वस्ति बाधा महती ममैका ।
स्थलेचराणां न गतिर्जलेऽस्ति भीतोऽस्मि तस्मात्तव वासमेतुम् ॥"६॥
भेकोऽवदन् "मा स्म भयं कृथा भोः, सुखेन नेष्यामि गृहं हि मे त्वाम् ।"
उक्त्वेति वाचस्पतितुल्यधीमांश्चक्र स भेकः सदुपायमेकम् ॥७॥
लताप्रतानैर्विरचय्य रज्जुं तया बबन्ध प्रथमं पदं स्वम् ।
प्रान्तेन चान्येन ततः स रज्ज्वा बबन्ध बन्धोः करमेकमेवम् ॥८॥
ऊचे स मूषं "विधिना ह्यनेन यदाहमप्सु प्लवमान एमि ।
रज्ज्वा निबद्धस्त्वमपि प्रयासि सुखेन पश्चात् सहितो मयैव ॥"९॥
उक्त्वेति लम्फेन जलं प्रविष्टः स्वकं सखायं च कमाचकर्ष ।
आकृष्यमाणः स तदम्बुमध्ये मज्जन्तमात्मानमबोधि मूषः ॥१०॥

उच्चैस्ततोऽसौ समुवाच भेकं, "जानामि सम्यङ् न हि सन्तरीतुम् ।
मज्जन्म्रियेऽहं, नय मां प्रतीरं, भोजस्त्वैवास्तु, न तेन मेऽर्थः ॥"११॥
एवं ब्रु वन् सोऽतिबलेन वार उत्थातुमैच्छन्निजचेष्टया च ।
भेकस्तु येते जलमध्यमेतुं पुनः पुनस्तं सुहृदं निमज्ज्य ॥१२॥
परस्पराकर्षविकर्षणाभ्यां विक्षुब्धमासीत् सलिलं सरस्याः ।
चिल्लश्च कश्चित् सहसा ददर्श द्वन्द्वं तयोस्तद् भवदन्तरीक्षात् ॥१३॥
निपत्य वेगान्नभसस्तमाखुं धृत्वा स चञ्च्वा पुनरुत्पपात ।
मूषेण सार्धं स हि दर्दु रोऽपि स्वकर्मबद्धोऽजनि तत्सहायः ॥१४॥
स्थलेचरेणापि जलेचरं तं प्रपद्य सोऽसौ खचरस्तुतोष ।
खगस्य कुक्षिः प्रथमौ ग्रसित्वा बभूव भूतत्रयसङ्गतीर्थम् ॥१५॥
उपायमुद्भावयता जनेन तस्याप्यपायो न विचिन्त्यते चेत् ।
तं कार्यकाले स हि खल्वपायः पतन्निहन्तीव निरभ्रवज्रः ॥१६॥

---

## नीतः काकेन ते कर्णः

[ वसुमतीसाहित्यसभायां शाक्यसिंहो वाक्यवागीशः । ]

यदि कोऽपि ब्रूयान् नीतः काकेन ते कर्णः किं वा त्वं कुर्याः ?

द्रुतं काकमनुसरिष्यामि ।

अहो व्यामोहः ! प्रथमं तावद्धस्तपरामर्शेन विज्ञातव्यं परमार्थत एव कर्णौ नीतो न वेति ।

नहि नहि । न खलु तथाविधं प्रमादं कदापि पुनः करिष्यामि । ह्यः खल्वापणे केनचित् कथितम् तव कञ्चुककोषात् पञ्चरूप्यकसम्मितमर्थपत्रं प्रभ्रष्टमिति । मया प्रमादात् प्रथममेव कञ्चुककोषे न्यस्तो हस्तः ।

ततस्ततः ।

पञ्च रूपकाः प्रनष्टाः ।

कथमिव ?

दृष्टं मया कञ्चुककोषे स्थितमेवार्थपत्रम् । तद् दृष्ट्वा कथं वा भूगतितं निःस्वामिकमर्थपत्रमात्मसात् कुर्याम् ?

---

# नाथः

[ श्रीक्षितीशचन्द्रचट्टोपाध्यायः ]

मेघदूतसञ्जीवन्यां मल्लिनाथेनान्तरान्तरा नाथस्य नाम समुल्लिखितं प्रायेण च तन्मतं खण्डितम्। अयं नाथो दक्षिणावर्तनाथो वारुणगिरिनाथो वेदानीं विचार्यते।

प्रत्यासन्ने नभसीति चतुर्थश्लोकस्य सञ्जीवन्यां दृश्यते—नाथेन त्वत्र प्रत्यासन्ने मनसीति साधीयान् पाठः कल्पितः, प्रत्यासन्ने प्रकृतिमापन्ने सतीत्यर्थः। यस्तु तेनैव पूर्वः पाठविरोधः परिहृतः सोऽस्माभिराषाढस्य प्रथमदिवस इति पाठविप्लवसमाधानेनैव परिहृतः। इति।

दक्षिणावर्तनाथविरचिते मेघसन्देशप्रदीपे प्रत्यासन्ने मनसीति पाठ उपलभ्यते, व्याख्यानं च दृश्यते—प्रत्यासन्ने प्रकृतिस्थे मनसि चेतसि। ध्यानव्याकुलिते हृदये पुनः प्रतिष्ठिते सतीत्यर्थः। प्रत्यासन्ने नभसीति पाठे नभःशब्दः श्रावणमासवचनः 'नभः खं श्रावणो नभाः' इत्यमरसिंहवचनात्। तदा प्रस्तुतमाषाढं विहाय विलम्बनमयुक्तमिति मन्तव्यम्। किञ्च श्रावणमासे मासानन्यान् गमय चतुरो लोचने मीलयित्वेति वचनं स्यादयुक्तमिति। अन्ये त्वाहुः—नभःशब्दो वर्षर्तुवाचकः वर्षासमये समागते दयिता-जीविताल्म्बनार्थी स्वप्रवृत्तिं जीमूतेन हारयिष्यन्निति वर्षासमयात् प्रागेव तस्य चिन्तेति। तदप्यसङ्गतम्। इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे इति तात्कालिककार्यचिन्ता-निर्देशात्। इति।

[ दक्षिणावर्तेन मल्लिनाथेन चोभाभ्यामेवाषाढस्य प्रथमदिवस इति पाठः स्वीकृतः। ]

अत एवायं नाथो दक्षिणावर्तनाथ इति प्रतीयते ॥१॥

ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी
पुत्रप्रेम्णा कुवलयदलप्रापि कर्णे करोति।
धौतापाङ्गं हरशशिरुचा पावकेस्तं मयूरं
पश्चाददिग्रहणगुरुभिर्गर्जितैर्नर्तयेथाः ॥

इति ४५मश्लोकस्य सञ्जीवन्यां दृश्यते—नाथस्तु कुवलयदलक्षेपीति पाठमनुसृत्य क्षेपो निन्दापसारणं वेति व्याख्यातवानिति। दक्षिणावर्तस्य प्रदीपे दृश्यते—कुवलयदल-क्षेपीति पाठः। कुवलयदलनिन्दकमित्यर्थ इति।

अयं नाथोऽरुणगिरिनाथ इति प्रतिभाति ॥२॥

तामायुष्मन् मम च वचनादात्मनश्चोपकर्तुं
ब्रूया एवं तव सहचरो रामगिर्याश्रमस्थः।
अव्यापन्नः कुशलमबले पृच्छति त्वां वियुक्तः
पूर्वाभाष्यं सुलभविपदां प्राणिनामेतदेव ॥

इति ४०मस्य श्लोकस्य सञ्जीवन्यां दृश्यते—उपकारक्रियां प्रति कर्मत्वेऽपि तस्यानुकरोति [ तु० काव्यादर्शे २। ] इत्यादिवत् सम्बन्धमात्रविवक्षायाम् आत्मन इति षष्ठी न विरुध्यते। यथाह भारविः—सा लक्ष्मीरुपकुरुते यया परेषाम् [ कि० ७।२८ ], तथा श्रीहर्षश्च—

साधूनामुपकर्तुं लक्ष्मीं द्रष्टुं विहायसा गन्तुम्।
न कुतूहलि कस्य मनश्चरितं च महात्मनां श्रोतुम्॥

इति। तथा च क्वचिद् द्वितीयादर्शनात् सर्वत्र न तथेति नाथवचनमनाथवचनमेव। इति। अत्र सञ्जीवनी त्रुटितेति प्रतिभाति।

दक्षिणावर्तस्य प्रदीपे दृश्यते—आत्मनश्चोपकर्तुरिति पाठः। [ न पुनरात्मनश्चोपकर्तुमितीति हृदयम्। ] उपकर्तुरुपकारिणः। मम वचनाच्चायुष्मन् उपकारिणस्तव वचनाच्च तामेवं ब्रूया इत्यर्थः।

अरुणगिरिनाथमभिलक्ष्यैव मल्लिनाथेनोक्तमिति प्रतीयते। नूनं तेन व्याख्यातं स्यात्—अनुकरोतेः कर्मणि सर्वत्रैव द्वितीया दृश्यते, अत एवात्मनश्चोपकर्तुमिति पाठो हेय इति॥३॥

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
शेषान्मासान् गमय चतुरो लोचने मीलयित्वा।
पश्चादावां विरहगणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु॥

इति श्लोकस्य ( २।५० ) सञ्जीवन्यां मल्लिनाथेनोक्तम्—अत्र कैश्चिन्नभोनभस्ययोरेव वार्षिकत्वात् कथमाषाढादिचतुष्टयस्य वार्षिकत्वमुक्तम् इति चोदयित्वा ऋतुत्रयपक्षाश्रयणादविरोध इति पर्यहारि। तत्सर्वमसङ्गतम्। अत्र गतशेषाश्चत्वारो मासा इत्युक्तं कविना, न तु वार्षिका इति तस्मादनुक्तोपालम्भ इति। यच्च नाथेनोक्तं कथमाषाढादिचतुष्टयात् परं शरत्काल इति, तत्राप्या कार्त्तिकसमाप्तेः शरत्कालानुवृत्तेः परिणतशरच्चन्द्रिकास्वित्युक्तम्, न तु तदैव शरत्प्रादुर्भाव उक्त इत्यविरोधः। इति।

दक्षिणावर्तस्य प्रदीपे दृश्यते—मासानन्यान् गमय चतुर इति। आषाढमासादिकान् आश्वयुजमासान्तान् इत्यर्थः। नन्वाषाढस्य प्रथमदिवस इत्युक्तम्। आषाढश्रावणौ प्रावृट्। ततः परं शरदिति प्रसिद्धम्। तस्मात् कथमाषाढात्प्रभृति मासचतुष्टयात् परः शरत्काल इत्युक्तम्। उच्यते—ऋतूनां कल्पना द्विधा। केचित् षडृतव इति वदन्ति। अपरे त्रय इति। अत्र तावदृतुत्रयपक्षाश्रयेणोक्तम्। यथा श्रीरामायणे—चत्वारो वार्षिकाः प्रोक्ताः* गता वर्षशतोपमाः [ किष्किन्ध्या ३०।३ ] इति।

* "चत्वारो वार्षिका मासा गता वर्षशतोपमाः" इति रामायणे पाठः।

अत्र मल्लिनाथेन नाथ-शब्देन दक्षिणावर्तनाथो व्यपदिश्यत इति प्रतिभाति ॥४॥

हस्ते लीलाकमलमलके बालकुन्दानुविद्धं
नीता लोध्रप्रसवरजसा पाण्डुतामानने श्रीः ।
चूडापाशे नवकुरुवकं चारु कर्णे शिरीषं
सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् ॥२.२

अत्र प्रदीपः। हस्ते लीलाकमलमित्यत्र शरल्लिङ्गेन कमलेन शरत्कालस्य सन्निधिरुक्ता [?]। अलकं बालकुन्दानुविद्धमित्यपपाठः। अलकशब्दस्य पुंलिङ्गत्वात्। अलकाश्चूर्णकुन्तला इत्यमरः। अलके बालकुन्दानुवेध इति पाठः। अस्मिन् पाठे रीतिभङ्गश्च न भवति। कुन्देन हेमन्तसन्निधिरुक्तः। ननु निषिञ्चन् माधवीं वृत्तिं कुन्दशेषं च वर्धयन् [विक्रमोर्वशीये २.४] (लतां कौन्दीं च नर्तयन् इति मुद्रितविक्रमोर्वशीये पाठः।) इत्यत्र वसन्तात् प्राचीनस्य शिशिरस्य लिङ्गं कुन्दमिति प्रतीयते, कथं हेमन्तस्य लिङ्गमित्युक्तम्। उच्यते। हेमन्तशिशिरयोर्द्वयोरपि लिङ्गं कुन्दम्। हेमन्ते प्रादुर्भवति शिशिरे प्रौढीभवतीति विशेषः। अत एव बालकुन्दानुवेध इति बालशब्दः प्रयुक्त इति*।

एतदेवावलम्ब्य मल्लिनाथेन विलिखितम्—अलके कुन्तले। जातावेकवचनम्। अलकेष्वित्यर्थः। बालकुन्दैः प्रत्यग्रमाघ्यकुसुमैः अनुविद्धम्। अनुवेधः ग्रन्थनम्। नपुंसके भावे क्तः। यद्यपि कुन्दानां शैशिरत्वमस्ति माघ्यं कुन्दमित्यभिधानात्, तथापि हेमन्ते प्रादुर्भावः शिशिरे प्रौढत्वमिति व्यवस्थाभेदेन हेमन्तकार्यत्वमित्याशयेन बालेतिविशेषणम्। अलकमिति प्रथमान्तपाठे सप्तमीप्रक्रमभङ्गः स्यात्। नाथस्तु नियतपुंलिङ्गताहानिश्चेति दोषान्तरमप्याह, तदसत् "स्वभाववक्राण्यलकानि तासाम्" "निर्धूतान्यलकानि पाटितमुरः कृत्स्नोऽधरः खण्डितः" इत्यादिषु प्रयोगेषु नपुंसकलिङ्गतादर्शनाद् इति। अत्रापि नाथो दक्षिणावर्त एव ॥५॥

क्वचिद्दक्षिणावर्तस्य नामानुल्लेखपूर्वकं तस्य मतमुपनिबद्धं मल्लिनाथेन। तथाहि—वेणीभूतप्रतनुसलिलासावतीतस्य सिन्धुः [१.२९] इति श्लोकस्य सञ्जीवन्यां दृश्यते—तामतीतस्येति पाठमाश्रित्य सिन्धुर्नाम नद्यन्तरमिति व्याख्यातम्। किन्तु सिन्धुर्नाम कश्चिन्नदः काश्मीरप्रदेशेऽस्ति नदी तु कुत्रापि नास्तीत्युपेक्ष्यमित्याचक्षते। इति।

अत्र प्रदीपः—तामतीतस्येति पाठमनादृत्य सिन्धुरिति नद्यन्तरमुच्यत इति केचिद्

---

* ऋतुसंहारे वसन्तवर्णनेऽपि कुन्दस्योल्लेखो दृश्यते यथा—

कुन्दैः सविभ्रमवधूहसितावदातैरुद्योतितान्युपवनानि मनोहराणि।
चित्तं मुनेरपि हरन्ति निवृत्तरागं प्रागेव रागमलिनानि मनांसि यूनाम् ॥ इति।

वदन्ति। तदानीमर्थश्चापुष्टः*। अत्र देशे सिन्धुर्नाम कापि नदी नास्ति। काश्मीरेषु सिन्धुः प्रवहतीत्यनुसन्धयम्। इति ॥६॥

दीर्घीकुर्वन् पटु मदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः।
यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः॥

इति श्लोकस्य [ १।३१ ] सञ्जीवन्यां दृश्यते—प्रार्थनाचाटुकार इत्यत्र खण्डिता नायिकानुनीतेति व्याख्याने सुरतग्लानिहरणं न सम्भवति, तस्याः पूर्वं सुरताभावात, पश्चात्तनसुरतग्लानिहरणं तु नेदानीन्तनकोपोपशमनार्थचाटवचनसाध्यमित्युपेक्षैवोचिता विवेकिनाम्। ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायितेति दशरूपके।

अत्र प्रदीपः—अयमत्र समाधिः। कृतापराधः सुभगः प्रियतमः प्रातरेत्य स्वप्रेयसीवचनस्यावसरमवितरन्नेव पटु मदकलं स्ववचनं दीर्घीकुर्वन् पराङ्गनापरिभोगसुरभिगन्धः प्रेयसीं मदीयमपराधं क्षमस्वेति प्रार्थयमानश्चाटुकारी तस्याः पादपतनादङ्गानुकूलः सुरतालाभजनितां ग्लानिं यथा हरति तथा सिप्रावात इति।

एतस्माच्च स्पष्टमेव प्रतीयते दक्षिणावर्तस्यैव मतं खण्डितं मल्लिनाथेनेति॥६॥

त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे
तस्याः सिन्धोः पृथुमपि तनुं दूरभावात् प्रवाहम्।
प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टी-
रेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम्॥

इति श्लोकस्य [ १।४७ ] सञ्जीवन्यां मल्लिनाथेनोक्तम्—अत्रात्यन्तनीलमेघसङ्गतस्य प्रवाहस्य भूकण्ठमुक्तागुणत्वेनोत्प्रेक्षैवेयमितीवशब्देन व्यज्यते। निरुक्तकारस्तु तत्र तत्रोपमा यत्र इवशब्दस्य दर्शनम् इतीवशब्ददर्शनाद् अत्राप्युपमैवेति बभ्राम।

अत्र निरुक्तकारः कदाचिदरुणगिरिनाथः स्यात्? ॥७॥

तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणां
पक्ष्मोत्क्षेपादुपरिविलसत्कृष्णसारप्रभाणाम्।
कुन्दक्षेपानुगमधुकरश्रीमुषामात्मबिम्बं
पात्रीकुर्वन् दशपुरवधूनेत्रकौतूहलानाम्॥

अत्र मुद्रितसञ्जीवन्यां दृश्यते—कृष्णरक्तसिताः शारा† इति यादवः। ततश्च शारशब्दादेव

---

* चकारश्रवणादत्र किञ्चित् त्रुटितमिति प्रतिभाति। † एतच्च व्यक्तमेव प्रामादिकम्।

सिद्धे कार्ष्ण्ये पुनः कृष्णपदोपादानं कार्ष्ण्यप्राधान्यार्थम्। रक्तत्वं तु न विवक्षितम् उपमानानुसारात्, तस्य स्वाभाविकस्य स्त्रीनेत्रेषु सामुद्रिकविरोधात्, इतरस्याप्रसङ्गात् क्वचिद् भावकथनं तूपपत्तिविषयम् इति। अत्र दक्षिणावर्तस्य मतं खण्डितमिति प्रतिभाति। तथाहि दक्षिणावर्तेनोक्तम्—उपरिविलसत्कृष्णशारप्रभाणाम्। कृष्णरक्तसितः शार इति यादवप्रकाशेन शारशब्दो वर्णत्रयसाङ्कर्यवाचको यद्यपि, अत्र पृथगेव कृष्णसारपदोपादानात् शारशब्दः सितरक्तवर्णयोः साङ्कर्ये सङ्कुचितवृत्तिः। तथा श्रीरामायणप्रयोगश्च विद्यते—'कृष्णशारे विलोचने' इति। सप्तशत्यां च 'एको विकालशारो न देइ' इति ॥८॥

आसीनानां सुरभितशिलमिति श्लोकं व्याचक्षाणेन दक्षिणावर्तेनोक्तम्—कामपि वधूं भुक्त्वा तस्या एव जन्मगृहे गन्धादिभिः श्रममपहरतो जामातुः कान्तिरत्र ध्वन्यत इति। तस्याः प्रभवमित्यादिना हिमाद्रौ मेघस्य वैवाहिको गृहविहारो ध्वन्यत इति मल्लिनाथवचनेऽस्यच्छाया स्फुटैव ॥९॥

तान् कुर्वीथास्तुमुलकरकावृष्टिपातावकीर्णान् [ १।५७ ] इति श्लोकस्य व्याख्यायां दक्षिणावर्तेनोक्तम्—करको घनोपलः। घनोपलस्तु करक इति यादवः। करकाणाम् आ वृष्टिः समन्ताद् वृष्टिपात इति। एतदेवाभिलक्ष्य मल्लिनाथेनोक्तम्—'यदत्र घनोपलस्तु करकः' इति यादववचनात् करकशब्दस्य नियतपुंलिङ्गताभिप्रायेण करकाणाम् *आ वृष्टिरिति केषाञ्चिद् व्याख्यानं तदन्ये नानुमन्यन्ते। "वर्षोपलस्तु करका" इत्यमरवचनव्याख्याने क्षीरस्वामिना 'कमण्डलौ च करकः सुगते च विनायकः' इति नानार्थे पुंस्यपि वक्ष्यतीति वदतोभयलिङ्गताप्रकाशनात्। यादवस्य तु पुंलिङ्गताभिधाने तात्पर्यं न तु स्त्रीलिङ्गतानिषेधे इति न तद्विरोधोऽपि।

करकस्तु करङ्के स्याद्दाडिमे च कमण्डलौ।
पक्षिभेदे करे चापि करका तु घनोपले ॥

इति विश्वप्रकाशवचने तूभयलिङ्गता स्पष्टैवेति न कुत्रापि विरोधवार्ता। अत एव रुद्रः—'वर्षोपलस्तु करका करकोऽपि च दृश्यते' इति ॥१०॥

सङ्कल्पन्ते स्थिरगणपदप्राप्तये श्रद्दधानाः इत्यत्र सञ्जीवनी—क्लृपेः पर्याप्तिवचनस्यालमर्थत्वात् तद्योगे नमःस्वस्तीत्यादिना चतुर्थी। अलमिति पर्याप्त्यर्थग्रहणमिति भाष्यकार इति। अस्य च मूलम्—नमःस्वस्तिस्वाहास्वधालमिति सूत्रे त्वलंशब्दस्यार्थग्रहणात् पर्याप्तिवाचिनः कल्पिधातोर्योगे स्थिरगणपदप्राप्तय इति चतुर्थीनिर्देशः। इति दक्षिणावर्तवचनम्। वस्तुतस्त्वलमिति पर्याप्त्यर्थग्रहणमिति तत्सूत्रगतं द्वितीयं वार्त्तिकम् ॥११॥ ( क्रमशः )

* मुद्रितपुस्तकेषु अवृष्टिरिति पाठः प्रामादिकः।

# रसमञ्जरी

[ श्रीक्षितीशचन्द्रचट्टोपाध्यायः ]

आचार्यः। वत्स सन्तोष! संपाठः पठ्यताम्।

सन्तोषः। (पठति)

तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नासौ मुनिर्यस्य मतं न भिन्नम्।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः॥

आचार्यः। तर्कशब्दस्याङ्गलभाषायां किं वा रूपम्?

छात्राः सर्वे तूष्णीं तिष्ठन्ति।

आचार्यः। अरे, एतदपि न ज्ञायते। पाश्चात्यैरस्माकं तर्कशब्दः talk रूपेण विपरिणमितः।

सन्तोषः। आर्य तर्के रेफो वर्तते talk शब्दे तु नास्ति।

आचार्यः। अरे अनड्वन्, talk शब्दे लकारो वर्तते, रलयोरभेदश्च सर्वेषामेव सम्मतः।

आशुतोषः। आर्य! शाब्दिकानां मतेन tell, tale, talk एते सनाभयः। तर्कशब्दस्तु सर्वथा विभिन्न एव। संस्कृततकारः कारणविशेषमन्तरेणाङ्गलभाषायां थकारो भवति, ककारश्च प्रायेण हकारः। संस्कृततर्कशब्दस्तर्कुशब्दश्च दायादौ। तर्कयतिरावर्त्तयति-समानार्थकः।

आचार्यः। अरे किं वा वृथा प्रलपसि? talk-तर्कयोः शब्दगतमर्थगतञ्च सादृश्यं वर्तते, तथापि तयोः सम्बन्धं न प्रतिजानीषे।

दधि हस्ते दधि पात्रे दधि सर्वत्र दीप्यते।
तथापि रौति वैधेयः क्व दधि क्व दधीति च॥

परितोषः। आर्य, Tucker महोदयेनोच्यते—A sound etymology has nothing to do with sound समीचीननिर्वचनस्य शब्देन सह लेशतोऽपि सम्बन्धो नास्तीति।

आचार्यः। अरे मूढ! किं वा Grimm वा Tucker वा जानाति? पाणिनिकात्यायनपतञ्जलीनां पुरतस्ते कीटानुकीटाः। प्रत्यक्षस्यापलापो वचनशतैरपि कर्तुं न पार्यते।

———

# श्रीज्ञानेश्वरचरितम्

[ पं० क्षमादेव्या विरचितं, नाटकीकृतं सौ० लीलया ]

## प्रस्तावना

सूत्रधारः । विज्ञापयाम्यार्यमिश्रान् । यदद्य श्रीज्ञानदेवचरिताख्यां सौ० क्षमाराव-पण्डितारचितामन्तिमां कृतिं नाट्यरूपेण सविनयं सादरं प्रयोक्तुमुद्यता वयम् । तदभ्यर्थये महानुभावान् ।

वैराग्यवृत्तिं विमलां विवेक-जन्यां कुमारस्य मुदा विलोक्य ।
मन्येऽन्वहं प्रेमरसेन सिक्तः श्रीत्र्यम्बकेशोऽवततार वंशे ॥१॥
यदृच्छयाऽऽलन्दिपुरेऽस्य यूनो न स्वेच्छया वाऽभवदागमोऽस्मिन् ।
परं नियन्ता जगतः परेशः प्रावर्तयत्तत्पदमत्र नूनम् ॥२॥

अपि च । पुरस्तनी तुङ्गतरङ्गमाला पश्चात्समेष्यत्प्रचलोरुवीचेः ।
दातुं हि पर्याप्तमावकाशं सवेगमग्र प्लवते पयोधौ ॥३॥

वन्द इमान् कविप्रवरान् महाराष्ट्रललामभूतान् ये ज्ञानदेवमहिमानं गायन्तः स्वसुरभिगाथामाल्यचयेन शुचितामापादयन्ति दिशः । नामदेवमहाभागः, महापति-महोदयः, निरञ्जनमहानुभावाः, पं० क्षमादेवी च ।

### दृश्यम्

आलन्दिपुरस्य वार्षिकयात्रा दृश्यते । सुमण्डितशिविकास्थापितां ज्ञानेश्वरस्य मूर्तिं वहन्तो हस्तप्रोज्ज्वलद्दीपा यात्रिका मन्दं मन्दं गच्छन्तः प्रोच्चैर्मङ्गलश्लोकान् गायन्ति ।

समचरणसरोजं सान्द्रनीलाम्बुदाभं
जघननिहितपाणिं मण्डनं मण्डनानाम् ।
सुतरुणतुलसीस्रक्कन्धरं कञ्जनेत्रं
सदयधवलहासं विट्ठलं चिन्तयामः ॥२॥

( नामदेव-निरञ्जन-महापतिकविभिः सहिता प्रसन्नानना प० क्षमाराव प्रविश्य )

क्षमा० । यः षड्वर्षशतानि भूरि महितो विद्वद्भिरज्ञैस्तथा
साक्षाद् विष्णुरिवावतीर्ण इह यो ज्ञानेश्वरो ज्ञानिराट् ।
धृष्णोम्यल्पमतिस्तदीयचरितं गातुं विमोहादहं
संस्प्रष्टुं डयनोद्यतेव चटका तारापथे भास्करम् ॥३॥
नातिक्रान्तकुमारभाव इह यो वेदाङ्गपारङ्गतो
लोकेभ्योऽविकलां च भक्तिपदवीं निर्दिष्टवान् योऽमलाम् ।

यत्काव्यामृतनिर्झरेण मुदितो विद्यातृषार्तो जन-
स्तस्याहं सुमहात्मनः कृतिततीः ख्यातुं प्रवृत्तादरात् ॥४॥

नामदेवः। अहो! विलक्षणं खलु यद् अद्यावधि—

एकादश्यां शुभतमतिथौ शुक्ल आषाढमासे
वर्षे वर्षे सुमहितमुने ज्ञानदेवस्य मूर्तिः।
भास्वद्रत्नोत्खचितशिबिकास्थापिता हस्तदीप-
दीप्ताऽऽलन्द्याः पथि किल नतैः पूज्यते लोकवृन्दैः ॥५॥

महापतिः। स्मरामि खलु।

गोदापगायां दिशि दक्षिणस्यां ग्रामोऽस्त्यपेगांव इति प्रतीतः।
स्थितश्चिरात्पैठनपल्लितोऽष्टक्रोश्या अदूरे लघुलोकसंख्यः ॥६॥
ग्रामेऽभवत्कोपि समृद्ध एको द्विजातिवंशः परिशुद्धशीलः।
क्षेत्रायसंप्राहकवृत्तिरासीद्यस्योर्जिता पूर्वपरम्परातः ॥७॥
प्राग्जन्मपुण्यात् स च विट्ठलाख्यो ज्ञानेश्वरस्योद्भवहेतुरासीत्।
निशम्य यज्जीवनदैन्यवार्तां को नु द्रुतो नाहतमानसः स्यात् ॥

नाम०। नूनम्। वैराग्यवृत्तिः स च जन्मतोऽभूत्।

अन्धं न वैराग्यमभूत्तु तस्य संशुद्धभावस्य विवेकदृष्ट्या।
अल्पेन कालेन च देववाणीप्रवीण आसादितसर्वविद्यः ॥८॥
तीर्थाटनं दिक्षु चिकीर्षुरेष पित्रोरनुज्ञां विनयाद्ययाचे।

क्ष०। गायत्र्युपादिश्यत योग्यकाले विधिज्ञपित्रोपनयक्रियायाम्।
कल्पद्रुकल्पा निजबालकाय सप्ताब्दकल्पाय महीसुराणाम् ॥९॥

पटीक्षेपः

———

## प्रथमं दृश्यम्

आलन्दीपुरम्। कियत्कालो व्यतीतः। पण्डिताक्षमानामदेवादयः स्वस्वग्रन्थान् विरचयन्तः पठन्तश्च दृश्यन्ते। विदूराद् युवा विट्ठलो नद्यास्तीरे पाठमग्नः प्रतीयते। ग्रामीणाश्च स्वस्वकर्मणि निरताः।

क्ष०। गोदापगायां विहिताभिषेकः स्वप्नेऽपि नातर्कयदात्मजो मे।
संस्थापयेद्भागवताख्यधर्मं तटे समाधिर्भवितास्य चेति ॥१॥

महापतिः। स विट्ठलोऽथ स्थिरचेतसात्र प्रतिक्षणं श्रीहरिमीडमानः।
इन्द्रायणी-निर्झरिणीतटस्थां प्रापद्यतालन्दिपुरीं प्रशस्ताम् ॥२॥

वाम० । भाविप्रसङ्गाङ्कुरकृत्क्षणेऽस्मिन् यदापगाया जलमस्पृशत्सः ।
तदा व्यजानात्किमयं कुमार आगाम्यसह्यं निजकष्टजातम् ? ॥४॥

( सिद्धोपन्तः प्रविशति, विठ्ठलं वीक्ष्य विस्मितः प्रतीयते । ततश्च स्वगृहं नयति । समकालश्च निरञ्जनकवि र्ब्रूते— )

निरञ्जनः । कालेऽथ तस्मिन् पुरमध्युवास कश्चित्सिधोपन्त इति द्विजेन्द्रः ।
क्षेत्रायसंग्राहकसिद्धवृत्तिर्विद्याप्रियश्चाभिमतो जनस्य ॥६॥

सिद्धोपन्तः । ( विठ्ठलं प्रति ) उद्भासतां भासुरतेजसाऽलं गेहं मदीयं भवतः कुमार ।

विठ्ठलः । ओम् । अनुगृह्वीतोऽस्मि खलु । ( इति सिद्धोपन्तविठ्ठलौ निष्क्रान्तौ )

पटीक्षेपः

---

## द्वितीयं दृश्यम्

कतिचिद्दिनानन्तरम् । सिद्धोपन्तस्य गृहस्य प्राङ्गणे विठ्ठलः प्रसुप्तः । प० क्षमादयः कवयः स्वस्वग्रन्थरचनायां व्यापृता दृश्यन्ते । ( विठ्ठलस्य कुलदेवता प्रविश्य )

कुलदेवता । भो ब्रह्मचारिन् विसृज व्रतं ते निर्दिष्टबाला गृहिणी परेद्युः ।
गृहाण तत्पाणिमियं हि सूनोर्विश्वेश्वरांशस्य भवेत्सवित्री ॥१॥
अस्या हि कुक्षेर्भविताऽऽत्मजो यस्तं त्वत्कुलोद्धारकमेव विद्धि ।
प्रकाशयेद्यो निबिडान्धकारनिमग्नविश्वं निजतेजसैव ॥२॥

( इति निष्क्रान्ता )

( विठ्ठलः शनैः शनैरुत्थाय प्रहृष्टो मन्दं मन्दं निष्क्रान्तः । खगानां प्रदोषकाल-कलकलः श्रूयते, इन्द्रायण्यास्तरङ्गकल्लोलरवश्च । )

क्ष० । अथाचिरान्मङ्गलवासरेऽयं सुमङ्गलो विठ्ठलरुक्मिणीभ्याम् ।
वरस्य पित्रोर्न सतोर्विवाहो वध्वाः पितृभ्यां निरवर्ति हर्षात् ॥३॥
ततो दिदृक्षुः पितरौ कुमारो न्यवेदयत्स्वश्वशुराय हेतुम् ।
लब्ध्वाश्वनुज्ञां च सहात्मवध्वाऽऽपेगांवमात्मीयमयात्स शीघ्रम् ॥४॥

पटीक्षेपः ।

---

## तृतीयं दृश्यम्

कानिचिद् वर्षाणि व्यतीतानि । रामानन्दमुनिरालन्दिपुरे यात्राश्रमाद् विश्राम्यन् दृश्यते । तद्दर्शनाय ग्रामीणास्तत्र सम्मिलिताः कोणे च पूर्ववत् कविचतुष्टयं स्वकृतिरचनापरम् उपविष्टम् । मुनिमुपेत्य नतानना कृताञ्जलिश्च रुक्मिणी दृश्यते ।

रामानन्दः। प्रसूर्भवापूर्वसुतस्य भद्रे !

रु०। (निश्वस्य) कथं भवद्वाग् भविता नु सत्या ?

त्यक्तास्मि भर्त्रा सुचिराद् गृहीत-संन्यासदीक्षेण गतेन काशीम् ॥१॥

रा०। सविस्तरं ब्रू हि कथां सति स्वां तवाश्रयः को न्विति कथ्यतां मे।

( लज्जान्विता रु० तूष्णीमास्ते )

क्ष०। मुने ! व्यतीतासु समास्वपत्यं जायापतिभ्यां भृशमिष्यमाणम्।
नाजायताद्यापि निराशया तौ विषादमत्यन्तमथाऽलभेताम् ॥२॥
पराङ्मुखो विट्ठल ऐहिकेभ्यश्चिरात्सुखेभ्यः स्थिरमानसोऽभूत्।
क्रमेण तुर्याश्रमसंश्रयाय समुन्मुखं तस्य मनो बभूव ॥३॥

नाम०। स स्वाद् गृहस्थाश्रमतो मुमुक्षुर्विसृष्टतर्षों विषयेऽवतस्थे।
संन्यासदीप्तातिसुनिश्चितात्मा वाराणसीं यातुमियेष तीव्रम् ॥४॥

निर०। फणी यथा जाङ्गलिकाद्विमुक्तो द्रुतं द्रवत्येव यथा च कीरः।
अपास्ततः पञ्जरतो डयेत तथा च स त्यक्तगृहः प्रतस्थे ॥५॥

महापति०। ( रुक्मिणीं निर्दिशन् )
सा नैव दुःखस्य वशंगताऽभूच्चिकीर्षमाणाऽऽत्ममनः कृतार्थम्।
तीव्रं तपस्त्वाचरितुं प्रवृत्ता प्रियेन्दुभालेव हिमाद्रिकन्या ॥६॥
कृताभिषेकोषसि निर्झरिण्याः पूताम्भसि ध्यानपरा सदैव।
ततोऽभितोऽश्वत्थतरुं व्यधात्सा प्रदक्षिणं नाम हरेर्जपन्ती ॥७॥

रा०। (आत्मगतम्) काश्यां स्थितेन व्रतिनैव भाव्यं भर्त्रा युवत्या इति तर्कयामि।
संन्यासमङ्गीकुरुते पुमान् यो विहाय दारान् सुतरां स निन्द्यः ॥८॥

(सखेदम्) यस्मै मया द्वादशवर्षतः प्राक् संन्यासदीक्षा तरुणाय दत्ता।
न दोषभाक् केवलमेष नष्टं ममापि पुण्यं तपसार्जितं यत् ॥९॥

पटीक्षेपः

---

## चतुर्थं दृश्यम्

केचित्सप्ताहा व्यतीताः। खिन्नं सपरिवारं विट्ठलं निन्दन्ति लोकाः। पूर्ववत्त्व कविचतुष्टयं स्वस्वग्रन्थविरचनपरं दृश्यते।

विठ्ठलः। ( प्रविश्य ) अभिवादये महानुभावान्।

ग्रामीणाः। ( साट्टहासं ) विहाय वैराग्यपथं प्रसक्तो भोगेषु तेनैव तु निन्दितोऽसि।

कवयः। मा मैवम्, जानीथ गुरुणैवादिष्टः प्रतिनिवृत्तोऽसौ निवृत्तिमार्गात्।

ग्रा०। कथमिव ?

क्ष०। स्मर्यते खलु। विहाय रामेश्वरतीर्थयात्रां यतिर्युवत्या च समं पितृभ्याम्।
सद्यः स आलन्दिपुरात्प्रतस्थे वाराणसीमागमदप्यकस्मात् ॥१॥
चैतन्यविश्राममुपेत्य तावन्निर्भर्त्सयामास गुरुस्तमुग्रः।
"गृहाण साध्वीं सहधर्मिणीं त्वां सद्यो निवर्तस्व गृहाश्रमं च ॥"२॥

ग्रा०। तथाप्यतिनिन्द्यं खल्वेतत्।

नाम०। "निन्दास्तुती यस्य समे समेऽतिप्रियोऽस्ति" पूर्वं भगवानगायत्।
तदुक्तिसारानुगतौ प्रभोस्तौ प्रियावभूतामिति किं विचित्रम् ॥३॥
निरूपयन्दीर्घतपो हि पत्न्याः पत्युश्च सत्यादिगुणानपूर्वान्।
पूतात्मनोर्वंशमलञ्चकार ज्ञानेश्वरो देववरो हि साक्षात् ॥४॥
'भ्रष्टो हि योगात्सदने शुचीनां सञ्जायते' यत्प्रभुणेरितं प्राक्।
कर्तुं तदन्वर्थमहो कुलेऽस्मिन् गृहीतजन्मा किमभूत्स योगी ? ॥५॥

पटीक्षेपः

---

## पञ्चमं दृश्यम्

दशाब्दा अतिक्रान्ताः। चत्वारो बालकाः क्रीडन्तो दृश्यन्ते। ग्रामीणास्तान् दृष्ट्वा विस्मयं नाटयन्ति। विठ्ठलो भिक्षां याचति। कविचतुष्टयञ्च यथावत्कोण उपविष्टम्।

ग्रा०। (सकौतुकम्) के एते बालाः ? दृश्यताम्—
विस्तवरप्रोज्ज्वलतेजसाऽलं सौदार्यसोदर्यचतुष्टयं तत्।
दिशश्चतस्रोऽपि पुरस्य नूनं प्रकाशयन्ति प्रभयेव सूर्यः ॥१॥

क्ष०। ज्ञायतां सौम्याः !
षडब्दकाले सुषुवे चतुष्कं सा रुक्मिणी दिव्यरुचां शिशूनाम्।
ज्ञानेश्वरात्पूर्वमभून्निवृत्तिः सोपानदेवस्तनयस्तृतीयः ॥२॥
ततः कनिष्ठा दुहिता मनोज्ञा ललामभूता भुवि योगिनीनाम्।
मालिन्यदोषात्सततं विमुक्ता मुक्ताभिधा मौक्तिकशुद्धकान्तिः ॥३॥

नाम०। (विठ्ठलं निर्दिशन्) दयनीयोऽसौ खलु।
भ्रंशाद्यतित्वस्य स विठ्ठलो द्राग् बहिष्कृतो विप्रजनैः कथंचित्।
आश्वासितो वृद्धजनैरभीक्ष्णं व्यचिन्तयत्त्वात्मदशां भवित्रीम् ॥४॥

निर०। दिवं गतेऽथ श्वशुरे वराका मित्रैर्विहीना विपदाभिभूताः।
तिरस्कृताः पौरजनैश्च नित्यं नयन्ति कालं भृशदुःखमग्नाः ॥५॥
पुरेऽथ भिक्षान्नमुपार्ज्य कृच्छ्रान्निर्वाहयत्येव कुटुम्बरक्षाम्।
अध्यापयज्ज्येष्ठसुतौ स यावदुभावभूतां च वहुश्रुतौ तो ॥६॥

---

## षष्ठं दृश्यम्

( कश्चित्कालः समतिक्रान्तः। बालकावेकाग्रमनसा पठतः। विठ्ठलश्च द्विजानुपेत्य तेषां पादमूले पतति। )

वि०। कालेन पुत्रोपनयक्रियायै सम्प्रार्थये पूज्यपुरोहितान् वः।

पुरोहिताः। ( सकार्कश्यम् )
संन्यासिपुत्रोपनयक्रियां नः शास्त्रं न चैवास्त्यनुमोदमानम् ॥
संत्यक्तसंन्यासपदस्य पूर्वं तवात्मजा नोपनयक्रियार्हाः ॥१॥

विठ्ठलः। (सगद्गदम्) अत्याजि संन्यासपदं निदेशाद् गुरोर्मया नैव रताभिलाषात्।
पितुश्च दोषान्न हि दण्डनीया निरागसो हन्त तदीयपुत्राः ॥२॥
तद् ब्रूत मे पातकनिष्कृतिः स्यात् कथं विशुद्धिश्च पुनर्भवेन्मे ?
पुत्राश्च मे कश्मलतो विमुक्ताः संमानिताः स्युर्द्विजमण्डलेन ॥३॥
( इति साष्टाङ्गं भूमौ पतति )

पुरोहिताः। तच्छ्रूयतां नात्मविनाशतोऽन्यस्त्वद्दुष्कृतेर्निष्कृतिमार्ग इष्टः।

वि०। विधास्यतेऽवश्यमयं निदेश इतीह नम्रो विनिवेदयामि ॥४॥
मन्ये तथा प्राणविसर्जनान्मे विप्रा भवेयुर्ह्यनुकम्पमानाः।
चिकीर्षणाऽहो प्रियमात्मजानां प्राणा ह्युपेक्ष्याः सुतवत्सलेन ॥५॥
( इति खिन्नवदनः सभार्यो निष्क्रान्तः )

क्ष०। अथ तनयहितेच्छू रुक्मिणीविठ्ठलार्यौ
विहितचरमयात्रौ प्रापतुः प्राक् प्रयागम्।
तदनु यमभगिन्याः संगमे जह्नुपुत्र्या-
स्तृणमिव सलिलेषु प्रास्यतां स्वस्वदेहम् ॥६॥

पटीक्षेपः।

---

( कविचतुष्टयं पूर्ववदुपविष्टम्। मधुरखगरवः श्रूयते। बालका उत्थाय पितरौ

क्ष० । विलोक्य गीतां शयनान्तिके विभो निबद्धचीनांशुकचारुखण्डकाम् ।
प्रकल्पितार्थं जनकेन यत्पुरा व्यतर्कयज् ज्ञाननिधिस्तदञ्जसा ॥१॥

ज्ञा० । निराश्रयानात्मभवान् विहाय नः किं नाम सद्यः पितरौ तिरोहितौ ?
सुतप्रियौ तौ वद साम्प्रतं विभो ! व्रजेम कुत्राशरणाः कमाश्रयम् ॥२॥

निवृत्तिः । प्रकल्पितं यद्धि शुभाशुभं पुरा जगद्विधात्राऽपरिहार्यमेव तत् ।
न युज्यतेऽतः परिदेवितुं मुधा विचिन्तनीयं हि विधेयमद्य नः ॥३॥

( इति निष्क्रान्तौ )

नाम० । गृहाद् गृहं द्वावपि पर्यटन्तौ दीनात्मना भैक्ष्यमयाचिषाताम् ।
बालद्वयं चापि गृहे विमुक्तं स्मृत्वा स्वपित्रोर्बहु रोदिति स्म ॥४॥

महा० । निजाप्तसन्दर्शनलिप्सयाऽऽपेग्रामं क्रमात्प्रस्थितवन्त एते ।
गृहप्रवेशे पितृपातहेतोस्तदा निरुद्धाः स्वजनैरसद्भिः ॥५॥

निर० । न केवलं रिक्थममीभिराददे पितुर्निकाय्योऽपि तदाऽऽत्मसात्कृतः ।
तथाप्यखिन्नाः समुदाः सहोदरा जगत्समग्रं स्वगृहं हि मेनिरे ॥६॥

क्ष० । ज्ञानेश्वरेणाभिहितं स्वकाव्ये यद्विश्वमेतन्निलयो ममेति ।
मन्येत योऽतिस्थिरमानसोऽस्य न जातु केनापि मनोविषादः ॥७॥

पटीक्षेपः

---

## सप्तमं दृश्यम्

[ कानिचिद्वर्षाणि व्यतीतानि । कविचतुष्टयं ज्ञानदेवस्य कथां यथा नु पूर्वं कथयन्ति पटवश्च पाठमग्नाः प्रतीयन्ते । ]

क्ष० । ज्ञानेश्वरो यश्च धरावतीर्णो देवः स्ववर्णाश्रमधर्मरक्षी ।
वर्णाग्रजस्येष्टतमं व्यजानान्मनस्विमान्यो व्रतबन्धनं सः ॥१॥
गीतोपदिष्टा हरिणा पुरा या क्षमाय लोकस्य कृपाकरेण ।
तस्या रहस्यं विशदीकरोति ज्ञानेश्वरी नाम निबन्धरत्नम् ॥२॥

ज्ञा० । श्रुतेर्मतं मान्यमसंमतं हि वा निराकृतिस्तस्य हि दुश्शका बुधैः ।
रुषा तडिल्लिम्पति न त्विषांपतिं सुवर्णतामेति न मृत्तिका क्वचित् ॥
आवश्यकैवोपनयक्रिया भवेद् द्विजात्मजस्येति पुनर्ब्रवीम्यहम् ॥३॥

निवृत्तिः । निवेदयाम्यद्य मदीयचेतसि कुलस्य वर्णस्य न वा विचिन्तनम् ।
गुणागुणातीतमिह स्थितं हि यत् स्वरूपमाद्यं मयि तत्परात्मनः ॥४॥

अवाप्तनैसर्गिकभक्तिवर्त्मनोः कुलं हि पित्रोर्हरिदीक्षया शुभम् ।
अपेक्षते न व्रतबन्धपूर्वकैरनेकसंस्कारचयैर्हि निष्कृतिम् ॥५॥

सोपान० । दुर्वाससोऽगस्त्य-वसिष्ठकण्वमहर्षिवृन्दस्य च वंशमूलम् ।
को नाम जानाति तथास्मदीयं कुलं चिरावस्थितविस्मृतं यत् ॥६॥
अस्मद्विधैर्भक्तिपथेन नेय आयुष्क्रमः सार्थकजन्मभिर्हि ।
मग्नान्तरङ्गान् हरिपादपद्मे नास्मान् स्पृशेत् क्वापि हि जातिबन्धः ॥७॥

( बालका निष्क्रान्ताः )

क्ष० । जनानां दृष्ट्वा तद्यदपि शिशुवृन्दं लघुवयः
परं लोकातीतं समजनि जनन्या उदरतः ।
शुचीभूतं तीर्थामलतमजलस्नानविधिना
प्रतस्थे दीर्घाध्वश्रममविगणय्य प्रतिपुरम् ॥८॥

पटीक्षेपः

———

## अष्टमं दृश्यम्

[ कविचतुष्कं ज्ञानेश्वरवृत्तान्तं कथयति यथा नु पूर्वम्, ग्राम्याश्च कथां शृण्वन्ति। देवमन्दिरमहाङ्गने पुरो विप्रमण्डलं दृश्यते। इष्टफललाभहेतोर् बालवृन्दं तत्समीपे सादरमुपसर्पति। निजचरित्रशंसि शुद्धिपत्रं दर्शयति।

निवृत्तिः । ( आत्मगतम् ) न चर्मणो न रक्तस्य न मांसस्य न मेदसः ।
प्राणस्य नात्मनो जाति व्यवहारोऽपि कल्पितः ॥

( ब्राह्मणान् प्रति) आगतोऽस्मि भवतां पुरोऽनुजैः प्रार्थयेऽत्रभवतां सहायताम् ।
आर्यवृन्द ! मयि सानुजे कृपादृष्टिरद्य भवता निपात्यताम् ।
अस्मदीयगुरुणा चिराद् भृशं साध्यतां द्विजवरा यदीप्सितम् ॥

सभापतिः । (शुद्धिपत्रमादाय वाचयति ततः सखेदं)
हन्त भो उपनयक्रियाविधिर्न श्रुतावनुमतो भवादृशाम् ।
शोच्यमेतदनघाऽपि सन्ततिस्तातदोषवशतोऽभिदण्ड्यते ॥
निष्कृतेरिह न हन्त साधनं विद्यतेऽपि भवतां विशुद्धये ।
स्थीयतां तदिह भोः कुमारका रामचिन्तनपरैर्निरन्तरम् ॥
मोच्यतां हृदिह मोहबन्धनादर्च्यतां च हरिपादनीरजम् ।
ज्ञायतां हरिवशं चराचरं स्थीयतां चिरमचञ्चलेन्द्रियैः ॥

ईशरूपमवलोक्य देहिषु ब्राह्मणे शुनि खरेऽन्त्यजेऽथवा ।
वन्द्यतां नतशिरोभिरादरात्प्राणिनां समुदयोऽखिलो भुवि ॥

प० क्ष० । श्रीहरिं हृदि निरन्तरं स्मरत् तत्कुमारकचतुष्टयं बभौ ।
पूर्वजन्मकृतपुण्यवह्निना दग्धसर्वविषयाभिलाषकम् ॥

ज्ञा० । चण्डसूर्यकिरणैर्न ताप्यते न प्रभञ्जनशतैश्च चाल्यते ।
क्लेद्यते न च पयोमुचां चयैर्निर्विकारमनिशं नभस्तलम् ॥

निवृत्तिः । अन्तिमाद् द्विजकुलस्य निर्णयान्निष्ठुरादपि न तप्तमानसम् ।
माननीयगुरवो भवद्वचः साधु साधु बहु मान्यते मया ॥

ज्ञा० । मान्यमेव भवतां वचः सदा ब्रह्मचर्यनियमोज्ज्वलप्रभम् ।

द्विजः । ( सकुतूहलम् ) ब्रूत युष्मदभिधानतोऽञ्जसा बोध्यमर्थमधुना पृथक् पृथक् ॥

निवृ० । नाम्ना निवृत्तिरहमस्मि भवान्निवृत्त आस्वादये सुखसुधामिह राजयोगे ।

ज्ञा० । ज्ञानी समस्तनिगमेषु च कालवेत्ता तज् ज्ञानदेव इति मां गुरुराजुहाव ॥

सो० । सोपान इत्यभिधया विदितोऽस्मि भक्तिसोपानपङ्क्तिमधिरुह्य दिवं यियासुः ।

मुक्ता० । मुक्ताऽहमाविरभवं जगतो विमुक्तेर्मार्गं प्रदर्शयितुमेव परेशशक्त्या ॥

( सभाजनो विस्मयं नाटयति । महिषस्तत्काले च नयनगोचरो भवति । )

एकः । ब्रूत भो ह्यभिधया नु किं यया विश्रुतोऽस्ति मनुजोऽथवा पशुः ।
पश्यतैष महिषो बहिर्जनैर्ज्ञानदेव इति कथ्यतेऽखिलैः ॥

ज्ञा० । नास्ति कश्चिदपि भेद आवयोरात्मनो ध्रुवमिति ब्रवीमि वः ।
आत्मनो वपुषि भासते प्रतिबिम्बनं दिनमणेर्घटे यथा ।
चक्रपाणिरपि सर्वदेहिषु व्यापकः सकलविश्वगश्च सः ॥
आकृतिस्तदपि तस्य वस्तुतो ज्ञानिनो भवति दृष्टिगोचरा ।
कारणे स्थिरदृशो हि मानसं बध्यते न खलु कार्यदर्शने ॥
बिम्बं निदानं प्रतिबिम्बकस्य वनस्पतेर्बीजमिवाङ्कुरस्य ।
यथा सुवर्णं च विभूषणानां यथा पटस्यापि च तन्तुसङ्घः ॥

क्ष० । समस्तविश्वं च यदन्तरोतप्रोतं गतं तन्मयतां हि भूतैः ।
अतीन्द्रियेष्वप्युपलब्धदृष्टिः पशोर्ददर्शात्मनि साम्यमेषः ॥

ना० । दृश्यतां ! यावद् द्विजेनास्तघृणं प्रहारो दण्डेन चक्रे महिषस्य पृष्ठे ।
सुस्राव तावद् रुधिरप्रवाहो ज्ञानेश्वरस्य क्षतपृष्ठदेशात् ॥

( इति बालसहितः पथि गच्छति द्विजस्ताडनं नाटयति )

सर्वे । (चकिताः) अहो ! विलक्षणमेतद् । अपूर्वदृश्यमिदम् !

ज्ञानेशो भगवान् विष्णु र्निवृत्तिर्भगवान् हरः।
सोपानो भगवान् ब्रह्मा मुक्ताख्या ब्रह्मणः कला॥

पटीक्षेपः

---

## नवमं दृश्यम्

( कानिचिद्दिनानि व्यतीतानि। ज्ञानेश्वरं दिदृक्षवो वृन्दश आगच्छन्ति लोकाः। बालाः पाठमग्ना दृश्यन्ते। तेषां समीपे महिषस्तिष्ठति। स्वपंगुडिम्भमानीय कश्चिद् ग्रामीणो ज्ञानेश्वरं प्रार्थयते। )

ग्रा०। भो दिव्यबाल! कुरु मे पुत्रकं गतिशीलम्। ( ज्ञानेश्वरः कमपि मन्त्रमुदीर्य स्तोकं ध्यानपरः प्रतीयते। ततश्च डिम्भं स्पृशति, डिम्भश्च शनैः शनैरुत्थाय चलितुं प्रयतते। तज्जनकः साष्टाङ्गं प्रणमति। इतरे ग्रामीणा श्चकिता अन्योन्यं विस्मयं नाटयन्ति, ततश्चान्येऽप्यातुराः समायान्ति )

अन्धः। प्रार्थये! भगवन्! देहि मे दृष्टिज्योत्स्नाम्। ( ज्ञा० तन्नेत्रे स्पृशति, एवं रूपेण यथेष्टमभिनयो विधेयः पात्रैः )

कश्चिद् दुर्जनः। भो भोस्तपस्विन् कुलमात्मनश्चेन्नेतुं विशुद्धिं क्षमता त्वयि स्यात्।
तच्छ्रावयास्मान्महिषस्य वक्त्राद् विनिःसृताः काश्चिदृचः श्रुतीनाम्॥

ज्ञा०। (प्रणम्य) विशुद्धवंशे भुवनश्रुते यो गृहीतजन्मा धरणीसुराणाम्।
वर्णाग्र इत्यप्यभिमानितः स्यादलङ्घनीयः खलु तन्निदेशः॥

( इत्युक्त्वा क्षतसौरभिमुपसृत्य च तं लालयन् किमपि कर्णे वदति। आदिष्टमात्र एव मनुष्यवाचा स्वरेण महिषो वेदश्लोकं पठति। सर्वे चकिताः स्तब्धाः क्षणं तिष्ठन्ति, ततश्च प्रोच्चैराक्रोशन्ति )

सर्वे। वार्ता च कौतुकवती विमला च विद्या लोकोत्तरः परिमलश्च कुरंगनाभेः।
तैलस्य बिंदुरिव वारिणि दुर्निवारम् एतत् त्रयं प्रसरति स्वयमेव भूमौ॥

द्विजाः। साक्षादयं मानवदेहिदेवो न्यूनो न विष्णोरवतीर्ण उर्व्याम्।
यत्प्रार्थितास्तुच्छजना विशुद्धिं ह्मेतेन कोऽयं नियतेर्विपाकः॥

प० क्ष०। विदितसकलवृत्तेनाग्रजेनाभिनन्द्यः श्रुतिविषयविमर्शैः कीर्तनैश्चेश्वरस्य।
सकलपुरजनेभ्यो दर्शयन् भक्तिमार्गं समयमयमनैषीत्पैठने ज्ञानदेवः॥

पटीक्षेपः

---

## दशमं दृश्यम्

( कश्चित्कालो व्यतीतः । पूर्ववत्कविचतुष्टयं ज्ञानेश्वरस्य चरितं श्रावयति । ज्ञानेश्वरः प्रबन्धरचनाकुलो दृश्यते )

प० क्ष० । स बालयोगी परिशीलयन् श्रीगीतां च भाष्यादिमहाप्रबन्धान् ।
अस्थापयद् भाविनिजप्रबन्धसुभूमिकां प्राक् स्मृतिमात्रसिद्धाम् ॥
विद्वज्जनानामनुशीलनादेर्विभिन्न आसीत्तदधीतिमार्गः ।
आध्यात्मिकान् स्वानुभवस्य दृष्ट्या महाप्रबन्धान् स पपाठ बालः ॥

ज्ञा० । संपादितस्वानुभवस्य बुद्धिः प्रोच्चैः समुद्गच्छति शास्त्रसिन्धुम् ।
सरिद्यथा क्षुभ्यति वृष्टिकाले ज्ञानेश्वरेणोक्तमिति प्रबन्धे ॥

नाम० । यावद् गृहं कस्यचन द्विजस्य बहिष्कृतं तत्कुलमध्युवास ।
आतिथ्यसत्कारयुतः पितणामुपागमत्पुण्यतिथिश्च तावत् ॥

ज्ञा० । ( बद्धाञ्जलिः ) आगम्यतां भोः पितरो भवद्भिः श्राद्धस्य भुक्तिः क्रियतां प्रसन्नैः ।
( ततश्च द्वित्राः पूर्वजाः प्रादुर्भवन्ति, स्वस्वासने चित्रीयमाणा इवोपविशन्ति । सविधं चोपभुज्य निर्गच्छन्ति )

जनाः । साक्षादयं विष्णुरिहावतीर्णो ज्ञानेश्वरः साधितयोगसिद्धिः ।
अहो त्रयं चापि सहोदराणां दिव्योद्भवात्पूजनपात्रमेतत् ॥

पटीक्षेपः

---

## एकादशं दृश्यम

कानिचिद् दिनानि व्यतीतानि । पूर्ववत् कवयो ज्ञानेश्वरकथां ग्रामीणेभ्यः कथयन्ति ।

प० क्ष० । अथ क्रमेणाध्वनि संचरन्तः स्वाङ्घ्रेरघःस्थक्षितये ददानाः ।
स्वर्मार्गमादर्शयितुं प्रभावं नेवासमासेदुरमी कुमाराः ॥

ग्रामीणाः । विदितचरं खलु ।
यद् भागयुग्मं प्रवरातटिन्यास्तटेऽभवत्तन्नगरं निविष्टम् ।
विराजमाने हरिमोहिनीभ्यां तीर्थे उभे चाभवतां विभक्ते ॥

( सगर्वम् ) लिलेख सोऽत्रैव महाप्रबन्धं ज्ञानेश्वरीं ज्ञाननिधिश्च येन ।
प्रोक्तं जगज्जीवनसूत्रमेव महालयेति प्रथमं प्रबन्धे ॥

( बन्धुभिः सह ज्ञानेश्वरः पुरीं प्राप्तः । पत्युः शवोपरि प्रोच्चैः रुदतीं नारीमेकां दृष्ट्वा तामुपसर्पति )

ज्ञा० । (सान्त्वयन्) अलमतिशोकेन, भद्रे ! कोऽयम्? किमस्य नामधेयम् किमिति वा रोदिषि?

नारी । श्रीसच्चिदानन्द इति श्रुतो मे प्राणेश्वरोऽयं मरणं प्रपन्नः ।

ज्ञा० । स्पृशेत्कथं मृत्युरमुं ह्यनादिं तस्माद् वृथालं परिदेवनेन ॥

(शवं करपल्लवेन स्पृशति । शनैः स्वप्नाद् विनिद्र इव पुरुष उत्तिष्ठति । मुनिं समुपेत्य च तत्पादयोः पतति ।)

प० क्ष० ! संमानितो बालमुनिर्जनेन प्रेम्णात्र सद्भिर्महितश्च सुज्ञैः ।
साधुद्विषा केनचन द्विजेन प्रकाममद्वेषि तु मत्सरात्सः ॥

महापतिः । सोऽयं विसोबाभिधया श्रुतः सन् सुशिक्षितः सच्चरितोऽपि मूढः
दुराग्रहादत्यनुदारचेता मिथ्यावलेपात्कृपणो बभूव ॥

नाम० । परमन्ते, असावपि परिवर्तितशीलोऽभवत् ।
आप्रत्यूषं तुहिनविमलं ज्ञानदेवं विसोबा
निन्दागर्भैः पिशुनवचनैः पूर्वमध्यक्षिपद् यम् ।
साक्षाद्विष्णुर्ननु वसुमतीं भूय एवावतीर्णः
पूज्योऽयं मे गुरुरिति जगौ तं सुपद्यैः प्रशंसन् ॥

पटीक्षेपः

---

## द्वादशं दृश्यम

(कतिचिदब्दा व्यतीताः । कविवराः स्वस्वग्रन्थरचनामग्नाः, अर्भकाश्च यथावत्पठनपरा दृश्यन्ते । ज्ञानेश्वरः स्वरचनां लिखति, ग्राम्येभ्यश्च वाचयति ।)

प० क्ष० । गोदावरीरोधसि देवभाषामातुः सकाशात् समवाप्य जन्म ।
वत्सा महाराष्ट्र-सरस्वतीयं बभूव संपृक्तमना जनन्या ॥
ततः परं संस्कृतवाङ्मयस्य महार्घभाण्डारनिकेतनं यत् ।
निगूह्य विप्रैः पिहितं दृढं तद्विप्रेतरोऽन्तर्गमनान्न्यषेधि ॥

नाम० । वर्षत्रयाभ्यन्तर एव धीमान् निवृत्तिनाऽयं सततं प्रदिष्टः ।
ज्ञानेश्वरीं नाम कृतिं समाप्य संप्राप सिद्धिं परमामपूर्वाम् ॥

निरञ्जनः । प्रदाय बोधं समराङ्गणे श्रीकृष्णोऽर्जुनाय व्यथितात्मने प्राक् ।
विवेकजुष्टामवदद्गिरं तं 'यदिष्यते तत्क्रियतां त्वये'ति ॥

महापतिः । आसन्नपास्ता वनिताश्च शूद्रा गीतार्थसारश्रवणाच्चिराद्ये ।
भावार्थमेभ्यः प्रकटं विधातुं सुदीपिका या विदुषा कृतासीत् ॥

ज्ञा० । विराजतां नोऽप्यभिजातवाचां सिंहासने जन्मवचस्तदेति ।
विलङ्घ्य संसारमहाप्रवाहं मया गृहीतश्च विवेकमार्गः ॥
मथ्नन्महाभारतदुग्धसिन्धुं रसामृताढ्यं च निधिं मणीनाम् ।
द्वैपायनः प्रादुरभावयच्छ्रीगीताभिधानं नवनीतमीशम् ॥
तद्ग्रन्थरूपं नवनीतमग्नौ विचाररूपे सुचिरं प्रताप्य ।
सुस्वादु चामोद्युतं जनानां मया कृतं ज्ञानघृतं सुपेयम् ॥
विचक्षणापेक्ष्यतमः परेशसाक्षात्कृतेर्योऽनुभवो भवेऽस्मिन् ।
तत्साधनं स्वादु घृतं क्षमेत पातुं सुपूतं विमलान्तरात्मा ॥

नाम० । श्रोतॄनथैतस्य भृशं समीक्ष्य वदन् स्वमुद्दिश्य पदैर्मनोज्ञैः ।
विनम्रवृत्तिं हृदयंगमां स्वां स ज्ञानदेवः कविराड् व्यनक्ति ॥
ग्रन्थावसाने पुनरुक्तवान् यद्

ज्ञा० । वेदः समृद्धः कृपणं तु गुप्तम् ।
त्रैवर्णिकेभ्यो यददान्निधिं स्वं शूद्रान्त्यजस्त्रीस्तु बहिश्चकार ॥
संसारसंतापजुषाममीषां वेदे न कुत्राप्यवकाश एव ।
वैक्लव्यमेतद् व्यपनेतुमेषा गीता व्यधाय्याहृतवेदसारा ॥

निर० । यत्सूक्तिरत्नं समुदीरितं प्राग् व्यासेन तत् प्राकृतलोककर्णम् ।
प्रसाधयेद्देशगिरा समस्तं ज्ञानेश्वरीति प्रणयात् प्रणीता ॥
सन्देहनिर्मोकपथप्रदर्शिनि प्रबन्धरत्ने बहुभिर्द्विजैः श्रुते ।
तस्थुर्जनास्तान् परिवृत्य सोदरांश्चमत्कृता अद्भुतकाव्यसंपदा ॥

महापतिः । विप्रैः समग्रश्रुतिपारगैः प्राग् विभ्रंशितो ब्राह्मणसंस्कृतेर्यः ।
ज्ञानेश्वरस्तस्य पदाब्जरेणुस्पर्शेन पूतं विविदुः स्वमेते ॥

प० क्ष० । पारावारो नवरससुधासंप्लुतो ह्लादकारी
शब्दार्थानां ललितललितालङ्कृतीनां च कोशः ।
सोऽयं ज्ञानेश्वरकृतमहाकाव्यरत्नप्रबन्धो
ग्रन्थाकारो निखिलजनताप्रेमपात्रं बभूव ॥

पटीक्षेपः

---

## त्रयोदशं दृश्यम

( समतीतानि कानिचिद्वर्षाणि । कविप्रवराः पूर्ववत्स्वप्रबन्धान् रचयन्ति, वाचयन्ति च तथा बालाश्च । )

प० क्ष० । ज्ञानदेव उदितांशुमत्प्रभस्तीर्थसेवनकुतूहली भृशम् ।
पूतपण्ढरपुरं प्रति व्रजन्नामदेवकविमासदत्पथि ॥

( इति नामदेवज्ञानेश्वरयोः सम्मेलनाभिनयो विधेयः पात्रैः )

प० क्ष० । ( ग्राम्यान् प्रति )
तस्य चारु वदनं निरूपयन् वाक्सुधां श्रुतिमनोहरां पिबन् ।
कौतुकादुदितरोमहर्षणो नामदेव उपगूढवानमुम् ॥

नाम० । ( ज्ञानेश्वरं प्रति )
हन्त तेऽद्य शुभदर्शनेन मे जीवितं सुफलितं न संशयः ।
स्वं च धन्यमिह चिन्तये भृशं पाण्डुरङ्गशुभदर्शनादिव ॥
बद्धमोहमृगतृष्णिकाञ्जनान्रक्षितुं निपतितान् भवोदधौ ।
क्ष्मातलं त्वमवतीर्ण इत्यहं मन्दधीस्तत्र पदाब्जमागतः ॥
अद्य वो मयि कृपादृगीदृशी पातितेति सुखवृष्टिरागता ।
नामदेव इह वः पदाश्रयात् संतरिष्यति भवापगां खलु ॥

ज्ञा० । ( नामदेवम् आलिङ्ग्य )
श्रूयतां यदिह वच्मि सत्यवाक् त्वं विभोरसि महानुपासकः ।
जन्मतस्त्वमसि भक्तिभाक् सखे पावने हरिपदाम्बुजे दृढम् ।
तीर्थदेशसमुदायमीक्षितुं भूतलस्थमभिलाषिणा मया ।
त्वत्समागमसुखं हि वाञ्छितं सार्थकं च मम जीवितं भवेत् ॥

प० क्ष० । ज्ञानदेवकविवर्यनिर्मितश्रेष्ठकाव्यरचनावशो जनः ।
लब्धवर्णमभितः सहस्रशः पर्यवेष्टयदमुं प्रतिस्थलम् ॥

महापतिः । ज्ञानदेवमथ यात्रिकव्रजस्तत्प्रभृत्यकलयन्निजं गुरुम् ।
ज्ञानपण्ढरपुरयोश्च विठ्ठलज्ञानदेवचरितं जगौ जनः ॥

( चतुर्दशशतवर्षीयश्चाङ्गदेवमहर्षिर्दृश्यते, तस्य शिष्याश्च )

निरञ्जनः । वेद वेदनिवहं कलाचयं धूर्जटेश्च कृपया च योगतः ।
आचतुर्दशशताब्दमेव हि प्राणदित्युदभवज्जनश्रुतिः ॥
कश्चन प्रति यियासुरेकदा तीर्थमध्वनि ययौ तदाश्रमम् ।
तत्पुरोऽकथयदद्भुतं च तद्दृष्टवान्महिषवृत्तमीक्षितम् ॥
विस्मितः स विनिशम्य तां कथां चाङ्गदेव उदितोदितोऽप्यभूत् ।
बालयोगिनमवेक्षितुं जना उत्सुका नवमिवोडुपं भृशम् ॥

( ज्ञानेश्वरो योगिनः पृष्ठलोचनशिरः स्वकरपल्लवेन सादरं स्पृशति )

प० क्ष० । यो रराज सुचिराद् गुरोः पदे मानितो भुवि परःशतैश्च यः ।
हन्त तत्प्रभृति बालयोगिनः शिष्यभावमुररीचकार सः ॥

ज्ञा० । भोः पितामह तवानुगामिनां कोऽपि चेत् स्वगुरुभक्तिनिष्ठितः ।
अर्पयेत्स्ववपुषा बलिं तदा पञ्चषष्टिविवृतिर्विधास्यते ॥

चाङ्गदेवः । ( छात्रान् प्रति )
यः स्वदेहमुपहर्तुमिच्छति प्रीतये मदनुगेषु मत्कृते ।
प्रातरेष उपयातु मां ध्रुवं शुद्धधीर्भयविवर्जितः खलु ॥ ( निष्क्रान्तः )

महापतिः । यावदेष उषसि प्रबोधितो विस्मयात्स्थविर आस्थितोऽचलः ।
शून्यमाश्रममिमं विलोकयन् बान्धवैः पितृवनं यथोज्झितम् ॥

पटीक्षेपः

---

## चतुर्दशं दृश्यम

( एकविंशवर्षीयो ज्ञानदेवो ध्यानमग्नो दृश्यते । कविप्रवरास्तस्य वृत्तं कथयंति यथानुपूर्वकम् । )

नाम० । ज्ञानेश्वरीं नाम महाप्रबन्धं श्रीकृष्णगीतान्वयभाष्यरूपम् ।
निर्माय निःशेषरसात्मकं स्वां गिरं कवीन्दुर्नितरां सिषेवे ॥
शृङ्गारशान्तौ च रसौ निवेश्य माधुर्यवैशिष्ट्यमपि प्रशस्तम् ।
प्रदर्श्य भावोन्नतिमप्यपूर्वां ज्ञानेश्वरस्तं व्यदधात् प्रबन्धम् ॥

महापतिः । संग्रथ्य मालां पदपुष्पयुक्तां सदर्थगन्धां मधुरां कवीन्द्रः ।
जितामृतास्वादरसप्रपूर्णां लोकोपकारार्थमभूद्यशस्वी ॥
तां पद्यमालां सरसामधीत्य वाक्संपदः कोशवरं महत्याः ।
गीर्वाणभाषाकुशला अपि स्युर्नतोत्तमाङ्गा इति किं विचित्रम् ॥

प० क्ष० । समाप्तदीर्घाटनतीर्थयात्रो निवृत्तिना ज्ञाननिधिः प्रदिष्टः ।
बोधामृतस्यन्दमृतानुभूतिनामप्रबन्धं विदधे स धीमान् ॥
अद्वैतसिद्धान्तमिहानुरुध्य निबद्धकाव्ये कविशेखरेण ।
आमूलमान्तं गिरिजाष्टमूर्त्योरद्वैतभावः प्रतिपाद्यतेऽस्मिन् ॥

ज्ञा० । यथा हि हेतुः प्रकृतिर्जगत्या नास्त्येव भिन्ना पुरुषाद्विधातुः ।
विश्वस्य मातापितराबुभौ तावद्वैतभावं भजतः सदैव ॥

प० क्ष० । समर्थयामास कवीन्द्र एतद् अद्वैततत्त्वं ह्युपमावचोभिः ।
एको हि गन्धः कुसुमद्वयस्य प्रदीपयोरेकरुचिर्यथैव ॥

ज्ञा० । ओष्ठावुभौ संगमितौ न वाते पृथङ्न दृष्टो नयनद्वयस्य ।
तथेशदेव्यौ सृजतो जगन्ति साद्वैतभावाविति निश्चितं हि ॥

प० क्ष० । स सच्चिदानन्दपदत्रयस्य सत्ताप्रकाशात्मसुखार्थकस्य ।
अन्वर्थतां हि प्रतिपाद्य पुष्टं तदीश्वरार्थं विवृणोत्यपूर्वम् ॥

नाम० । किं ज्ञानमज्ञानमिति प्रमेयं विवेचितं तेन निजप्रबन्धं ।
ज्ञानं परं यत्र निरन्तसौख्यं तत्रेति नैजानुभवं जगाद ॥

निर० । समुत्सुका वागमृतस्य पाने ज्ञानेश्वरं पौरगणाः समीयुः ।
मरन्दबद्धाशमिलिन्दवृन्दं सुजातिपुष्पाणि यथोपयाति ॥

मद्दा० । इन्द्रायणीनिर्झरिणीतटेऽभूत्सिद्धेश्वरस्यायतनं पवित्रम् ।
तद्धामतोऽज्ञोरतरोरधस्तात्स कारयामास गुहां निगूढाम् ॥

प० क्ष० । दिने बुधे कार्त्तिककृष्णपक्षेऽथ द्वादशे दुर्मुखनाम्नि वर्षे ।
विज्ञातवृत्ताः सुजनाः समन्तात्समागता अन्तिमदर्शनोत्काः ॥

(गोकुम्भारादयः सबाष्पा विनिद्राः प्रतीयन्ते, ग्राम्याश्च विलपन्ति । नामदेवश्च कीर्तनं विधत्ते ।)

प० क्ष० त्रयोदशीपुण्यतिथौ गुहायां पर्णैस्तुलस्याः परिभूषितायाम् ।
कृष्णाजिनाच्छादितविष्टरायां समुत्थितो ज्ञाननिधिर्विविक्षुः ॥

( श्रीविठ्ठलः सरुक्मिणीकः प्रादुर्भवति । ततश्च प्रभुपाण्डरङ्गः कराम्बुजेन कुङ्कुमभाल्मेतं कृत्वा तदीयग्रीवामपि माल्यैः प्रसाधयति । प्रदीक्षणीकृत्य समाधिं आराद् योगी तिष्ठति । तस्य करं गृह्णन् । )

श्रीपाण्डुरङ्गः । श्रेयस्त्वयाऽनन्तमलाभि वत्स, प्रयासितात्मासि जगद्धितार्थम् ।
( ततश्च ज्ञानदेवः परिकल्पितपीठे उपविशति )

प० क्ष० । अथ स मुनिवरेण्यस्त्रिर्नमस्कृत्य ताभ्यां कुवलयमिव रात्रौ संमिमीलाक्षियुग्मम् ।
तदनु पिहितवन्तौ द्वारमेतौ समाधेर्यदुपरि सुमवृष्टिः साधुवृन्दैः कृताऽभूत् ॥
प्रथमनवदिनेषु प्राचलन् कीर्तनानि प्रतिदिविषदगारं ब्रह्मविद्भिः कृतानि ।
प्रचलति परिपाटी षट्शताब्दोत्तरं सा प्रतिसममधुनापि ज्ञानदेवार्चनार्थम् ॥
( कवयो निष्क्रान्ताः । )

( प्रस्तावन एव वार्षिकयात्रा दृश्यते । सुमण्डितशिबिकास्थापितां ज्ञानेश्वरस्य मूर्तिं वहमाना मङ्गलश्लोकान् गायन्तः प्रोज्ज्वलदीपहस्ताश्च यात्रिका मन्दं मन्दं गच्छन्ति । )

सर्वे । ब्रह्मसन्निधिमुपेयुषो मुनेरन्तरे षट्शताब्दके गुरौ ।
सूक्ष्मादिकवयस्त्रिविष्टपं पुण्यराशिपरिपाकतो ययुः ॥

पटीक्षेपः

---

# श्रीश्रीप्रीतिविष्णुप्रियम्

( नाटकम् )

डक्टर-श्रीयतीन्द्रविमल-चतुर्धुरीणविरचितम्

——○——

( नान्दी )

विष्णुप्रियां हरिध्यातां यमुनाजीवनप्रियाम् ।
गोकुलगोपिकाश्रेष्ठां कलौ भागीरथीश्रिताम् ॥ १ ॥
अद्वैतहरिदासादि-तपस्याधृतविग्रहाम् ।
प्रणमामि महादेवीं गौराङ्गवामलोचनाम् ॥ २ ॥
प्रणमामि शचीनयनैकमणिं रमणीजनहृद्यगुणैकखनिम् ।
धरणीनिखिलाशुभसंशमनीं प्रभुमानसतोष-विधिव्रतिनीम् ॥ ३ ॥

सूत्रधारः । अद्य खलु तावत् पश्चिमवङ्ग-सर्वकारीय-संस्कृतशिक्षापरिषत्-कर्तृपक्षीयैरादिष्टोऽस्मि गौरप्रियाया महाजनन्याः श्रीश्रीविष्णुप्रियाया जीवनमधिकृत्य किञ्चन नाटकं प्रयोजयितव्यमिति । तदधुना वयमस्या एव परिषदोऽध्यक्षेण डक्टर-श्रीयतीन्द्रविमल-चतुर्धुरीणेन विरचितम् अभिनव-संस्कृतनाटकं "श्रीश्रीप्रीतिविष्णुप्रियं" नाम प्रयोक्ष्यामहे । तदत्र नटीमाहूयावश्यकं कर्म व्यवस्थापयामि । ( नेपथ्याभिमुखमवलोक्य ) अयि मे सर्वव्यापारप्रधानालम्बनभूते सहचरि ! कासि, शीघ्रमागच्छ ।

नटी । ( प्रविश्य ) आर्य ! किमेवमुच्चैराह्वयसि माम् ? अपि कुतोऽप्यभिनयार्थमामन्त्रितो भवान् ?

सूत्र । अथ किम् । वङ्गीयसंस्कृतशिक्षापरिषत्कर्तृपक्षीयैराहूतोऽस्मि प्रयोग-प्रदर्शनार्थम् ।

नटी। मन्ये प्रभूतमर्थं ते दास्यन्ति, यतो भवानेवं प्रफुल्लो दृश्यते।

सूत्र। अये! जानास्येव त्वं यद्वयं धनविनिमयेन नाभिनयं कुर्मः परं जनानां प्रीतिजननार्थमेव। तत्र यद्यपि व्ययशुद्धयर्थ किञ्चन धनमपेक्ष्यत एव तथापि ब्राह्मणपण्डितानां सभेति तस्याप्याशा नास्ति।

नटी। अथ कस्य कृतेरभिनयमादिशन्ति मान्याः पारिषद्याः ?

सूत्र। आर्ये! परिषदध्यक्षस्य श्रीमतो यतीन्द्रविमलचतुर्धुरीणस्य कृतेः प्रीतिविष्णुप्रियाख्यनाटकस्य।

नटी। नूनं महाप्रभोः सहधर्मिणीयं विष्णुप्रिया।

सूत्र। देवि! सम्यगुपलक्षितं भवत्या। तत्राप्यस्मिन् नाटके केवलं विष्णुप्रियाया महाप्रभुसाहचर्यकालसञ्जातानां वृत्तान्तानामुपनिवन्धनं कविना कृतम्। महाप्रभुश्च,

द्वाविंशे जननीनिदेशवशतो विष्णुप्रियामुद्वहन्
प्रायोऽब्दद्वयमास्त मातुरनुगो गार्हस्थ्यधर्माश्रयी।
संसारान्मरणादिदुःखशवलात् काले विरज्यन् विभुः
संन्यासाश्रममग्रहीद् वयसि हा प्रायश्चतुर्विंशके॥ ४॥

तदानीमियं विष्णुप्रियोपचतुर्दशवर्षासीत्।

नटी। अहो विवाहनाम्नीयं विडम्बना! हा विष्णुप्रिये!
ज्ञातं न भर्तृचरणार्चनजन्य-सौख्यं
प्राप्ता नितान्तविलयं चिरपोषिताशा।
सोऽयं तवाम्ब! चिरशान्तिलताकुठारः
कौमारमात्रहरणैकफलो विवाहः॥ ५॥ ( अश्रु विसृजति। )

सूत्रधारः। अस्य नाटकस्य प्रीतिविष्णुप्रियम् इति नामनिर्वचनमप्यत एव सङ्गच्छते। तथा हि, विवाहितजीवने विष्णुप्रिया स्वयं यथा प्रीतासीद् एवं श्वश्र्वाः पत्युरन्येषां परिवारजनानामपि प्रीतिविधायिन्यासीत्। एतेन "भक्तिविष्णुप्रियम्" इत्यपि व्याख्यातप्रायम्। एतच्च नाटकं महाप्रभोः सन्न्यासोत्तरजीवनावलम्बीति तत्र

भक्तेरेव प्राधान्यम्।` तथा च तदानीं प्रभौ विष्णुप्रियायाः प्रीत्यपेक्षया भक्तिरेवाधिक्येन पदं चकार। विष्णुप्रियायामपि श्रीनिवासादीनां महती भक्तिस्तत्कालादेव सुतरां ववृध इति।

यच्च त्वं स्वमनःप्रत्ययाद् महाप्रभु-विष्णुप्रिययोर्विवाहं कौमारमात्र-हरणैकफलं मन्यसे तदप्यतितुच्छम्, यतो विष्णुप्रिया स्वयम् अनेन विवाहेनात्मानं कृतार्थमेवामन्यत। तत्र पुनः प्रीतेर्जन्मान्तरानु-बन्धित्वमेव कारणम्। नूनमियं जन्मजन्मान्तरसङ्गिनी विश्वम्भरस्य। हन्त भोः,

स्नेहो जन्मान्तरज्ञोऽवितथ इति मया मन्यते लोकवादो
नो चेद् ध्यातो जनन्या स्मरति हि तनयस्तां कथं दूरवर्ती।
जानीतः पुत्रकन्ये कथमिव पितरौ दीर्घकालाददृष्टे
चक्षूरागो विदध्यात् किमिति च मिथुनं स्नेहतन्तूपनद्धम्॥ ६॥

किञ्च, दृष्टान्तस्तव देवि पश्य पुरतः प्रत्यायको वर्तते
यद्विष्णुप्रियया समेति हि शची वध्वेव पत्युः प्रसूः।
शच्यां भक्तिनता सकृत्परिचयाद् विष्णुप्रियाऽजायत
स्नेहादुत्पुलका शची च समभूदालोक्य विष्णुप्रियाम्॥ ७॥

अस्याः खलु विष्णुप्रियायाः,

सरसं हृदयग्राहि पुण्यात् पुण्यतरं वचः।
स्नेहः सत्यं सुधास्रावी जगतां चिरधारकः॥ ८॥

स्नेहो हि जीवनं विश्वे गङ्गाजीवनजीवनम्।
स्नेहाद् विष्णुप्रिया स्तौति यथा गङ्गां तथा शचीम्॥ ९॥

शचीगङ्गाप्रियालोकाल्लोको लोकोत्तरायते।
एतासां मिलनं पुण्यं सौभाग्यात् संस्कृतात्मनाम्॥ १०॥

सर्वस्नेहपराकारा प्रियायां प्रीयतां शची।
विश्वपालनकारिण्या जाह्नव्यास्तीरसंस्थिता॥ ११॥

(इति प्रस्तावना)

# प्रथमोऽङ्कः

[ स्थानम्—नवद्वीपवर्ति गङ्गातीरम् ]

[ प्रविशति स्नानोत्तीर्णा विष्णुप्रिया । ]

विष्णुप्रिया । ( गङ्गां स्तौति )

मूर्तमातृस्नेहरूपे तनयसंरक्षिणि
विश्वपुण्यधाराकारेऽखिलदुरितहारिणि ।
स्मरणकीर्तनस्नानदानकल्याणवर्षिणि
विष्णुप्रिया नौति गङ्गे सन्तापनाशिनि ॥ १२ ॥

मातर्गङ्गे ! तुभ्यं कोटिशो दुहितुर्विष्णुप्रियाया नमः । ( चतुर्दिशमवलोक्य ) कुत्राद्य सा स्नेहमयी रमणी, या मां प्रेक्ष्यानिमेषाभ्यां लोचनाभ्यां प्रत्यहं पिबतीव ; मन्ये जन्मजन्मान्तरेषु तस्याः स्नेहधारयाऽहं संपुष्टा आसम् । कथं सा मय्येवं स्निह्यति ! अहो ! प्रत्यहमनया सहालापं कर्तुमिच्छन्त्यपि,

बालिका बलवत्याहं लज्जयेव जडीकृता ।
नानया सह संलापमशकं कर्तुमञ्जसा ॥ १३ ॥

यद्भवतु, अद्य निश्चितं तया साकं वाक्यालापं करिष्ये ।

[ प्रविशति गङ्गास्नानार्थिनी महाप्रभुजननी शचीदेवी । ]

शचीदेवी । जह्नुकन्ये ! पतितपावनि ! नमस्ते । अहो इयं सा बालिकाद्यापि स्नानानन्तरम् अत्रैव वर्तते ! अहो अचिरं स्नानोत्तीर्णाया अस्या वैशिष्ट्यमाकृतेः !

निमग्नाया भूयः शिशिरसलिले चापलवशा-
दधत्तां नेत्रान्तौ कुमुदविशदौ कोकनदताम् ।
शरीरं चाप्यस्या गलित-तपनीयद्युतिहरं
समुद्भेदाद् रोम्णामहह हरिताभं विलसति ॥ १४ ॥

न जाने कस्य कुलम् इयं जन्मपरिग्रहेण धन्यं कृतवती। अहो रूपम्!

करपदनखभाभिर्भाति चित्ते ममैषा
कमलदलविहारिण्यागतेवेह लक्ष्मीः।
द्युतिरनुवपुरस्या वैद्युती भाति लोला
नरवपुषि न दृष्टं क्वापि लावण्यमीदृक्॥ १५॥

किमिति दर्शनमात्रेणाहम् अस्यां स्निह्यामि? अहो! विश्वम्भरेण सहास्या विवाहविधिना मेलनम् अस्माकं चिरानन्दाय स्यात्। अपि विधाता सुप्रसन्नो भविष्यति? कनकावदातो मे तनयो, गलित-काञ्चनसुगौरी चेयं बाला—यथा रूपेण तथा गुणेनेयं सर्वथा मे पुत्रेण तुल्या, ततोऽभ्यधिका वा दृश्यते। उभयोर्मेलनं जगतां चिर-कल्याणाय भविष्यति। भवतु, अद्य तस्याः परिचयं तत्त्वतो ज्ञास्यामि।

विष्णुप्रिया। (उपसृत्य) मातस्त्वां प्रणमामि। (पादरजांसि मूर्धनि गृह्णाति।)

शची। वत्से! चिरकल्याणी चिरायुष्मती च भव। मातस्तव भक्त्या-ऽहं सातिशयं प्रीतास्मि। किं नाम ते, कस्य वा कन्या त्वमिति सर्वं ज्ञातुमिच्छामि।

विष्णुप्रिया। मातः! नाम्नाऽहं विष्णुप्रियास्मि। पिता मे नवद्वीपधाम्नो राजपण्डितः सनातनमिश्रः। जननी मे मूर्तिमतीव करुणा महामाया। स्नानार्थमागताया भवत्या दर्शनेन मया महत् पुण्य-मर्जितम्। अहो नु सौभाग्यम्!

शचीदेवी। परमकल्याणि! भूयो भूयः प्रार्थये—

आशीर्भिरस्या जननीसदृश्या
योग्यः पतिस्ते नचिरेण भूयात्।
क्रमेण घोरे तमसि प्रविष्टां
पतिर्द्वितीयोद्धर भूतधात्रीम्॥ १६॥ इति। [ उभे निष्क्रान्ते ]

# द्वितीयोऽङ्कः

[ महाप्रभोर्विवाहोद्योगः ]

[ ततः प्रविशतः शचीदेवी काशीनाथपण्डितश्च । ]

शचीदेवी । पण्डितवर ! कल्याणमस्तु ते । महता प्रयोजनेन त्वामहम् आहूतवती । गङ्गातीरे राजपण्डित-सनातनमिश्रस्य कन्यका विष्णुप्रिया मे दृष्टिगोचरमागता । अहो नु रूपमाधुर्यं शुचिशुभ्रं चरित्रञ्च तस्याः !

यदा मम समापतन्नयनयोरियं बालिका
ततः प्रभृति मानसे समजनीदृशी भावना ।
विलोकयितुमन्वहं कथमिमां मया पार्यतां
कथञ्च गृहदेवतापदमपीयमारोप्यताम् ॥ १७ ॥

भगवन् ! विश्वम्भरेण सह तस्या उपयमनं संघटताम् इति मे महतीच्छा । अस्मिन् विषये भवतः साहायकमिच्छामि ।

काशीनाथपण्डितः । अहो आनन्दः ! भवत्यादिशति चेदहं क्षणादेव सनातनमिश्रसकाशं गत्वा सर्वं स्थिरीकरिष्यामि ।

विश्वम्भरोऽम्बुजदलायतनेत्र-कान्तो
विष्णुप्रिया नलिनलोचनरोचमाना ।
योगोऽनयोः सदृशयोरुपजायमानः
प्रोत्साहयेत् सपदि देशसमाजसंस्थान् ॥ १८ ॥

अस्मिन् विषयेऽहम् अतन्द्रितं दत्तावधानो भविष्यामि । (दूरतो दृष्ट्वा) अहो तत्रभवान् राजपण्डितोऽनेनैव पथा साम्प्रतं गच्छति । तमत्राह्वयामि । देवि । भवती क्षणं तिष्ठतु । राजपण्डितेन साकमहं निमिषाभ्यन्तरे प्रत्यावर्तिष्ये । ( निष्क्रान्तः । )

शचीदेवी । श्व एव विश्वम्भरः पूर्ववङ्गेभ्यः प्रत्यागमिष्यतीति सन्देशः

संप्रेषितः। विष्णुप्रियां प्रति समाकृष्टमानसया यन्मयाऽधुना विधीयते, तत्र पुत्रस्य मे वैमत्यं भवति चेन् महद् अमङ्गलं संजनिष्यते। परम् आशा मे वर्तते,

मया मदन्तःकरणप्रमाणाद्
विज्ञाय पुत्रस्य मनः कृतं यत्।
फलेन संवादि भवेद् ध्रुवं तन्-
न लङ्घयेन्मे तनयो मदाज्ञाम्॥ १६ ॥

भगवन्! सर्वथाऽस्माकं सर्वेषां मङ्गलं विधेहि।

[ ततः प्रविशतः सनातनमिश्र-काशीनाथपण्डितौ। ]

सनातनमिश्रः। देवि! भवत्या यत् प्रस्तूयते, तत्र यद्यपि मम पत्नी सर्वथा प्रष्टव्या यतो विवाहसम्पर्किव्यापारेषु नारीणामेव प्राग्राधिकारः— तथापि भवत्याः प्रस्तावे तामपृष्ट्वैवाहं हार्दिकीं सम्मतिं ज्ञापयामि।

गृहिणी मम भक्तिभूषणा भवती चास्ति जगत्प्रसूपमा।
परिवारयुगस्य मेलने शुभसङ्केतमवैमि तद् विधेः॥ २०॥

मदीया दुहितावयोश्चक्षुस्तारकेव, महता स्नेहेन सा परिपालिता। भवत्या आशिषा तस्या भाविजीवनम् अशेषसुखकरं भवत्विति प्रार्थये।

शचीदेवी। भवान् राजपण्डितो धनबलादिसमन्वितः परमपराक्रान्तः सम्मानभाजनञ्च सर्वेषाम्। राजपण्डितस्य दुहिताऽप्यनुरूपेण सुखेन लालिता पालिता च। वयञ्च विशेषेण वित्तहीनाः। तथापि

आलोक्यैनामभवदिति मे धारणा बद्धमूला
दैन्यं तस्या न खलु जनयेच्चित्तपीडां कथञ्चित्।
यन्मां नित्यं परिचितचरीवेत्य संभाषते सा
पुत्रिम्मन्या घटयति मया स्नेहबन्धञ्च बाला॥ २१॥

तथा सति जन्मजन्मार्जितं बन्धनम् अवश्यमेव हृदयग्रन्थिम् अस्मदपत्ययोर्दृढीकरिष्यतीत्यत्र कः सन्देहः।

सनातनः । [ स्वगतम् ] अहो !

पाण्डित्य-सौजन्य-शरीरशोभया
विश्वम्भरो नूनमसम्भवोपमः ।
यूनोऽपि पाण्डित्यविशेषसम्भवा
ख्यातिश्च तस्याखिलदेशविश्रुता ॥ २१ ॥

परमभागवती द्युतिरप्यस्य सुमहद् भविष्यत् सङ्केतयति। केवलं प्रार्थये अस्मिन् विवाहविषये न कापि वाधा जायतामिति। [ शचीदेवीं प्रति ] देवि ! सत्यमेतज् जन्म विवाहो मरणम्— त्रिष्वेतेषु व्यापारेषु विधिहस्त एव केवलं नियामकः। यथा देवी भणति—जन्मजन्मान्तरानुवन्धी विवाहः ; तत्संघटने मातापितरौ निमित्तमात्रम्। मनो मे कथयति—श्रीगौरसुन्दरेण सह मद्-दुहितुः सम्मेलनं महते कल्याणाय भविष्यति। तद् देवि ! सत्वरं विवाहदिवसः स्थिरीक्रियताम्। मत्पक्षतो यद् यत् करणीयम्, अहं ध्रुवमेव तत् सर्वं करिष्यामि। नमस्ते। ( स्वगतम् )

वरः परमसुन्दरोऽपि च युवेति कन्यादृतो
ममापि स सुसम्मतो विनय-वृत्त-विद्यादिभिः।
परं यदि कुटुम्बिनी विवदतेऽत्र निःस्वे जने
भविष्यति तदा विधिः क इव सत्यसंरक्षणे ॥ २२ ॥

यद् भवतु, क्षेत्रे कर्म विधीयते।

शचीदेवी। अस्माकम् अभीष्टविषये भगवान् सहायो भवतु।

अनुकम्पां भागवतीं विना क सिध्यन्ति नराः स्वाभीष्टे।
सा च प्रसादमूला तदिह प्रसादयामो भगवन्तम् ॥ २३ ॥

[ उभौ निष्क्रामतः । ]

# तृतीयोऽङ्कः

[ नवद्वीपधाम्नि कश्चन राजमार्गः । ]

[ प्रविशन्ति रजकनापितौ कतिपये विक्रेतारश्च ]'

दधिविक्रेता भुजङ्गप्रयातः ।

कृष्ण कृष्ण हरे हरे
नदीयानन्दनगरे जगन्नाथमिश्रागारे
नवसुधारभसविहारे ।
निमङ्च्यति विश्वम्भरो विश्वदुःखशोकहरः
कोटि-दधिभाण्डानि निःशेषय शौरे ॥ २४ ॥

भुजङ्गप्रयातः प्रभोः पादपातं
नमस्कृत्य बद्धाञ्जलिः प्रस्तवीति ।
शचीस्निग्धनेत्राञ्जन ! प्रेमदायिन् !
प्रियाप्राणबन्धो ! प्रसीदात्र दीने ॥ २५ ॥

फलविक्रेता द्रुतविलम्बितः ।

वक्ति नचिकेताः पुण्यफलविक्रेता
तूर्णं याति चित्रगुप्तालयम् ।
अहं फलविक्रेता नहि पुण्यदाता
पुण्यं प्रदाय नेच्छामि विलयम् ॥
पुण्याय तु गच्छामि मिश्रालयम् ॥ २६ ॥

जगन्नाथ-सनातन-मिश्र-मिश्रसंमिश्रण-
प्रेमसन्दोहडोलानिवारम् ।
मां फलविक्रेतारं पुण्यधारारक्षितारं
रक्षतु वैष्णवविनयावतारम् ॥ २७ ॥

( दधिविक्रेतारमुद्दिश्य )

किमुच्यते, त्वं भुजङ्गप्रयातनामासीति ? नहि नहि, कदापि न। यथा त्वं झञ्झावातवेगेन विश्वम्भरगृहाभिमुखं धावसि तथा त्वया चण्डवृष्टिप्रपातनाम्ना भवितव्यम्। मम पुनर्द्रुतविलम्बितस्य कार्येणैव संवदति नाम। तथाहि पश्य,

द्रुततरं परिगृह्य यतो धनं
वितरणे तु फलस्य विलम्ब्यते।
द्रुतविलम्बित-नाम ततोऽस्ति मे
न तु तवेव हि डित्थ-डवित्थवत्॥ २८॥

( रजकमुद्दिश्य ) अथ भवान् पुनः किंनामास्ति ?

रजकः लीलाखेलः।

मन्नाम पृच्छति भवान् ? अवधीयतां तावत्, नाम गोत्रं वृत्तं सर्वं ते कथयामि।

नाम्ना लीलाखेलो लोके मालिन्यानां निर्णेक्ता
दीर्घैरङ्गैः संदब्धः कार्यं कुर्वे निष्प्रत्यूहम्।
शुद्धा जातिः काचिन्नो मे विज्ञैर्निर्दिष्टा दिष्ट्या
तस्माद् वृत्तं संश्रित्याहं वर्ते सर्वान् सन्तोष्य॥ २९॥

भो भुजङ्गप्रयात! दधिविक्रयच्छलेन कथं मृत्तिकोपरि लुटपुटायसे? किं भणसि "रभसविहारे" इति ? भो द्रुतविलम्बित फलविक्रेतः! पुण्यफलं कः कदा क्रीणाति ? किन्तु "मिश्र-मिश्र-संमिश्रणम्" इति किं त्वमपि वा भणसि ? विहारस्तु सरभस एव भवति, तत्र वा कः सङ्केतः ? पुनः "मिश्र", तेन पुनः "मिश्र" पुनः "संमिश्रणम्"—इति एतैः पुनः पुनः मिश्रजातानां संमिश्रणैः "मिश्री"-जलं भविष्यति, तत्तु तरलमेव। पिपासातुरस्य रोगातुरस्य वा तेन प्रयोजनम्। कथं त्वं तत् काङ्क्षसि ?

नरसुन्दरः पञ्चचामरः। भो लीलाखेल-भुजङ्गप्रयात-द्रुतविलम्बिताः!

कच्चिद् यूयं स्वीयनामधामादिकं प्रपञ्चय परस्परं सख्यं दृढीकुरुथ ? तत् कुरुत। किन्तु नाहमपि युष्मत्तो हीये। गृह्यतां ममापि परिचयः।

प्रमाणिकापदद्वयं सदा ममाङ्गभूषणं
लघौ गुरौ च धारये समादरं समं जने।
नरान् विधाय सुन्दरान् क्षुरायुधो व्यपेतभीः
स एष पञ्चचामरो भजे प्रपञ्चचामरम् ॥ ३० ॥

यद्यपि वर्तते मे नामान्तरं रूपान्तरञ्च तथापि तदत्र वेणुवने न प्रकाशयामि। ( रजकमुद्दिश्य ) भो लीलाखेल! त्वमपि वस्त्र-विमर्दकः कलुषहृदयमलापसारकश्चपलको लीलाखेलकः शुद्ध-विराड्भ्रातृकोऽसि। मनःस्फूर्त्या स दधिविक्रेता गायति—पदावलीम्। सङ्गीतकं श्रोतव्यं, न पादशः पदशो वा विश्लेषयि-तव्यम्। न वयं गङ्गादासपण्डितस्य चतुष्पाठ्याश्छात्राः, तथापि नवद्वीपवासिन एव। अस्माकं रभसे रासभे रासभरभसे सममौन-सुक्यम्। "मिश्री"जलं सर्वथा सुस्वादु। तदपि परमहितकरं पित्तशान्तिप्रदञ्च। आतपदग्धानामस्माकं पित्तानि ज्वलन्ति। वयं "मिश्री"जलं पिवामः, कस्त्वं भणितिकरणाय ?

दधिविक्रेता भुजङ्गप्रयातः। न निरर्थकं पदं मया व्यवहृतम्। न खलु श्रुतं हट्टके—पूर्ववङ्गीया निमाइपण्डितं भगवदवतारत्वेन संमान-यन्ति। तस्मान् नवसुधाविहारो नवलीलाविहार इति। भूयोऽपि रभसविहारेण सनातनमिश्रकन्याविवाहव्यापारो लक्ष्यते।

फलविक्रेता द्रुतविलम्बितः। मयाऽपि "मिश्र-मिश्र-संमिश्रण" इति समस्तपदेन जगन्नाथमिश्रेण सह सनातनमिश्रस्य विवाहमाध्यमेन संमिश्रणम् इति सङ्केतितम्। अहो नवद्वीपीया वयं मूर्खपण्डिताः, न तु पण्डितमूर्खाः। न्यायशब्दोपचारैर्वयं शुष्ककाष्ठाग्रम् इति जनाः कथयन्ति, परन्तु वयं रसभाण्डान्यपीत्यपि सत्यम्।

रंजको लीलाखेलः। तस्मात् फलितार्थो जायते—अस्माकं विश्वम्भर-पण्डितेन सह राजपण्डितदुहितुर्विवाहः संघटिष्यते। तत एव युष्माकमानन्दः। तत्र ममापि राजतप्राप्तिरास्ते। नरसुंदरस्य पञ्चचामरस्य तु तत्र कार्याधिक्यम्। यतो विवाहव्यापारे ब्राह्मणमनु नापित इति कथ्यते। विवाहविषये नापित एव द्वितीय-ब्राह्मणः। नरसुन्दरस्य विक्रम एतेनैव ध्वन्यते।

अहो अस्माकं सर्वेषामेव मोदकारणमिदमिति साम्प्रतं वयं वर्तुलाकारेण "राइविशा" नृत्यं कुर्मः।

## चतुर्थोऽङ्कः

### [ विष्णुप्रिया-महाप्रभुमिलनोद्योगः ]

[ प्रविशतो मिश्रगेहस्थ-विष्णुमन्दिरे सनातनो नापितश्च। ]

नापितः। पूज्यपाद पण्डितवर! भवद्भिर्विवाहायोजनं सर्वमेव क्रियते। गौरहरिस्त्वद्य प्रातरेव मामालोक्य कथितवान्,

विष्णुप्रियाया भविता विवाहो
वरेण केनापि गुणोत्तरेण।
अश्रौषमेवं हि जनाननेभ्यो
विशेषमिच्छामि तवाधिगन्तुम्॥ ३२॥

ततो बुध्यते गौराङ्गोऽस्मिन् विवाहेऽसम्मत एव। तत आदौ भवद्भिः स्थिरीक्रियतां विवाहो निश्चितो वा न वेति। भवान् राजपण्डितो नवद्वीपस्य मुकुटमणिः। भवतामवमानने सत्यस्माकं सर्वेषामेवावमाननम्। गौराङ्गोऽधुना प्रभूतख्यातिसम्पन्नस्तरुणो

वयोऽतिक्रामति। स नोपयंस्यते चेद् विधवा शचीमाता किं करिष्यति ?

सनातनः। अहो नु कष्टम्! किं निमाइ-पण्डित एवम् अशिष्टम् आचरिष्यति ?

मातुः शासनलङ्घनेन विनयाद् व्यावृत्य विश्वम्भरः
किं कुर्यादविचारमात्रशरणं सम्बन्धभङ्गं हि नः।
एवञ्चेन्नृपतेः परिग्रहतया योऽयं प्रभावोऽस्ति मे
सोऽस्तं यास्यति किञ्च कापि भविता निन्दापि सामाजिकी ॥३३॥

अपि च

सुतायां मे नित्यं प्रकटयति शची स्नेहमतुलं
शचीदेव्यां तस्या अपि हि बहुमानो निरवधिः।
भविष्यन्त्योरेवं प्रसरदनिशं प्रेम विमलं
स्नुषा-श्वश्र्वोः शोच्यां परिणतिमुपेयात् किमु विधे ॥ ३४ ॥

हरे कृष्ण! अहो कष्टम् आपतितम्!

नापितः। भगवदिच्छया शुभं भवतु।

सनातनः। युष्मदीयेच्छा परिपूर्णा भवतु।

[ नापितो निष्क्रान्तः ]

( प्रविशति मिश्रपत्नी महामाया )

महामाया। आर्यपुत्र! कथं भवान् विषण्णवदनस्तिष्ठति ? जाने कन्याया विरहो भवन्तं पीडयति, किन्तु एतादृश्येव सनातन-कालाद् रीतिः प्रवर्तते। कातर्यं त्यजतु भवान्, कति कति न सन्त्यस्माकं कर्तव्यानि—तत्रैव भवद्भिर्यत्न आधीयताम्।

सनातनः। प्रिये! नासौ मे चिन्ताविषयः। "अथैनां परास्यन्ति" इति यजुर्वेदीया श्रुतिः कन्यका ध्रुवं परवेश्मनि संप्रेषयितव्येति कथयति। एवञ्च,

सर्वाङ्गनाच्छ्रुतिविधानमहं प्रशासद्
आजीवनं स्वयमपि प्रतिपालयंश्च ।
पर्याकुलो यदि सुताविरहाद् भवेयं
लोको वदिष्यति नु साधुपदेशशूरम् ।। ३६ ।।

किन्त्वस्माकं दुर्भाग्यवशान् महदशुभमेव प्रायेण संघटितम्। साम्प्रतं नापितमुखाच्छ्रुतं यद् विश्वम्भरस्तमेव नापितमवदत्— विष्णुप्रियाया वरस्य नामापि नाहं जानामीति ।

तस्माद् विवाहेऽत्र न तस्य सम्मति-
रस्तीति मे निश्चलसत्यधारणा ।
ततश्च सम्भाव्य निजावमानं
कन्यामनोविक्लवताञ्च दूये ।। ३५ ।।

महामाया । अहो आकस्मिको वज्रपातोऽस्माकं शिरःसु । विष्णुप्रियायाः किं भविष्यति ?

सनातनः । शचीदेवीं प्रति तस्या अनुरागः प्रगाढ एव ; गौराङ्गेऽपि सा दत्तचित्तेति मन्ये ।

यतः प्रभृति साऽकरोन्नयनगोचरं तां शचीं
प्रफुल्लतरतां गतं तदवधीव तस्या मुखम् ।
ततोऽपि सुखसान्द्रता वपुपि कापि तस्या जनै-
रलक्षि वहुला परैरपि विवाहसंसूचनात् ।। ३७ ।।

ततो वाल्ये वयसि मम प्राणेभ्योऽपि प्रियतरा दुहिता भग्नमनोरथा भविष्यतीति मां दन्दह्यते । मम तावदशेषं कष्टं भवतु, मम कन्यायाः क्लेशस्तु सर्वथा दुर्विषह एव । अहो भगवन् !

महामाया । [ स्वगतम् ] अत एव जनाः कथयन्ति—दुहिता पितुः प्राणेभ्योऽपि प्रियतरेति । एवं पितुर्दुहितरं प्रत्यपरिसीमाश्चर्य-स्नेहप्रसङ्गादेव शास्त्रेपूक्तं "दुहिता कृपणं परम्" इति ; बृहदारण्यकोपनिषदादिग्रन्थेषु पण्डितदुहितृ-प्रापणार्थं कृच्छ्रसाधनमास्ते

सर्वथोपदिष्टम्। अहो! दुहितरं प्रति पितुः स्नेहो सन्तानं प्रति मातुः स्नेहम् अप्यतिशेत इति मन्ये। कथमन्यथा—

यो मे पतिश्चिरममन्यत मानमात्रं
सर्वाधिकं जगति सोऽद्य तु कन्यकायाः।
दुःखेन मानसभवेन विचाल्यमानो
मानेऽपि जायत इवादरलेशहीनः॥ ३८॥

(स्वामिनं प्रति) नाथ! जगत् पुनरीदृगेव। अत्र सुखं दुःखञ्च संमिश्रितमेवास्ते; स्रोतोधारया सुखं न कदापि प्रवहति। भगवान् दुःखं ददाति चेत् तदेव वरणीयम्। किन्तु मे मनो वदति—

गौराङ्गदेहार्धहरैव सा भवेद्
विष्णुप्रिया भक्तिमतीति मे मतिः।
भक्तिप्रियां तां हरिनामसम्बलां
भग्नाभिलाषां न हरिः करिष्यति॥ ३९॥

[ ततः प्रविशति विष्णुप्रिया ]

विष्णुप्रिया। पितः! मातः! कथं युवाम् अधोवदनौ चिन्ताविषजर्जरिताविव म्रियमाणौ परिदृश्येथे? किमशुभं संघटितम्? पितः! न कदापि भवान् मत्तः किमपि निगूहति। भवतोर्मनस्तापकारणम् अचिरादेव ब्रवीतु भवान्।

राजपण्डितः। मातः! जानासि किल दुहितैव पितुः श्रेष्ठं स्नेहस्थानम्। मम सर्वं सुखं केवलं त्वदाश्रयि। अधुना तवैव दुःखकारणं दैवदुर्विपाकेण समुपस्थितमिति न मे चित्तं धैर्यमवलम्बते। प्रार्थये— तव दुःखमपसरतु सम्यगिति।

विष्णुप्रिया। [ स्वगतम् ] यत् मया चिन्तितं तदेव संघटितम्।

अशङ्किषि पुरैव यज्जनरवादहं जानती
परिग्रहपराङ्मुखः खलु वरः स विश्वम्भरः।

तदञ्चति यथार्थतामितरथा तु तातस्य मे

प्रसन्नमुखपङ्कजं कथमुपैतु विच्छायताम् ? ॥ ४० ॥

[ प्रकाशम् ] तात ! पिताऽपि नापत्यस्य ललाटे लिखितं खण्डयितुं समर्थो भवति। भगवदिच्छैव सर्वथा बलीयसी। तथाऽपि ब्रवीमि—

लेशोऽपि भगवद्भक्तेर्यदि मे वर्तते हृदि।

तर्हि स्नेहवतोः पित्रोर्नाहं स्यां दुःखदायिनी ॥ ४१ ॥

पितरौ ! युवाम् इतो गच्छतम्, अहमत्र कियन्तं कालं स्थास्यामि।

[ महामाया-सनातनौ निष्क्रान्तौ। ]

विष्णुप्रिया। [ भृशं चिन्तापरायणा, विष्णुमन्दिरद्वाराणि रुद्ध्वा ] अहो दुर्भाग्यम्। मम नवनीतकोमलहृदयः स्नेहसर्वस्वः पिता विष्णुप्रियां विहाय किमपि न जानाति, स एव पिता मे जीवति। कथं मे पिता एतादृग् दुःखभाग् भवेत्। अहो कष्टम् !

शरणमिह हि यो मे यस्य नाम स्मरामि

भजनमपि चरामि प्रत्यहं यस्य चाहम्।

किमिति स पितरौ मे मर्मणि च्छेत्तुमिच्छ-

न्नकरुण इव पुत्रीं मां निमित्तीकरोति ? ॥ ४२ ॥

हरिरेव सर्वदुःखहरणकारणम्, तमेवाद्य दर्शनानन्तरं प्रक्ष्यामि—भक्तस्याकारणं दुःखं कथमसौ सहेतेति।

[ हरिं ध्यायन्ती ]

जगत्पितरेहि वारय तातस्य मम हृदयवेदनम्।

दुहिता दुःखकरीति प्रथा जगति कथमद्य मृषा चरतु ॥ ४३ ॥

हर देवेश हृदयेश परिचारिकासकलदुर्वहदुःखम्।

परकल्याण परमेश चिरदुःखहरण भक्तप्राणधन ॥ ४४ ॥

विष्णुप्रियानयनवारि मोचय कातरभयभञ्जन।

गोवर्धनगिरिधारिन् श्रीराधाचेतोदर्पण ॥ ४५ ॥

[ विग्रहाद् आविर्भवति राधारमणः कृष्णः ]

राधारमणः। अयमहं श्रीकृष्णस्त्वां प्राप्तोऽस्मि। विष्णुप्रिये! विरम विरमाश्रुसेकात्। देवि! आसीस्त्वमेव युगयुगान्तरे गोलोकविहारिणः प्राणप्रिया। कथमद्य स्व-स्वरूपं विस्मरसि। धन्यस्ते महाप्राणो वैष्णवश्रेष्ठो राजपण्डितः पिता, यस्त्वां सुतारूपेणालभत।

सीताया जनको यथैव जनकः पूज्यो जगन्मण्डले
राधायां वृषभानुरित्यभिहितस्तातोऽप्यभूद् यादृशः।
तादृक् श्रीलसनातनोऽपि जनकस्ते वैष्णवेषूत्तमः
सर्वेषां क्षितिवासिनां हि भविता पूजास्पदं सन्ततम् ॥ ४६ ॥

कथं त्वदर्थं तस्य दुःखम्? देवि! स्व-स्वरूपं विजानीहि, स्थिरा भव। अचिरेणैव कालेन मनोरथस्तव संपूरयिष्यते।

विष्णुप्रिया। देवदेव! किञ्चिन् मया स्मर्यते। तथापि भवन्मुखतः श्रोतुमिच्छामि किं मे स्वरूपमिति। अहो नु विस्मयः! भवान् मां जनन्या सीतया राधिकया च सह तुलयति। तद् वा कथम्?

राधारमणः। शृणु प्रिये! पूर्वस्मिंल्लीलावतारकाले एकदा त्वं दुःखार्ता माम् अभाषीष्ठाः, परस्मिन् जन्मनि राधाया हृदयवेदनं त्वं स्वयं राधा भूत्वा समनुभविष्यसि। तेनाहम् अस्मिन् जन्मनि कृष्णरूपं विहाय त्वद्भावभावित-त्वद्द्युति-संवलित-गौरहरिरूपेणास्मि जातः। शृणु रहस्यम्।

यस्मै त्वमर्पितवती हृदयं स्वकीयं
विश्वम्भरः स किल देवि ममैव मूर्तिः।
सोऽहं भुवो दुरितभारमपाचिकीर्षुः
साकं त्वया कलियुगेऽस्मि कृतावतारः ॥ ४७ ॥

कठोरः खल्वयं कालः। बहिः-शत्रुपराक्रमदावानलविदग्धोऽस्ति

समग्रो देशः। तव प्रियो गौरहरिस्त्वत्पाणिग्रहणार्थं झटित्येव वार्तां संप्रेषयिष्यति। अतः

मा मा रोदीर्विश्वसिह्यात्मनि त्वं
विश्वक्षेमं संविधातुं यतस्व।
स्वामुद्धर्तुं मातृभूमिं विदग्धा-
मात्मप्राणानुत्सृज प्रेममूर्ते ॥ ४८ ॥

स्वयं भगवती भूत्वापि मानवशरीरं परिगृहीतवत्यसि। मानवावतारलीलैव मे महासौख्यकरी। त्वम् आत्मानं तथा परिचालय।

विष्णुप्रिया। देव! प्रिय! मा मां त्यज। तिष्ठ तिष्ठ।

[ श्रीकृष्णो निष्क्रान्तः ]

( द्रुतं प्रविशति सनातनः )

सनातनः। विष्णुप्रिये! आश्चर्यं खलु संघटितम्। स्वयं गौरसुन्दर एवं कथितवान् ब्राह्मण-मुखेन, यज्जनन्या अभिप्राय एव तेनानुसरणीय इति। अतो विवाहविषये न तस्य वैमत्यं वर्तते। ( विष्णुप्रियां चिबुके गृहीत्वा ) मम विष्णुप्रिया कदापि पित्रोर्दुःखकारणं न भविष्यतीत्येतन् मे ज्ञातमासीत्। तथापि हठाद् वज्रनिर्घोष इव नापितप्रदत्तः सन्देशो मां विचालयामास। दुःखानन्तरमुपलब्धं सुखं मधुमत्तरं जायते। ततोऽस्माकमानन्द उपचीयतेतराम्। विष्णुप्रिये! मातः! वत्से! सुखिनी भव। उभयोः कुलयोरवतंसरूपा भूयाः। जगतो हितायात्मानं निवेदय।

स्वल्पस्थायि समेत्य जीवनमिदं निष्कामकर्माश्रयाद्
यो जीवः कुरुते परार्त्तिहरणं दीर्घायते तस्य तत्।
स्थित्या तस्य हि नन्दनायत इयं नूनं धरा नारकी
मृत्वा चामरतां स याति भव तत् सेवासु लग्ना नृणाम् ॥४९॥

विष्णुप्रिया। पितः! भवतामुपदेशामृतं माम् अनिर्वचनीयसुधारसेनेव सिक्तां करोति।

सनातनः । अन्योऽपि कश्चनोपदेशोऽस्ति । नार्येव कुलस्य समाजस्य विश्वस्य च भूषणम् । नार्येव जगति पुरुषाणां परं शरणम् । नार्येव जगतः शान्तिर्दान्तिः क्षान्तिः लावण्यं माधुर्यं सौष्ठवं केवलम् अवलम्बनं सर्वथा निर्भरस्थानम् । पुरुषे गुणहीने कलुषिते नष्टे वा व्यक्तिविशेष एव ध्वंससोपानपरम्परामारोहति, किन्त्वेकस्यां नार्यां स्वल्पमप्यधःपतितायां समग्रो देशः स्वत एव शुष्यति । नारीणाम् अधोगमनमेव देशस्य स्वाधीनताहीनताया आत्मद्रोहिताया वा बलवत् कारणम् । महिममयी चेन्माता, पुत्रो न कदाप्यन्धं तमः प्रवेक्ष्यति । विष्णुप्रिये !

मातः प्रोद्भावय नवनवं तादृगादर्शमग्र्यं
पुत्रीयेयुर्भरतधरणीमातरो येन विश्वम् ।
गौराङ्गस्य प्रियसहचरीभूय संस्थापय त्वं
शश्वद्धर्म-प्रभवमनघं भारतं विश्वमूर्ध्नि ॥ ५० ॥

किञ्च—

लक्ष्यभ्रंशः कथमपि कदाप्यस्तु ते नैव मात-
रादेशोऽयं मम, न च पुनः केवलो वाग्विसर्गः ।
एतत् कृत्वा हृदयनिहितं शासनं श्रद्धया मे
लाभालाभावपरिगणयन्त्यास्स्व संसारमार्गे ॥ ५१ ॥

विष्णुप्रिया । पितः ! दुहितुः प्रणामसन्तर्ति गृह्णातु भवान् ।

अनुशिष्टा त्वया तात कृतार्था तनया तव ।
त्वदाशिषैव तिष्ठेयं ध्रुवं त्वदनुशासने ॥ ५२ ॥

( उभौ निष्क्रान्तौ )

---

# पञ्चमोऽङ्कः

[ विवाह-सज्जादिषु विष्णुप्रिया ]

सनातनः। महामाये ! अपि श्रुता त्वया "बुद्धिमन्त" खान-महोदयस्य प्रतिज्ञा यद् दिग्दिगन्तस्थानां सर्वेषां प्रमोदाय स एव व्यवस्थापनं करिष्यति, विवाहे राजोचिताडम्बरो भविष्यति तत्र सर्वमेव व्यय-भारं स एव निर्वाहयिष्यतीति। मुकुन्दसञ्जयोऽपि एतद्विवाहसम्पर्कि-व्ययेषु स्वाभिलषितं विज्ञापयन्नपि बुद्धिमन्तखानेन बलान्निवारितः, बुद्धिमन्तखानस्य हस्तः सर्वत्रैव संप्रसारित आस्ते।

महामाया। न केवलं प्रतिज्ञा श्रुता, प्रत्यक्षीकृतं तत्फलमपि। अहो प्रभावो बुद्धिमन्तखानस्य। समग्रं नदीयामण्डलमेव तेन सुसज्जीकृतम्, समग्रमेव मण्डलं सुबृहत्परिवाररूपेणैकीकृतञ्च। केवलं दीयतां भुज्यताम् इत्येक एव रवः संश्रूयते। गौरसुन्दरे सर्वेषामेव महती प्रीतिः, गुरुजनानाञ्च वात्सल्यम् एतदेव मां विशेषेण प्रीणयति। आवयोः प्राणप्रियतरा दुहिता सर्वेषामेव परमस्नेहपात्रम् आदरभाजनं च भविष्यतीति मे महान् हर्षः प्रजायते। यथा विष्णुप्रिया तथा गौरसुन्दरः—उभौ सर्वत्र सर्वेषां हृदयेषु वसताम् इति मे महत्याकाङ्क्षा।

सनातनः। तदेव भविष्यति, प्रिये! तव कल्याणकामनैव, मातुस्ते कल्याणकामनैवैतयोर्द्वयोर्मङ्गलजीवनपथे शतदलरूपेण विकशिष्यति, मातृहृदयाभीप्सा सुरभिर्भूत्वा दिगन्तमामोदयिष्यति।

[ नेपथ्ये ढक्कानिनादेन समुद्घोषणं गौरसुन्दरस्य ]

शृण्वन्तु नदीयावासिनो मातरः पितरो भगिन्यो भ्रातरश्च सर्वे—एतद् विश्वम्भरपण्डितस्य निवेदनम्—

श्वो मे भवेत् परिणयो जननीनिदेशा-
द्द्याधिवासदिवसे त्वपराह्णकाले ।
सर्वैर्मदीयसदनं समुपेत्य पूग-
स्रक्चन्दनादि कृपया परिगृह्यतां भोः ॥ ५३ ॥

सनातनः । महामाये ! इदानीं नितरां निश्चिन्तोऽस्मि विवाहं प्रति ।
परिणेतुरात्मवदनाद् विनिःसृतो
दुहितुर्विवाहघटनानुमापकः ।
अयमुन्नताम्बुधरधीर आरवः
शिखिनं यथा मदयतीव मानसम् ॥ ५४ ॥

( उभौ निष्क्रान्तौ )

---

## षष्ठोऽङ्कः

### [ विवाहवासरे विष्णुप्रिया ]

आचार्यरत्न-चन्द्रशेखरः । मिश्रार्य-राजपण्डित ! भवता कन्याजामातृभ्यां किं किं न दत्तम् ! आमाणिक्य-तुलाकणं सर्वमप्यत्र दृश्यते । यत्रैव चक्षुः पात्यते तत्रैवानुभूयते बाहुल्यम् । नरनारायणसेवाया विपुलमायोजनं कल्पनामपि स्थगयति ।

सनातनमिश्रः । गौरसुन्दरस्य पितृरूपो भवान् ममाद्य प्रभृति वैवाहिकोऽस्ति । वैवाहिकसम्पर्कादावां परमबान्धवौ ध्रुवमेव । ततो हृद्यः संलाप आवयोर्युज्यत एव ।

चन्द्रशेखरः । भवतां हृदि यद् वर्तते, तन्निःसङ्कोचम् उच्यताम् ।

सनातनमिश्रः । लक्षव्याहारो विवाहव्यापार उच्यते । व्याहारेषु च

केचित् सत्याः केचित् पुनरसत्या भवेयुरेव। ततो नैतद् आश्चर्यं यन्मे जामातरि गौराङ्गेऽपि जना दारिद्र्यदोषम् आरोपयन्ति। धनाभावो न दारिद्र्यम्। दारिद्र्यं विद्यते जनानां हृदि, न काञ्चनराजताभावे। रूपगरिम्णा, मनोमहिम्ना, चित्तस्थैम्ना च कार्त्तिकेयं मित्रावरुणौ समुद्रञ्च निर्जयति विश्वम्भरः। यथा नाम्ना तथा कर्मणाऽप्यसौ यथार्थो विश्वम्भरो भविष्यति—सर्वमेव विश्वं तस्य वदनापेक्षि राजिष्यते।

गदाधरः। पश्य प्रकृतावप्यद्य सर्वत्र महासमारोहो दृश्यते।

फुल्लालिङ्गति कौमुदी सुविमला गाढं धरामातरं
यामिन्यां दिवसभ्रमात् सुमधुरं कूजन्त्यलं पक्षिणः।
सम्पर्कान्मलयानिलस्य चलतामोदेन सर्वा दिशः
पूर्णाः सम्प्रति मानवाश्च नितरामौत्सुक्यमापादिताः ॥५५॥

सर्वमिदं गौरसुन्दरमाहात्म्यानुसारीति कः सन्देहः।

चन्द्रशेखरः। राजपण्डित! मया तु मन्यते—

य एष हर्षः प्रकृतौ विलोक्यते
स गौर-विष्णुप्रिययोः समागमात्।
यतः सुता ते सुतरां जगद्धिता
प्रत्यक्षलक्ष्मीः किल माधवप्रिया ॥ ५६ ॥

अहो, कियदुज्ज्वलं मातुर्मे विष्णुप्रियाया निखिल-स्नेहसुव्यञ्जकं मधुरस्मितम्। जननी मे कोमलपादपातेन नखद्युतिभिश्च पद्म-वनमिव संसृजन्ती मधुरं संचरति। स्थित्या सर्वंसहा अष्टकुलाचल-धारिणी सप्तसमुद्रमुद्रिता शेषनागमूर्धस्थिता वसुधेव शोभते। दन्त-कौमुदीरुचिरा लपन्ती सा त्विड्राशिसहस्रं शारदचन्द्रिकाविधौता निशीथिनीव सर्वतो विकिरति। वस्तुतः सा श्रुतिवाक्यानुसारेण स्वयम् अर्धं "वृगल" मिव मधुरिम्णाऽराजत। गौर-विष्णुप्रिया-महामेलनेन परमात्मा पूर्णवृगलमिवाद्य प्रकाशते।

सनातनः। वैवाहिक! पश्य पश्य, कश्चन सन्न्यासिवेशधारी भक्तो गौर-विष्णुप्रियासम्मेलनं दृष्ट्वा परमहृष्टो गायन्नित एवायाति।

( ततः प्रविश्य भक्त-गायको गायति )

प्रिया-गौर-सम्मेलन-भक्तिप्रेम-विमिश्रणा-
जाता परा सुरधुनीधारा।
करोतु धरित्रीमिमां शाश्वतिक-पुण्यसीमां
देवद्रुमच्युत-पुष्पसारा॥ ५७॥
सेवा-दया-शुभ-क्षान्ति-मित्रता-ममता-शान्ति-
सौरभाह्लादित-सर्वविश्वम्।
सुधायतां विषभाण्डं हिंसाद्वेषप्रचण्डं
घटयतु सौभ्रात्रक-प्रकर्षम्॥ ५८॥

चन्द्रशेखरः। अहो अमृतवर्षिणीयं गीतिः गौरविष्णुप्रिययोः सुमहद्-भविष्यत् सूचयति। भक्तस्याशीर्वाणी दम्पत्योर्जीवनं करोतु च्छन्दोमयम् आनन्दविप्लावितं जगज्जनानां सुखायास्माकञ्च। भक्तवर! गृहाणास्मत्प्रणतिम्।

भक्तः। कल्याणमस्तु, कल्याणमस्तु ( निष्क्रान्तः )।

सनातनमिश्रः। वैवाहिक! पश्य पश्य, वैदिकब्राह्मणानां चिराचरित-प्रथानुसारेण कन्यावरपक्षीययोः परमकौतुकावहः शास्त्रीयो विचारः प्रारब्धः, तदित एवागम्यताम्।

---

## सप्तमोऽङ्कः

### [ कन्यागृहे विवाहसभा ]

( समागता वरपत्तीया यथास्थानमुपविष्टाः )

कन्यापत्तीयः स्वीयोपाध्यायप्रेरितः कश्चन शिष्यः । ( उत्थाय ) ब्राह्मणेभ्यो नमः । समागताः सभ्याः !

रीतिर्वैदिकपाणिपीडनसदस्येषा चिराद् वर्तते
भाषन्ते वरयात्रिभिः सुरगिरा कन्याप्तलोका इति ।
युष्माकं विमतिर्यदीह न भवेदत्रागतानां तदा
योग्यः कश्चन भाषणस्य विषयः सम्प्रत्युपस्थाप्यते ॥ ५६ ॥

वरपत्तीयः । ( आसीन एव ) बाढम् , उपस्थाप्यतां तवाभिमतो विषयः ।

शिष्यः । "तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि" इदं काव्यलक्षणं व्याख्यायताम् ?

वरपत्तीयः । वत्स ! नैषा रीतिः प्रश्नस्य यद् व्याख्यामात्रं जिज्ञासेति ।

शिष्यः । का तर्हि रीतिर्भवदभिमता ?

वरपत्तीयः । व्याख्या तु टीकाकृद्भिरेव कृतेति टीकायामेव सा लभ्यते । परं टीकायां मूलग्रन्थे वा यदि काचिद् अनुपपत्तिः स्यात् सा प्रष्टव्या ।

शिष्यः । कुतः पुनरीदृशी प्रश्नप्रणाली वरपत्तीयैः समासादिता ।

वरपत्तीयः । ( सक्रोधम् ) किम् इति वरपत्तीयैरिति ब्रवीषि ? किं वयं तवोपहासास्पदम् ?

शिष्यः । मा मैवं, किं कन्यापत्तीया वरपत्तीयान् उपहसितुमर्हन्ति ? परम् एतत् पृच्छामि 'वयम् उपहासास्पदम्' इति यद् भवता प्रयुक्तं तत् किं व्याकरणानुमोदितं स्वकपोलकल्पितं वा ?

वरपत्तीयः । अत्र को दोषः ?

शिष्यः । विशेष्यविशेषणयोः समलिङ्गता समविभक्तिता समवचनान्तता चास्माभिर्ज्ञायते । अत्र तु वयम् इति विशेष्यपदं पुंलिङ्गे प्रथमाबहुवचने च वर्तते, विशेषणं पुनः उपहासास्पदम् इति पदं क्लीबे प्रथमैकवचने च प्रयुक्तम् आस्ते ।

वरपक्षीयः । बालोऽसि, केवलम् अध्ययने प्रवृत्तोऽसि, तन्न जानासि विशेष्यविशेषणयोः प्रयोगविधिं, पृच्छ स्वम् आचार्यं स एव ते निर्णयं विधास्यति ।

शिष्यः । किमिति ? भवता सह विचारो वर्तते, भवतैव दातव्यं प्रश्नस्योत्तरं कथम् आचार्यं पृच्छेयम् ? नायं समुदाचारः ।

वरपक्षीयः । ( सक्रोधम् ) अपि नाम समुदाचारोऽप्यद्य वरपक्षीयैः कन्यापक्षात् शिक्षितव्यः ? अहो धार्ष्ट्यं शिशोरस्य ।

शिष्यः । ( किञ्चिदसहिष्णुः ) आर्य ! किमिति वारं वारं शिशुरयं शिशुरयमिति ब्रवीषि, किं नाम न श्रुतं भवद्भिर्यत् "न तेन वृद्धो भवति येनास्य पलितं शिरः" इति ? नाहम् अद्यापि विजितो भवता । तत् अलम् अनेनालीकभाषणेन ?

वरपक्षीयः । किम् ? माम् अपण्डितं ब्रवीषि ? तवाध्यापकस्यापि न शक्तिर्माम् अपण्डितं वक्तुम् , दुग्धपोष्यस्य ते तु का कथा ? अरे पण्डितम्मन्य, शीघ्रं प्रश्नं कुरु, दर्शयामि ते पाण्डित्यम् ।

शिष्यः । प्रश्नस्तु कृत एवास्ते, व्याख्यायतां काव्यलक्षणम् इति ।

वरपक्षीयः । पुनः स एव प्रश्नः ? एवं तर्हि त्वम् एव तावत् कथय, का नाम व्याख्येति ।

शिष्यः । मयैव प्रथमतः प्रश्नः कृतः, तस्य तावदुत्तरम् आदौ दीयताम् , पश्चान्मया भवत्प्रश्नस्योत्तरं दास्यते ।

( नेपथ्ये ) हं हो संस्कृतालापनिरताः, शृण्वन्तु भवन्तः—

निमित्तीकृत्य यत् कर्म यूयमत्र समागताः ।
अनुषक्तं परित्यज्य प्रकृते तत्र सज्जथ ॥ ६० ॥

इदानीं विवाहकालः समुपस्थितः, तिष्ठत्वर्धपथ एव विचारः, इच्छन्ति चेत् परतः पुनर्विचारं करिष्यन्ति भवन्तः ।

( प्रविश्य ) सनातनः । आयुष्मन्तौ !

आविष्कृतं युवाभ्यां तुल्यं विचारसङ्गत्वं सदसि ।
एतावतैव रीतिं मन्ये परिपालितां विवाहस्य ।
यस्मादेषा वहुलप्रचारमूला संस्कृतभाषायाः ॥ ६१ ॥

तदागच्छत यूयं विवाहदर्शनाय।

( सर्वे उत्तिष्ठन्ति । )

सनातनमिश्रः । आचार्यरत्न ! यद्यनुमन्यते भवता—वरः श्रीगौरसुन्दरः सम्प्रदानस्थानं मया नीयते ।

आचार्यरत्नः । अत्र को वा प्रश्नावसरः । एवं क्रियताम् ।

[ सर्वे वरेण सह प्रस्थिताः ]

[ ततः प्रविशतो विष्णुप्रिया-गौरसुन्दरौ ग्रन्थिवद्धवस्त्राञ्चलौ कश्चन गीतिकारश्च

गौरसुन्दरः । प्रिये ! इत एहि, इत एहि ।

गीतिकारः । ( "कृष्णनामसुधाधारा विश्वहित-परात्परा" इत्यादि गायति । )

विष्णुप्रिया । नाथ ! कथं मे पादः स्खलति, हा हतभाग्यास्मि ।

( इत्युपविशति )

गौरहरिः । प्रिये ! न ह्यात्मनो दुःखं चिन्तय, नैतत् किमप्यशुभकारणम् । मया सार्धम् आगच्छ ।

विष्णुप्रिया । ( विषण्णा ) हुँ, गच्छामि । ( सर्वे निष्क्रान्ताः )

---

## अष्टमोऽङ्कः

### [ शिष्या-विष्णुप्रियासंवादः ]

( ततः प्रविशति शचीदेवी । )

शची । वधूमातः ! नयनयोः कज्जलं मे ! अनन्ततृष्णातुराया मेऽयाचिता-कालवारि ! अन्धकाराच्छन्न-जीवनस्य मे शान्तस्निग्धचन्द्रिके ! जीर्णभवनस्य मे शाश्वतवर्तिके !

माध्याह्निको भोजनकाल एष ते
दूरं व्यतीतः क नु पुत्रि वर्तसे ?
क्लेशं विजानासि न राजपण्डिता-
त्मजा किमाहारविधौ चिरायसे ? ॥ ६२ ॥

पुनः श्रमाधिक्याद् भोजनाद्युपेक्षावशतो वा रुजा त्वामधिकरिष्यति चेत् सर्वाग्रतोऽहमेव चिन्ताजर्जरिता शोचनीयतां गमिष्यामि । झटित्यागच्छ, मातः ! आगच्छ ।

( विष्णुप्रिया प्रविशति )

विष्णुप्रिया । मातः ! मा मा चिन्तातुरा भव । कार्यव्यापृता आसमिति भोजनकालो मे किञ्चिदिवातिक्रान्तः । पश्य मातः !

सम्मार्जन्या सजलपृषता शोधयित्वा गृहान्तः
स्नानप्रीतामकरवमहं पद्मिनीं चन्दनाख्याम् ।
धेनुश्चैनां तदनु धवलीं कुर्वती घासतुष्टा-
माह्वानात्ते द्रुततरगतिस्त्वत्समीपं समेता ॥ ६३ ॥

तदनन्तरमप्यासते करणीयानि बहूनि । किन्तु जननि ! त्वयि चिन्ताक्लिष्टायां न मे चित्तं सुखमादधाति । निजगृहकार्यैर्न मे शरीरं कदाप्यस्वस्थतां भजते !

शची। किन्तु मातः ! वदनं तेऽतीव शुष्कं शीर्णमिव दृश्यते। निरन्तर-गृहकर्मभिर्नात्मानं कुरु खिन्नम्।

त्वं कल्पवल्ली ननु नन्दनस्थ
जीर्णं ममोद्यानमिदं समेता।
यद्वारविन्दोदरवासिनी श्री-
श्छलेन दीनालयमागतासि ॥ ६४ ॥

मातः ! त्वं मे हृदयकमलदलनिषण्णा सुखिनी भव। त्वमसि मे दिवं गतानामष्टदुहितॄणां पूर्णसमन्वयरूपा। अथवा त्वमसि मे श्वशुर-कुलस्य सर्वस्वं सर्वपुण्यफलम्। ( नेपथ्याभिमुखमालोक्य ) ईशान ! ईशान ! किं त्वं करोषि ? सर्वादरैगौराङ्गं त्वं वाल्यात् पालितवान्। किन्तु मम प्राणाधिकेयं वधूमाता अनशनेन क्लिश्यते। तद्विषये कथमनवधानोऽसि ?

( त्वरितं प्रविशति ईशाननागरः )

ईशाननागरः। महामातः ! अहं भूयो भूयो भोजनार्थं वधूमातरम् अनुरुद्धवान्। परमस्नेहसंवला सा स्निग्धस्मितेन मां प्रतिवारं प्रत्याख्यादिति कृत्वा किं वा मे करणीयम् ? ( विष्णुप्रियामुद्दिश्य ) सर्वजन्मजन्मान्तराग्रजे ! महामातुर्वचनं शृणु। अशनभूषणादिषु शिथिलादरा मा भूः। चक्षुर्मणिस्त्वं सर्वेषामत्रत्यानां सा त्वं लोकहेतोः खिद्यसे चेत् सर्वे भृशं क्लेशिष्यन्ते।

विष्णुप्रिया। श्वश्रूमुद्दिश्य ) मातः ! मातः ! मा मा दुःखमापद्यस्व। स्वल्पमपि ते दुःखं मां करोति विचेतनाम्।

पुरापि पाणिग्रहणात् प्रभूतं
प्राचीकशस्त्वं मयि वत्सलत्वम्।
तस्याः स्नुषात्वं तव लब्धवत्याः
काम्यान्तरं मे किमतोऽस्ति लोके ॥ ६५ ॥

यत् पुनस्तव हृदये एतादृशं स्थानं मे तदचिन्तितपूर्वं तुरीयं वस्तु मया तवैव महामातुः कृपया लब्धम्। नागरपितः!

प्राणपतिर्मम लालयताङ्के
यद् भवता गमितो ननु वृद्धिम्।
कामयते तदियं विनियोगं
नानुनयं कृपणां तनया ते॥ ६६॥

ईशाननागरः। (स्वगतम्) कथं साक्षाज्जगदम्बिकेवेयं मां सर्वदा तदायत्तं करोति। अस्याः पुरतो नाहं व्यक्तिः, परं तु क्षुद्रं स्नेहवस्तु इति केवलमवभासते मे। महासौभाग्यात् समागता गौरसुन्दरेण मधुवर्षिणी माधवी माधवप्रिया। रमहासिनी विश्वरमणीया रमा। (प्रकाशम्) नित्यप्रणम्येऽग्रजे! अतिक्रामति भोजनकालः। कुरु दूरे मातुश्चिन्ताम्। स्वास्थ्यसंरक्षणे च तत्परा भव।

विष्णुप्रिया। (ईशानमुद्दिश्य) नागरपितः! मातृविषये चिन्ता माम् आकुलीकरोति। मत्सम्बन्धि भयं किमपि नास्ति। (श्वश्रूमुद्दिश्य) मातः! कथं चिन्तापरायणाऽसि? नाहं क्षुत्पीडिता श्रान्ता वा। त्वच्छ्रीचरणाश्रयिण्या मे कुतः श्रान्तिः क्षान्तिर्वा।

मातुः स्नेहसुधा कन्यां करोति जयिनीं सदा।
धर्म्यकर्मविधौ चापि प्राग्रेसरयति ध्रुवम्॥ ६७॥

मन्ये वहिः समागता मे सर्वाः पाठार्थिन्यः। ताभ्यो विद्यादान-काले हृदयं मे दूरं सुदूरं दूराद्दूरतरं प्रयाति—परमपितुः कृपया तेन सहैव पुनः प्रत्यागच्छति च॥

परिस्फुरति सर्वत्र ममानन्दपरम्परा।
पयःकलकले पवनर्तने शष्पदोलने॥ ६८॥

त्वत्कृपयैव ममैतन्महत् सार्थक्यम्।

शचीमाता। ईशान! विद्यार्थिन्यः सर्वा अत्रैवागच्छन्तु। मया वहिर्गम्यते। ईशान! ताः सर्वा अत्राह्वय।

ईशाननागरः। ( विष्णुप्रियामुद्दिश्य ) अर्धघण्टामित एव ते समयः।

विष्णुप्रिया। मातः! ईशानपितश्च! स्वल्पा मे विद्या ; तदर्थमहं सर्वदाऽस्मि सङ्कुचिता। किन्तु विद्यार्थिनीनां ज्ञानपिपासु चक्षुर्यदा मामुद्दिश्य विस्फारितं कातरं च चकास्ति, तदा मे घटते वहिर्जगद्विषये विस्मृतिः। इयं मे केवलम् आशा—

शशिचन्द्रिका सामान्या तयाऽपि पृथिवी धन्या
तृणेनापि जगज् जायते कोमलम्।
खरकर-दिनकर-विभाधर-प्रेमशिशिर-
प्रतिफलितमिन्द्रधनुश्चेतः करोति विह्वलम् ॥ ६९ ॥
सामान्यं मम यतनं त्वत्कृपया कोटिगुणं
भूमपादे स्वकस्थानं लभतामनुकूलम्।
मातृस्नेहहिल्लोल-दोदुलचित्तशतदल-
नर्तन-प्रणमन-स्थलं त्वच्चरणयुगलम् ॥ ७० ॥
मातृदेवीचरणकमलयोः कोटिकोटिप्रणामा मे।

( वहिर्गच्छतः शचीमाता ईशाननागरश्च )

( पुनः प्रविशति ईशाननागरः श्रीमती-भामती-यमुना-कावेरीभिः सह )

सर्वा विद्यार्थिन्यः। साष्टाङ्गं प्रणामाम आचार्याम्।

विष्णुप्रिया। आशीर्वादान् मे गृह्णीत। सर्वा यूयं सुखमुपविशत। अपि कुशलम्?

सर्वाः। मातः! तवाशीर्वादेन सर्वं कुशलम्।

विष्णुप्रिया। विगते दिवसे युष्माभिः किं ज्ञातम्, तद्विषयमधिकृत्य श्रीमती साम्प्रतं ब्रवीतु।

श्रीमती। ह्यो भवत्या दहराकाशतत्त्वं सुललितं व्याख्यातम् आसीत्।

विष्णुप्रिया। अपि तत् सम्यक् त्वया बुद्धम्?

श्रीमती। न हि आचार्ये! न हि पूर्णतया। भूमा महान् विराट्—स

कथं जीवस्य क्षुद्रहृदयपुण्डरीक-स्थितदहराकाशे विराजेत ? तादृशो महान् कथमेतादृक् क्षुद्राकृतिर्भवेत् ?

विष्णुप्रिया। अद्य पुनरपि तत् सर्वा यूयं शृणुत। जलस्य जलत्वं यथा विन्दौ तथा विशाले तरङ्गेऽपि। अग्नेरग्नित्वं यथा स्फुलिङ्गे तथा प्रचण्डदावानलेऽपि। पुष्पस्य सुवासो यथा पुष्पदले तथा पुष्पकोशेऽपि। एवं भगवतः सत्ता सर्वव्यापिनी यथान्तस्तथा वहिः, यथा विस्तृते नीले नभसि, तथा दहराकाशेऽपि।

कावेरी। आचार्ये! भगवतो लीलाव्यापारोऽपि नास्माभिर्बुद्धः।

विष्णुप्रिया। श्रूयताम्।

क्षुद्ररूपेण भगवतो दहराकाशावस्थितिः—इयमपि भगवतो लीला। जीवेन सह लीलाया इयमेव भगवतः शाश्वती पद्धतिः। जीव ईश्वर एव। ईश्वरो जीवो भूत्वा स्वेन सह स्वयं प्रेम-लीलापरायणो जायते आत्मारामः। यो महतो महीयान् स एवाणोरणीयान् इति।

यमुना। जननि! भगवल्लाभाय क उपायः? का वा तस्याराधना-पद्धतिः?

विष्णुप्रिया। भगवल्लाभो न ज्ञानेन, परन्तु प्रेम्णा। न तर्केण, परन्तु विश्वासेन; न वाह्यिकाचारानुष्ठानाडम्बरेण, परन्त्वन्तः-पवित्रतया; न शुष्कतत्त्वकथया परन्तु पुण्याचरणेन नारायण-सेवया वा।

( ततः प्रविशति कश्चन जीर्णवसनपरिहितो भिक्षुकः )

भिक्षुकः। मातः! कृपया भिक्षां देहि भिक्षवे। अन्नाभावात् प्राणा ओष्ठागताः। दरिद्रस्य प्राणान् रक्ष। जगदीश्वरि अम्बिके! प्राणान् रक्ष।

भामती। मातः! भवती स्थानं मा परित्यजतु। मया सहास्त एका मुद्रा। सैव प्रदेया।

विष्णुप्रिया। कल्याणं ते भूयात्। भिक्षवे किञ्चन देहि। मयाऽपि भोज्यमस्मै दीयते।

भिक्षुकः। यथा शिक्षादात्री चिरक्षेमङ्करी जननी, तथा विद्यार्थिन्यः। यथा लतिका तथा तस्याः कलिकाः। जनन्यः! सर्वा आयुष्मत्यो भवत। ( भिक्षुको निष्क्रान्तः )

श्रीमती। मातः! भगवतो राज्ये कथमेतावद् दुःखं कथं वा लोकोत्तरं सुखं कस्यचन ?

विष्णुप्रिया। सकामकर्मणः फलमिदम्। यथा विषवृक्षाद् विषफलं जायते अमृतबीजाच्चामृतफलं तथा मानवस्य पापाद् दुःखं जायते पुण्याच्च सुखमिति। भूयोऽस्य विषवृक्षस्य विषफलसर्जने तथामृत-वृक्षस्यामृतफलदाने यथा पर्जन्यस्य पक्षपातबुद्धिर्नाशङ्कनीया एवमेव

पर्जन्यवद् भगवतस्तनुभृत्सु वृत्ति-
र्नोदारता कृपणता च विशङ्कनीया।
वैषम्यहेतुरिह कर्मफलं स्वकीय-
मज्ञा हि दोषमखिलात्मनि योजयन्ति ॥ ७२ ॥

कावेरी। आचार्ये देवि! करुणामयस्य भगवतः का प्रकृतिः ?

विष्णुप्रिया। इयमेव दर्शनशास्त्रस्य शाश्वतिकी जिज्ञासा। तज्ज्ञान-लाभार्थमेव साधकानां चिरन्तनी साधना, त्रिभुवनस्य शाश्वतिकी कामना। स कः? स किम्? स कथम्? एतत्प्रश्नत्रयमेव मुनीनाम् ऋषीणां द्रष्टॄणाम् समाधानविषयः। तज्ज्ञानमेव ब्रह्मज्ञानम्। अहो स्वल्पज्ञाऽहं कथं तद्विश्लेषणे पारगा भवामि।

भामती। देवि! भवत्या उपदेशं श्रुत्वा वयं कृतकृतार्था जाताः। भवत्याः श्रीचरणाश्रिता वयं भवच्चरणाश्रयणं जन्मजन्मान्तरानुसारि कामयामहे।

विष्णुप्रिया। युष्माकं भक्तिः प्रशंसार्हा। शृणुत
प्रेमानन्दोऽमृतमथ रसो द्योत एतत्समष्टि-
र्ब्रह्माभिन्नः परमपुरुषः सुन्दरः काममेतैः।
सोऽयं देवो नयनरमणस्तीव्रभक्त्येकलभ्य-
स्तल्लाभार्थं कुरुत नियतं यत्नमत्यादरेण॥ ७३॥

(विष्णुप्रिया बाह्यज्ञानशून्या)

सर्वाः। अहो मातू रूपम्! चमत्कारिणी विभा च! जीवनं धन्यम् अस्माकम् अस्याः पादपद्माश्रयेण। जागृहि मातः! कृपादृष्टिं कुरु।

विष्णुप्रिया। (चक्षुरुन्मील्य)—मातरः! शाश्वतसुखं युष्माकं भूयात्।

(सङ्गीतम्)

स्मरत श्रीकृष्णनाम।
यस्य स्मरणात् त्यजति क्षणाद् दुरितं धरित्रीधाम।
जपत श्रीकृष्णनाम।
क्षणिकजपनं सर्वदुःखहरं येन नन्दति सदा रामः॥ ७४॥
भजत श्रीकृष्णं स्मरत श्रीकृष्णं कीर्तयत श्रीकृष्णनाम रे
वदत हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे
नदीयानन्दपुरे
गायत हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे॥
दुरितं यातु दूरे रे वदत हरे कृष्ण हरे हरे॥
नन्दनन्दनश्चिरकल्याण आयातु मे प्राणारामः।
स्मरत श्रीकृष्णनाम
जपत श्रीकृष्णनाम॥ ७५॥

(सर्वा निष्क्रान्ताः)

---

३

# नवमोऽङ्कः

## [ पाषण्डसमुद्धारः ]

स्थानम्—श्रीवासाङ्गनम्। समयः—रात्रिः ॥

( प्रविशति श्रीगौराङ्गः कीर्तनरतः—अद्वैत-नित्यानन्द-श्रीवास-श्रीराम-गदाधरप्रभृतिभक्तैः सह )

श्रीवासः। देव! भवत आगमनेन पुनरपि धन्यं जातं मे गृहम्। भवदर्शनसमुत्सुकाः समागताः सर्वे भक्ता अद्य दिग्दिगन्तेभ्यः। प्रारभ्यताम् अस्माकं कीर्तनोत्सवः।

गदाधरः। लीलावतारेण विभो! तव क्षितौ
न केवलं भक्तजनाश्चकासति।
परं त्वभक्ता अपि केचनाधुना
पान्था ह्यभूवन् वत भक्तिवर्त्मनः ॥ ७६ ॥

तथापि, परं सन्त्यपरेऽपि केचिदभक्ता येऽस्माननवरतम् अवसादयितुं यतन्ते इति दुःखाकरमिदम्।

श्रीरामः। श्रूयते किल भक्तिविरोधिनोऽस्माकं गृहमवरोद्धुं कृतसङ्कल्पा वर्तन्त इति। एते कलुषितात्मान इष्टानिष्टबोधेऽप्यपारगा इत्यहो दुःखम्।

श्रीगौराङ्गः। अलं चिन्तया, प्रारभ्यताम् अस्माकं कीर्तनम्।

( सर्वे गायन्ति )—

हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे।
हरे राम हरे राम राम राम हरे हरे ॥

श्रीगौराङ्गः। भो भक्तगायक! त्वया हरिनाम क्रियताम्।

भक्तगायकः। मनः कुरु हरिनाम सारं रे
अकूलपारावारतरणकारणं केवलं हरिनाम रे ॥ ७७ ॥

[ प्रचण्ड-हुङ्कारभीषणा दुर्वृत्ता जिघांसया श्रीवासस्य गृहं प्रवेष्टुं यतन्ते ]

पाषण्डदलनेता। सम्भूय सर्वे हरिनामयज्ञैः
प्रेप्सन्त्यमी यां महता श्रमेण।
तामद्य मत्तो भवबन्धहानिं
सद्यो निरायासमवाप्नुवन्तु ॥ ७८ ॥

निशायाम् एते कारणवारिपानादिनात्मविनोदनं कुर्वन्ति। जानन्ति किलैते मधुमतीसिद्धिम्। मन्त्रसंयोगेनैते रात्रौ पञ्चकन्या आनयन्तीति ध्रुवमेव।

पाषण्डानामन्यतमः। कथं वा एते सदा हरिनामशब्दैर्मृदङ्गोत्तालरवैश्चास्माकं कर्णपटहान् भिन्द्युः। तस्मादद्य सर्वापच्छान्तिं निश्चितं करिष्यामः।

पाषण्डदलनेता। ( श्रीगौराङ्गं दर्शयित्वा )
यो ह्यत्र गौरावयवः स एषां
नेता सरत्तीर-सुपीनकायः।
प्रेष्यैनमादौ शमनालयाय
कण्ठानसीषां नचिरेण लप्स्ये ॥ ७९ ॥

एते महोच्चशब्दकारिणो न जानन्ति कस्यां दिशि निवसति यम इति।

श्रीवासः। भो बन्धवः! कथं यूयं देवस्य गौराङ्गस्य संकीर्तनबाधां जनयथ। अपि न जानीथ—
प्रतिपादक्षेपेण नृत्यप्रसङ्गिनो भगवतः।
दुरितमखिलं भुवनस्य भवत्यपसृतं हि पलकमात्रेण ॥ ८० ॥

तेनैव प्रवाहिता भक्तिभागीरथीधारा जगत् सर्वं साम्प्रतं परिप्लावयतीति।

पाषण्डनेता। कस्त्वं प्रभुः प्रभुरिति प्रतिशब्ददीर्घं
नादं करोषि ? भुवने प्रभुरेक एव।
एकोऽहमेष हि महान् प्रभुरस्मि चाहं
मद्बाहुवेगविजितं जगदस्ति सर्वम् ॥ ८१ ॥

न जानासि स्वयं भक्तिदेव्यपि जंगम्यमाना मां निनंसति। भक्ति-भागीरथीधारेति किम् ? भक्तिसमुद्रमप्यहम् अगस्त्यो भूत्वा गण्डूषेण पास्यामि। अथवा वलमार्तण्डोऽहं तव भक्ति-भागीरथीधारोत्सं मुहूर्तमात्रेण शोषयिष्यामि।

पाषण्डानामन्यतमः। सुष्ठु भणितम् अस्माकं नेतृवर्येण। एतेषां दर्पः क्षणेन चूर्णीकृतो भवतु।

गदाधरः। भ्रातरः ! एषैवास्माकम् ऐकान्तिकी प्रार्थना—भवन्तः कृपया शान्ता भवथ। अपि भवद्भ्यो विश्वमनोहरा भगवद्गीतिर्न रोचते ?

पाषण्डनेता। फुः ! अहो ! मधुरिममयी गीतिः। शृणुतास्माकं कीर्तनम् इतोऽपि मधुरतरं सारवत्तरं च। मया गीयते—

भोजनं मांसरहितं लपनं सुन्दरीं विना।
गमनं पादचारेण नरकः कोऽस्त्यतः परः ? ॥ ८२ ॥
पञ्चमकार-संसिद्धिः सम्प्राप्तसुखसेवनम्।
विरोधिनां विघातश्च स्वर्गो वा क इतः परः ? ॥ ८३ ॥

तद् भवतु नाम, समय एष आक्रमणस्य। मा विलम्बं कुरुत।

पाषण्डिणः। अग्रेसरा भवथ, अग्रेसरा भवथ।

( पाषण्डा गृहद्वारार्गलं भङ्क्तुमुद्युक्ताः )

गदाधरः। प्रभो ! भवान् पश्यतु, किं संघटते। अवरुद्धं सर्वतः श्रीवासस्य गृहम्। एष समयोऽस्माकं पुरीरक्षकाह्वानस्य। एते गृहाभ्यन्तरं प्रविशन्ति चेत् अस्माकं महदनिष्टं भविष्यति।

प्रभुः। नहि,

मनोजय्यं विजेतव्यास्त एते वैष्णवैर्नृभिः।
न तु कायेन निग्राह्याः स पन्थाः क्षत्रगोचरः॥ ८४ ॥

भक्तिधर्म एवैतान् पराजेष्यते। यूयं सर्वे हरिनाम कुरुत।

प्रभुः । ( शनैः पाषण्डान् प्रत्यग्रेसरति )

हरेर्नाम हरेर्नाम हरेर्नामैव केवलम् ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥
जप कृष्णं भज कृष्णं वद कृष्णनाम रे ।
कृष्णनामैव तरणमकूले भव-सागरे ॥ ८५ ॥

जप कृष्णं भज कृष्णम् ।

भो विश्वपितुः प्रियपुत्राः !

परानिष्टाकाङ्क्षामपनयत दूरं स्वहृदयात्
तथा हिंसावृत्तिं ननु निरवशेषं दवयत ।
हरेर्नामैवैकं परमहितमस्मिन् कलियुगे
यदेतत् स्वल्पायुस्तदपि न यथेच्छं क्षपयत ॥ ८६ ॥

पाषण्डनेता । अहो निरुपमानको जगति दुर्लभो विग्रहो
यदस्य परिलोकनाद् विलयमेति हिंसा मम ।
गभीरमवगाहते हृदयमद्य भावो महान्
क एष क इमे जना भजननामयज्ञर्त्विजः ? ॥ ८७ ॥

अन्यपाषण्डः । भ्रातः ! सत्यं ममापि चित्तमनेन दिव्यपुरुषेण चिरायाधिकृतम् ? प्रयतमानोऽपि कथं नाहम् इष्टकखण्डमुत्तोलयितुं शक्नोमि ?

प्रभुः । मोदन्ते मम हिंसयाऽल्पमपि चेदेते भवन्तस्तदा
स्यान्मोदाय ममापि तत् परमिदं बद्धाञ्जलि प्रार्थये ।
श्रीमन्तः सुखिनो भवन्तु सुतरां सद्भक्तिमार्गे स्थिता
अन्ते वः करुणामयः स भगवान् मोक्षाय संपद्यताम् ॥ ८८ ॥

पाषण्डनेता । हे अलौकिकमहिमन् महापुरुष !

आविर्भावः स्वगणसहितस्येश्वरस्य श्रुतं न-
स्त्वां प्रत्यक्षीकृतवत इदं मह्यमाभाति सत्यम् ।
सत्यं देवः सहपरिकरस्तारणायाधमानां
कल्पे कल्पे कलयति तनुं किञ्च लोके विहर्तुम् ॥ ८९ ॥

श्वेतो वर्णस्तव कथं, कथं नील इवावभासते मे? को वासौ नातिदूरे बलदेव इव लक्ष्यते?

चिरदुष्कृतिकारिणोऽपि मे यदियं भागवती कृपाभवत्।
तदिदं तव देव चाक्षुषीकरणस्यैव फलं विभाति मे ॥ ९० ॥

अहो भाग्यम्! द्वापरलीलाचतुरः स्वयं श्रीहरिर्मह्यं पादाश्रयमद्य दत्तवान्।

मम बान्धवाः सर्वे! यूयमपि भगवच्चरणारविन्दं भजध्वम्।

प्रभुः। युष्माकं सर्वेषां मङ्गलं भूयात्। सर्वे यूयं हरिनामसंकीर्तन-रससिक्ता भवत।

हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे।
हरे राम हरे राम राम राम हरे हरे ॥
जप कृष्णं भज कृष्णं वद कृष्णनाम रे।
कृष्णनामैव तरणमकूले भव-सागरे ॥
जप कृष्णं भज कृष्णम् ॥ ९१ ॥

( श्रीगौराङ्गो नृत्यति, किन्त्वन्यमनस्क इव दृश्यते। )

गदाधरः। प्रभो! कथं भवान् दुर्मनायमान इव लक्ष्यते। अपि काचन बाधा भवन्तं क्लिश्नाति?

प्रभुः। महता प्रयासेनापि नाहमद्य शान्तिम् अवाप्नोमि। मन्ये, किमप्यनिष्टं जातं भक्तमण्डले।

श्रीरामपण्डितः। ( गदाधरमुद्दिश्य ) अहो स्मर्यते किलैकदा कीर्तनानन्दं बाहुल्येनोपभोक्तुं ममाग्रजस्य श्वश्रूदेवी आवरणाभ्यन्तरे आत्मानं गोपयामास। तेन महत् आसीत् प्रभोः कष्टम्।

गदाधरः। सत्यमेव तत्। श्रीवासपण्डितेन दूरीकृतायां बाधायां प्रभुः शान्तिमलभत।

श्रीवासः । ( स्वगतम् )

अहो महान् भक्तजनानुरागः
कृतावतारस्य महात्मनो नः ।
एतत्समो भक्तहिताभिलाषी
भूमण्डले नावततार कश्चित् ॥ ६२ ॥

प्रभुः । ( श्रीवासमुद्दिश्य ) तव गृहे किमप्यशुभं संघटितं नु ? अचिरान्मां ब्रूहि ।

श्रीरामपण्डितः । देव ! प्रभो ! कियत्कालात् प्राङ् ममाग्रजस्य तत्रभवतः श्रीवासपण्डितस्यैकमात्रतनयो मातुर्वक्षसि शेषनिःश्वासमत्यजत् ।

सर्वे । अहह ! दारुणो दैवदुर्विपाकः ।

श्रीरामपण्डितः । प्रारब्धेऽस्मिन्नामयज्ञे सुपुण्ये
मा भूद् विघ्नः कश्चनेति प्रधार्य ।
आर्यः शोकं सन्निगृह्यान्तरेव
प्रेमोन्मत्तो भावगुप्तिं विधत्ते ॥ ६३ ॥

प्रभुः । ( श्रीवासमुद्दिश्य ) अहो धैर्यम् अहो मनोबलं श्रीवासपण्डितवर्यस्य । सत्यमेवासि त्वं भक्तश्रेष्ठः, सत्यमेव त्वं महाप्राज्ञः । आत्मा वै जायते पुत्रः । पुत्रशोकवच्छोकोऽपि नास्ति भूतले ।

भो भक्तोत्तम दर्शितोऽद्य महिमा भक्तेस्त्वया भूतले
यत्त्वं पुत्रवियोगदुःखविकलोऽप्यालम्बसे धीरताम् ।
शोकक्षोभविदीर्यमाणहृदयोऽप्याशङ्क्य विघ्नं विधौ
न त्वं मुञ्चसि नामकीर्तनमहो भक्तेस्तव प्रौढता ॥ ६४ ॥

प्रभुः । ( क्षणं विचिन्त्य स्वगतम् ). अप्येतादृशस्य महाभक्तस्य पुत्रश्चिराय पितरं त्यजेत् ? अथवा सत्यमेव यदि जीवनमस्यावसितं, महाप्रयाणेऽस्य नाहं बाधा भवेयम् ।

श्रीवासः । देव ! त्वं यत्र प्रभुः, स्वयं करोषि यत्र कृपावितरणं, तत्र साधारणजनस्य प्रयत्नेन किम् ? चिरदयालोर्भवत इयमेव कृपा

यन्मम पुत्रोऽद्य तस्य मातरं शोकसागरे निमज्य लोकान्तरं गत इति ! तवेच्छा सर्वथा शुभदायिनी ।

प्रभुः । यत् त्वादृशो मम न कोऽपि नितान्तभक्तः
प्रेयान् प्रियः प्रियतमोऽपि च यत् त्वमेव ।
द्वारे भवामि तव याचकवत् ततोऽहं
नृत्यामि च प्रतिदिनं सह भक्तवर्गैः ॥ ६५ ॥

श्रीवास ! आलिङ्गनं देहि मे, तव स्पर्शेन शरीरं मे भवतु शीतलं पवित्रञ्च ।

( इति प्रेम्णालिङ्गति ) ।

पाषण्डनेता । अहो महत् सौभाग्यं मे । भक्तभगवतोरपूर्वं माहात्म्यं दृष्ट्वा नूनमद्य मुक्तिर्मे जाता ।

जयत्यपूर्वो हरिनाममन्त्रो
जयत्यपूर्वो भगवत्प्रसादः ।
जयत्यपूर्वो दृढचित्तभक्तो
जयत्यपूर्वो महिमा च भक्तेः ॥ ६६ ॥

( सर्वे कीर्तनरता वहिर्गच्छन्ति )

---

## दशमोऽङ्कः

### [ शचीगौरसंवादः ]

स्थानम्—महाप्रभु-गृहप्राङ्गणम्

[ ततः प्रविशति शची गौराङ्गश्च ]

शची। वत्स गौर! यदाप्रभृति जन्मान्तरदुहिता मे विष्णुप्रिया मदीय-दृष्टिपथमागता तदाप्रभृति महतीयम् आशा सञ्जाता यदियं मे दुहितॄणामभावजनितं हृदयक्षोभं निराकरिष्यतीति। विधातृकृपया सफला मे आशा। मन्ये कन्यातोप्यधिकाधिकं स्नेहं मे समाकर्षतीयम्। लुप्तप्राया मे कन्यावियोगजा यातना। सेयं विष्णुप्रिया न केवलं मम परिवारस्य परन्तु समग्रस्य देशस्यापि लक्ष्मीरिव राजते। वयसा नवीनापि विद्यया बुद्धिप्राखर्येण च निखिल-नवद्वीपनारीसमाजस्य मुकुटायमानेव सा वर्तते। अस्याः खलु,

जानेऽन्यजन्मार्जितशास्त्रवासना
प्रोद्बोधितास्मिञ्जनने ह्यदृष्टतः।
विद्याममुष्या विदधे समुज्ज्वलां
नो चेत् कथं स्यात् प्रतिभेदृशी स्त्रियः॥ ९७॥

यथा शास्त्रालोचनार्थं त्वत्सकाशमायान्ति बहवः पुरुषास्तथा बह्वो नागरिक्यो जानपदाश्च रमण्यो विष्णुप्रियासमीपमागच्छन्ति जीवनपरिचालनादिशिक्षार्थम्।

समुन्नमयितुं मनो निजनिजं सदा योषितः
सुदूरतरदेशतोऽप्यहह यन्ति विष्णुप्रियाम्।
तयादरपुरःसरं सदुपदेशमापादिता
भवन्ति सफलशया अबहुनैव कालेन ताः॥ ९८॥

किञ्च,

संसारचर्यामभिलब्धुमुत्सुकाः
शिष्यायमाणा रमणीः समागताः ।
सेयं तथा शिक्षयते सुकौशलं
वृद्धाप्यहं येन भजामि विस्मयम् ।। ९९ ।।

श्रीगौराङ्गः । एतत् सर्वं भवत्प्रसादेनैव जननि ! संघटितम् । वधूमाता ते सन्तानेभ्योऽप्यधिकस्नेहमधिकुर्वाणा तिष्ठतु ।

आसीत्ते दशसन्तति-द्रुमसमाकीर्णं यदुद्यानकं
दुर्वारा नियतिस्तदद्य विदधे हाहा मदेकद्रुमम् ।
तत्रेयं लतिका विधातृकृपया तत्रैव लब्धास्पदा
प्रच्छायाशिशिरं तनोतु हृदयोद्यानं तवेत्यर्थये ।। १०० ।।

शची । शृणु वत्स ! शृणु । मम विष्णुप्रिया सर्वा मधुरकठोरं शिक्षयति । कस्या अपि दोषे उपलभ्यमाने

तीव्रं तिरस्कारवचस्तदीयं
तनोति शिष्यासु हितं प्रभूतम् ।
करोति कोपेन विनैव तासां
चेतांसि सा भीतिसमाकुलानि ।। १०१ ।।

वयसा बालिकाप्यसाधारणीं शक्तिं सा धारयति । तदत्र केवलमिदमाशासे

सेयं दुर्लभशक्तिर्दुःखनिपीडितनिखिलजगताम् ।
तापत्रयं हरन्ती चिरमम्लाना प्रचयं भजतु ।। १०२ ।।

श्रीगौराङ्गः । जननि ! तदेव भूयसा भविष्यति ।

एतादृशी शक्तिरदृष्टपूर्वा
न कल्पते व्यक्तिविशेषभूत्यै ।
भवेत् तया सर्वजगत् समृद्धं
दीप्त्या यथेन्दोरथवा खरांशोः ।। १०३ ।।

शची । पुत्र ! त्वया सुष्ठु कृतं मुकुन्दसञ्जयस्य चण्डीमण्डपाच्चतुष्पाठीम् अस्मद्गृहे स्थानान्तरितं कुर्वता । विष्णुप्रिया मे साम्प्रतं मधुरं हसति लपति—जीवनं तस्याश्छन्दःसुसमञ्जसं जातम् । तदहम् इदानीं केवलम् इदमेव प्रार्थये—

परस्परस्नेहविषक्तमानसौ
सुखं युवां तिष्ठतमेवमन्वहम् ।
अनुष्ठितैः शिक्षणादीक्षणादिभि-
र्महोपकारं तनुतं जनुष्मताम् ॥ १०४ ॥

अपि च,

उत्सङ्गे युवयोर्निधाय पलितव्याप्तं शिरश्चञ्चलं
स्वव्यापारपराङ्मुखे च नयने संन्यस्य वामास्ययोः ।
युष्मद्वक्त्रविनिर्गतामृतमयं श्रीनाम संशृण्वती
काले त्वज्जनकस्य सन्निधिमहं यायामिति प्रार्थना ॥ १०५ ॥

श्रीगौराङ्गः । (स्वगतम्) अहो ! मातुरयमभिलाषो मया पूरयितुं शक्येत वा ? कथमिति चेत्

आनन्दाय समुत्सुकं मम मनो नाल्पे कृतार्थं भवेत्
संसारे सुखतस्करे निविशते बीभत्ससारे न वा ।
पत्न्या किं किमुताम्बया किमुत वा सोदर्यमित्रादिभि-
र्ये मां लम्भयितुं न सन्ति कुशलाः कैवल्यमानन्दनम् ॥१०६॥

तदिह किं प्रतिवचनं मात्रे देयम् ? भवत्वेवं ब्रवीमि । (प्रकाशम्) जननि ! तवाभिलाषं पूरयितुं सर्वथाहं यतिष्ये, फलं पुनरीश्वरेच्छानुसारीति सर्वथा स्मर्तव्यमेव ।

याचस्व भगवन्तं तत् स्वाभिलाषप्रसिद्धये ।
स चेत् प्रीतो भवेद्देवो दुर्लभं किं जगत्त्रये ॥ १०७ ॥

(इत्युभौ निष्क्रान्तौ ।)

---

## एकादशोऽङ्कः

[ विष्णुप्रियायाः श्रीगौरविरहाशङ्का ]

स्थानम्—शचीदेव्या गृहप्राङ्गणम्

समयः—प्रातःकालः

( शचीमाता, ईशाननागरः, विष्णुप्रिया श्रीगौराङ्गश्च )

शचीमाता। ईशान ! वधूमाता मे कुत्रास्ते ?

ईशानः। मातः ! चट्टलपल्लीतः समायाता श्रील-पुण्डरीक-विद्यानिधि-सहधर्मिणी। विष्णुप्रिया तया साकमालपनरता वर्तते।

शचीमाता। वत्स ईशान ! वधूमाता मे स्वदेहनिरपेक्षा केवलम् अस्माकं कृते दिवसयामिन्यौ श्राम्यति। एतेन तस्याः स्वास्थ्यहानिरचिरेणैव कालेन भविष्यतीति शङ्के। पश्य,

सा धूपवर्त्येव चिरं ज्वलन्त्या
स्वदेहयष्ट्या कुरुते प्रियं नः।
किन्तु ज्वलन्ती सुभृशं समन्ता-
दुपैति शेषं नचिरेण वर्तिः ॥ १०८ ॥

ईशानः। मातः ! तवाशीर्वादेनाग्रजामणिर्मे भविष्यति सुचिरजीविनी। तस्या यशःसौरभं विश्वमखिलं संपूरयिष्यति। मातः ! गौराङ्गा-दप्यधिकाम् इदानीम् अग्रजामणिं मन्ये विष्णुप्रियाम्। पश्य मातः !

गौराङ्गश्चिरलालनाद् यदपि मे जातो नितान्तप्रियः
प्राणा मे स बहिश्चरा इति पुरा यच्चापि सम्भावितम्।
प्राप्तायां पुनरद्य लोचनपथं विष्णुप्रियायां मम
व्यत्यासः खलु तस्य तस्य मनसो भावस्य सन्दृश्यते ॥१०९॥

विष्णुप्रिया। ( त्वरितमागत्य ) जननि ! चट्टलपल्लीस्था श्रीलपुण्डरीकविद्या-

निधिगृहवासिनी सुशीला जननी कथयति यत्, "ज्ञानेन हरिर्लब्धव्यो न तु भक्त्या, भक्त्या तु स केवलं सन्निकर्षमानीयत" इति। मया तु मन्यते, ज्ञानेन हरिः केवलं कटाक्षवीक्षणायोग्यो जायते न तु लभ्यते। भक्तेरेव रीतिरेषा यत् सा हरिं निर्निमेषवीक्षणायोग्यं करोति। निर्निमेषवीक्षणाद् हरिर्हृदय एव केवलं वसति, नान्यत्र गन्तुं पारयति। ज्ञानमार्गान्वेषणेन तु स केवलं धावन्नेवास्ते।

शचीदेवी। वत्से! अस्मिन् विषये तवार्यपुत्र एव प्रमाणम्। अतः स एव त्वाम् उपदेक्ष्यति। काञ्चना कुत्रास्ते? काञ्चने!

( इति शचीदेवी निष्क्रान्ता। )

श्रीगौराङ्गः। ( स्वगतम् ) कथमियं कैशोरपाददेशमापन्नापि सर्वेषु भक्तिशास्त्रेष्वधीतविद्येव सर्वा योषितः शिक्षयते? ( विष्णुप्रियामुद्दिश्य ) विष्णुप्रिये! निरुपमा ते विष्णुभक्तिः। अत एव नाम्नापि विष्णुप्रियासि! अस्मिन् कलियुगे स्वयं भगवान् एव नामव्यपदेशेन सर्वत्रात्मानं प्रकाशयति।

विष्णुप्रिया। तत्रैवास्य कलिहतजीवस्य महती प्रत्याशा।

श्रीगौराङ्गः। देवि! शृणु। वैदिको यज्ञः खल्वस्मिन् युगे नामसंकीर्तने रूपान्तरितो भविष्यति। हरिनामैव प्रेमकल्लोलं संसारसमुद्र उत्तोलयिष्यति। तेनैव जीवजगतोः समुद्धारो जायेत। प्रेमा प्रेमतरणी च हरिनाम।

विष्णुप्रिया। ( परमाश्वस्ता ) एवं चेत् कथमावाम् अस्मिन् विषये तत्परौ न भवावः? त्वया साकम् अहमपि कठोरं प्रयत्नं करिष्ये। यदि तेन जगतः किञ्चन दुःखलाघवं भवेत्। यत्र कुत्रापि त्वं गमिष्यसि, अहमपि तत्र तत्र गमिष्यामि। त्वं यद् यद् व्रतं पालयिष्यसि, अहमपि तत्तदाचरिष्यामि।

प्रभो ! सहधर्मिन्यास्ते धर्माचरणं त्वत्परिचालनापेक्षि। मां तथा परिचालय यथाहं जगतो हिताय भवेयम्।

श्रीगौराङ्गः। ( सस्मितम् ) त्वं सर्वथा तथैव भविष्यसि। युगयुगान्तर-पुञ्जीभूता गाढतमिस्रा त्वयैवापनेया।

विष्णुप्रिया। नाथ! अन्यत् किमप्यस्ति वचनीयम्। विगतयामिन्यां स्वप्नदृष्टस्त्वमभाषिष्ठाः, यत् त्वं मां परित्यज्य गमिष्यसीति। प्रभो! सर्वमपि दुःखं सोढुं समर्थास्मि न तु त्वद्विरहम्। कथं वा त्वं मां परित्यक्ष्यसि ?

किं किञ्चित् स्खलनं प्रभो तव पदद्वन्द्वस्य सेवाविधौ
दृष्टं मे भवता ? त्वदीयवचनं किं वा मया लङ्घितम् ?
दौर्भाग्यादमतं तवास्ति विहितं किं वा कदाचिन्मया ?
येनैवं प्रतिकूलतां कलयते मय्येकपत्न्यां भवान् ॥ ११० ॥

अहो कष्टम्! विवाहवासरे सञ्जातं पादस्खलनमपि कथमद्य स्मृति-पथे समापतति ?

श्रीगौराङ्गः। देवि! किमेवमस्थाने पर्याकुलासि ?

पादं नैकमपि प्रसारितमहो द्वारात् परस्तान्मया
वासश्चापि तदेव कोमलमिदं यद्धार्यते सर्वदा।
वाचा नापि घृणात्तरप्रतिमयाप्युक्तो गृहान्निष्क्रम-
स्त्वं स्वप्नप्रतिपन्नवस्त्ववितथं मत्वा मुधा क्लिश्यसि ॥ १११ ॥

विष्णुप्रिये! सहनासहनयोर्भवितव्यतैव बलवती। तव नाम्नः सार्थक्यं त्वमवश्यमेव जगत्सकाशे प्रकटयिष्यसि।

विष्णुप्रिया। आर्यपुत्र! नाम्नः, परिवारस्य देशस्य वा– कस्यापि गौरव-हानिं नाहं वाञ्छामि। किन्तु त्वद्विरहो नाम्नापि मां शोषयति। तस्य शङ्कापि मां मरणपथगामिनीं करोति। अहो! किं वा भविष्यति सप्ततिवर्षदेशीयाया मातुर्मे शचीदेव्याः ? किं वा

भक्तजनस्य ? निखिलं भुवनं तव वदनकमलमवलोक्यैव जीवति, किं वा भवेत्तस्य ?

श्रीगौराङ्गः। विष्णुप्रिये! विश्वं कृष्णात्मकम्। कृष्णनामाजस्रं जप, तेनैव विश्वमाप्यायितं भविष्यति।

विष्णुप्रिया। मम कृष्णमहं सर्वदा सर्वथा पूजयामि, पूजयिष्यामि च। केवलं प्रार्थये न स मां परित्यज्य कदापि दूरं गच्छत्विति।

श्रीगौराङ्गः। देवि! शृणु। बहिर्गतोऽपि नाहं कदापि त्वां विहाय स्थास्यामि। तत्त्वतस्त्वया सह विरहः कदापि न संभवति।

विष्णुप्रिया। देव! त्वत्समाश्वासात् कृतकृतार्थास्मि।

श्रीगौराङ्गः। देवि! न समाश्वासनम् इयं सत्यमेव भूतार्थव्याहृतिः। मम सम्पर्कात्त्वमसि स्वयं प्रीतिमूर्तिः। मम भक्तजनसम्पर्कात् सा त्वमेव स्वयं भक्तिः। प्रीतिश्च भक्तिश्च त्वं स्वयमेव। त्वत्स्वरूपानुकारेण मम धर्मश्च भविषयति मातृमुखी प्रेमभक्तिधर्म इति। विष्णुप्रिये! अतः परं किं ते प्रियं करोमि ?

विष्णुप्रिया। इतोऽधिकं किं प्रियं स्यात् ? तथापीदमस्तु—

भवन्तु सुखिनः सर्वे भक्तिधर्मप्रसादिनः।
मधु क्षरतु सर्वत्र जगन्मधुमदस्तु नः॥ ११२॥
भक्तिमत्तं जगत् सर्वं कुरु नाथ जनार्दन।
प्रेमस्रोतो वहत्वत्र देवदेव निरञ्जन॥ ११३॥

---

समाप्तमिदं श्रीश्रीप्रीतिविष्णुप्रियं नाटकम्

---

